# आयुर्वेदविज्ञानम् ।

## प्रथमखण्डम् ।

### सूत्रशारीरद्रव्यस्थानञ्च ।

चरकसुश्रुतवाग्भटहारीतभावप्रकाशवङ्गसेनचक्रदत्त-
रसेन्द्रचिन्तामणिरसरत्नाकरप्रभृतिग्रन्थेभ्यः
पञ्जाबविश्वविद्यालयस्यायुर्वेदपरीक्षकेण तथा भैषज्यरत्नावली-
द्रव्याभिधानार्य्यगृहचिकित्साप्रभृतिग्रन्थप्रणेत्रा
**श्रीविनोदलालसेनगुप्तकविराजेन**
संगृहीतं प्रकाशितञ्च ।

# AYURVEDA VIJNANA

OR

HINDU SYSTEM OF MEDICINE COMPILED FROM SANSKRIT
TREATISES ON MEDICINE, SURGERY, CHEMISTRY &c

*Vol I*

*COMPILED AND PUBLISHED*
*BY*


## KAVIRAJ BINOD LAL SEN.

*Author of Vaishajya Ratnavali, Aryagriha Chikitsa &c.*
*and Examiner of Hindu system of medicine,*
*Punjab University*

*No. 36 Lower Chitpore Road*



*CALCUTTA.*

*Printed by Modhusudan Banerjee, at the Ayurveda Press.*
*No. 146 Lower Chitpore Road.*

*Price Rs. 4.*

# विज्ञापनम् ।

—०—

पुरा किल ज्ञानगरिमाम्बुधिस्तपःप्रभाववद्भिशाली कारुण्यनिलयो भगवानात्रेय इतस्ततो घोरैर्व्याधिभिर्भृशं पीड्यमानान् लोकानालोक्य व्यथितहृदयस्तेषां दुःखं हर्त्तु-काम आयुर्वेदमहाचार्य्यात् त्रिदिवपतेर्भगवतो मघोनः साङ्गमायुर्वेदमधीत्य पृथिव्यां प्रचारयामास । ततः प्रभृति ज्ञानविज्ञानसम्पन्नैर्बहुभिर्मुनिभिर्विविधानि चिकित्सा-तन्त्राणि प्रणीय जगतः परमोपकारः साधितः । परन्तु तन्त्राणां तेषां बहूनि कालगतिप्रभावादस्माकं दुरदृष्ट-वशाच्च विलोपं गतानि कतिचिच्च खण्डिताङ्गानि जातानि । कतिपयैर्दुरात्मभिरायॅधर्मादिद्वेषिभिर्मद्-भदीयधर्मावलम्बिभी राज्याधिकारवद्भिः पुरुषैरत्र दारुण आघातः कृतः । इत्यादिभिः कारणकूटैरायुर्वेदशास्त्रस्य तदनुसारिण्याश्चिकित्सायाश्च सम्यगादरहानिर्जाता । परन्तु अधुनातनैः सुसभ्यैर्विद्यामहिमविद्भिर्भूपालकल्पमापन्नैः इंराजराजपुरुषैर्महोदयैर्मत्स्यरूपिणा भगवता नारायणेन वेदस्येव शास्त्रस्यास्य समुद्धारार्थं महानायासः क्रियते ।

यानि सन्त्यायुर्वेदतन्त्राणि, दुर्बोधत्वाच्चिन्त्यमानानि तानि वि[illegible]विपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुन-रल्पबुद्धेः [illegible] परञ्च प्रायशः सर्वेष्वेव तन्त्रेषु बहून समास

एवार्थः प्रतिपादितः, बहवस्त्वर्था न हि वर्त्तमानकालीनानां मानवानामुपयोगिनः। इत्याकारैर्हेतुसंघैरस्माभिश्चरकसुश्रुतवाग्भटहारीतभावप्रकाशवङ्गसेनचक्रदत्तरसेन्द्रचिन्तामणिरसरत्नाकरप्रभृतिभ्यो विविधायुर्वेदग्रन्थेभ्यः सारं सारं समाकृष्य तथा अनुक्तचराणामस्माकमेव पुरुषपरम्परया व्यवहृतानां सहस्रशो दृष्टफलानामस्माभिराविष्कृतानाञ्च भेषजादीनां प्रयोगादिकं वर्णयित्वा आयुर्वेदविज्ञानाख्यः सुविस्तीर्णः संग्रहोऽयं निबद्धः। अयञ्च संग्रहश्चतुर्धा विभक्तः। प्रथमे सूत्रस्थानाख्येऽंशे पृथिव्यामायुर्वेदप्रचारक्रमः परिभाषाप्रकरणं वमनादिपञ्चकर्मविधिः क्षारपाकनियमः शोणितस्रावविधिर्गुणलक्षणादिकथनं नाड़ीनेत्रादिपरीक्षा यन्त्रशस्त्रादिवर्णनं धातुशोधनमारणादिविधिरित्यादयो विविधा विषया वर्णिताः। द्वितीये शारीरस्थानाख्येऽंशे नरदेहस्थितानामस्थ्यादीनां संख्यासंस्थानप्रकृतिप्रयोजनानि अन्नपरिपाकप्रकारो गर्भोत्पत्तिक्रमश्चेत्यादयो विषयास्तृतीये द्रव्यस्थानाख्येऽंशे द्रव्याणां गुणभावादयस्तथा चतुर्थे निदानचिकित्सितस्थानाख्ये व्याधीनां निदानलक्षणचिकित्सादयो विषयाः कथिताः। वस्तुतस्तु अत्र संग्रहे चिकित्साकर्मणि अवश्यज्ञेयः कोऽपि विषयो न परित्यक्तः। इतः प्रागेष संग्रहो वङ्गानुवादसहितो मुद्रितश्च। अधुनास्य मूलांश एव मुद्रितोऽभूत्। संग्रहस्यास्य निबन्धेऽस्माभिर्महान् यत्नः श्रमश्च कृतः। कीदृश एष जातः सहृदयेषु विद्वत्स्वेव तद्विचारभारः।

यथा नीरं परित्यज्य हंसैः क्षीरं प्रगृह्यते ।

तथा दोषं विहायास्य गुणः सद्भिः प्रगृह्यताम् ॥

संग्रहेऽस्मिन् आयुर्वेदपारदर्शिना प्रथितयशसा चिकित्सकशिरोमणिना पूज्यपादेन मम पितृव्यदेवेन श्रील-श्रीयुक्तचन्द्रकिशोरसेनकविराजेन विशिष्टा कृपादृष्टिर्विहिता तच्चरणभक्तिबलेनैवाहमस्य प्रकाशे समर्थ आसम् किमत्र बहुनोक्तेनेति । तथैवैतदप्यवश्यं वाच्यं मम चिर-सुहृदा आयुर्वेदविचक्षणेन वन्द्यवंश्येन पूज्यपादेन श्रीमता योगीन्द्रकुमारभिषजा एतस्य सङ्कलनादौ भूयान् श्रमः कृतः तत्कृत एष महोपकारश्चिराय मम हृदि जागरूको वर्त्तिष्यत इति ।

श्रीविनोदलालसेनगुप्तकविराजस्य ।

# सूचीपत्रम् ।

---

## प्रथमोऽध्यायः ।

| विषयः | | | | पृष्ठा |
|---|---|---|---|---|

चतुर्थोऽध्यायः ।



पञ्चमोऽध्यायः ।



षष्ठोऽध्यायः ।

अष्टादशोऽध्यायः ।

सप्तविंशोऽध्यायः ।



अष्टाविंशोऽध्यायः ।



ऊनत्रिंशोऽध्यायः ।



त्रिंशोऽध्यायः ।

द्विपञ्चाशत्तमोऽध्यायः ।



त्रिपञ्चाशत्तमोऽध्यायः ।



चतुःपञ्चाशत्तमोऽध्यायः ।



पञ्चपञ्चाशत्तमोऽध्यायः ।



षट्पञ्चाशत्तमोऽध्यायः ।



सप्तपञ्चाशत्तमोऽध्यायः ।



अष्टपञ्चाशत्तमोऽध्यायः ।



ऊनषष्टितमोऽध्यायः ।



षष्टितमोऽध्यायः ।

एकषष्टितमोऽध्यायः ।

द्विषष्टितमोऽध्याय: ।

---

# शारीरस्थानम्।

---

प्रथमोऽध्यायः।



द्वितीयोऽध्यायः।



तृतीयोऽध्यायः।



चतुर्थोऽध्यायः।



पञ्चमोऽध्यायः।



षष्ठोऽध्यायः।

सप्तमोऽध्यायः ।



अष्टमोऽध्यायः ।



नवमोऽध्यायः ।



दशमोऽध्यायः ।



एकादशोऽध्यायः ।



द्वादशोऽध्यायः ।



त्रयोदशोऽध्यायः ।

---

# द्रव्यस्थानम् ।

---

## प्रथमोऽध्यायः ।

### वृष्यवर्गः ।

द्वितीयोऽध्यायः ।

रसायनवर्गः ।

## तृतीयोऽध्यायः ।

### वातघ्नवर्गः ।



## चतुर्थोऽध्यायः ।

### पित्तघ्नवर्गः ।

अष्टमोऽध्याय: ।

अथ संग्राहिवर्ग: ।

## एकादशोऽध्यायः ।

### अथ मूत्रविरेचनीयवर्ग.

अष्टादशोऽध्यायः ।

अथ ज्वरघ्नवर्गः ।

विंशोऽध्यायः ।

अथ कण्डूघ्नवर्गः ।

## चतुर्विंशोऽध्यायः ।

### अथ पुष्पवर्गः ।

| विषयः | पृष्ठा |
| --- | --- |


पञ्चविंशोऽध्यायः ।

अथ फलवर्गः ।

| | |
| --- | --- |

अथ फलशाकानि ।

अथ नालशाकानि ।

अथ पक्षिणां नामानि गुणाश्च ।



अथ ग्राम्याणां लक्षणानि गुणाश्च ।



अथ कुलेचरवर्गः ।

त्रिंशोऽध्यायः।

अथ दधिवर्गः।

सप्तत्रिंशोऽध्यायः।

अथ तैलवर्गः।

अष्टात्रिंशोऽध्यायः ।

अथ मूत्रवर्गः ।



ऊनत्रिंशोऽध्यायः ।

अथ लवणक्षारवर्गः ।

---

## परिशिष्टम् ।

### अथ रसायनवर्गः ।

अथ वातघ्नवर्गः।

इति सूचिपत्रं समाप्तम्।

---

# आयुर्वेदविज्ञानम्।

## सूत्रस्थानम्।

## प्रथमोऽध्यायः।

मायाचक्रैर्विशालैः सृजति जगदिदं रक्षति प्रोच्छिनत्ति
चण्डः सौम्यो लघिष्ठो गुरुरतिशयितः स्थूलसूक्ष्माकृतिर्यः।
इच्छालीलाविहारी त्रिगुणमतिगतो विश्वरूप पुराण-
स्तं वन्देऽहं धरायां प्रणिपतितवपुः प्राञ्जलिर्विस्मितात्मा॥

आयुर्वेदस्य लक्षणं निरुक्तिश्च।

आयुर्हिताहित व्याधेर्निदानं शमनं तथा।
विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते॥
अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च।
तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः॥

आयुर्वेदावतरणम्।

आयुर्वेदागमन क्रमेण येनाभवद्भुमौ।
प्रथमं लिखामि तमहं नानातन्त्राणि संदृश्य॥

ब्रह्मणः प्रादुर्भावः।

विधाताथर्वसर्वस्वमायुर्वेदं प्रकाशयन्।
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्॥
तत प्रजापतिं दक्षं दक्षं सकलकर्म्मसु।
विधिर्धीनीरधिं साङ्गमायुर्वेदमुपादिशत्॥

दक्षप्रादुर्भावः ।

अथ दक्षः क्रियादक्षः स्वर्वैद्यौ वेदमायुषः ।
वेदयामास विद्वांसौ सूर्य्यांशौ सुरसत्तमौ ॥

अश्विनीसुतप्रादुर्भावः ।

दक्षादधीत्य दस्रौ वितनुत संहितां स्वीयाम् ।
सकलचिकित्सकलोकप्रतिपत्तिविवृद्धये धन्याम् ॥
स्वयम्भुवः शिरश्छिन्नं भैरवेण रुषाऽथ तत् ।
अश्विभ्यां संहितं तस्मात्तौ जातौ यज्ञभागिनौ ॥
देवासुररणे देवा दैत्यैर्ये सक्षताः कृताः ।
अक्षतास्ते कृताः सद्यो दस्राभ्यामद्भुतं महत् ॥
वज्रिणोऽभूत् भुजस्तम्भः स दस्राभ्यां चिकित्सितः ।
सोमान्निपतितश्चन्द्रस्ताभ्यामेव सुखीकृतः ॥
विशीर्णा दशनाः पुष्णो नेत्रे नष्टे भगस्य च ।
शशिनो राजयक्ष्माभूदश्विभ्यां ते चिकित्सिताः ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीर्य्यवर्णस्वरोपेतः कृतोऽश्विभ्यां पुनर्युवा ॥
एतैश्चान्यैश्च बहुभिः कर्म्मभिर्भिषजां वरौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां दिवौकसाम् ॥

इन्द्रप्रादुर्भावः ।

संदृश्य दस्रयोरिन्द्रः कर्म्माण्येतानि यत्नवान् ।
आयुर्वेदं निरुद्वेग तौ ययाचे शचीपतिः ॥
नासत्यौ सत्यसन्धेन शक्रेण किल याचितौ ।
आयुर्वेदं यथाधीतं ददतुः शतमन्यवे ॥
नासत्याभ्यामधीत्यैष आयुर्वेदं शतक्रतुः ।

अध्यापयामास बहूनात्रेयप्रमुखान् मुनीन् ॥

आत्रेयप्रादुर्भावः ।

एकदा जगदालोक्य गदाकुलमितस्ततः ।
चिन्तयामास भगवानात्रेयो मुनिपुङ्गवः ॥
किं करोमि क्व गच्छामि कथं लोका निरामयाः ।
भवन्ति सामयानेतान्न शक्नोमि निरीक्षितुम् ॥
दयालुरहमत्यर्थं स्वभावो दुरतिक्रमः ।
एतेषां दुःखतो दुःखं ममापि हृदयेऽधिकम् ॥
आयुर्वेदं पठिष्यामि नैरुज्याय शरीरिणाम् ।
इति निश्चित्य गतवानात्रेयस्त्रिदशालयम् ॥
तत्र मन्दिरमिन्द्रस्य गत्वा शक्रं ददर्श सः ।
सिंहासनसमासीनं स्तूयमानं सुरर्षिभिः ॥
भासयन्तं दिशो भासा भास्करप्रतिमं त्विषा ।
आयुर्वेदमहाचार्य्यं शिरोधार्य्यं दिवौकसाम् ॥
शक्रस्तु तं निरीक्ष्यैव त्यक्तसिंहासनो ययौ ।
तदग्रे पूजयामास भृशं भूरितपःक्रशम् ॥
कुशलं परिपप्रच्छ तथागमनकारणम् ।
स मुनिर्वक्तुमारेभे निजागमनकारणम् ॥
देव । राजन् । न राजासि दिव एव यतो भवान् ।
विधाता विहितो यत्नात् त्रिलोकीलोकपालकः ॥
व्याधिभिर्व्यथिता लोकाः शोकाकुलितचेतसः ।
भूतले सन्ति सन्तापं तेषां हन्तुं कृपां कुरु ॥
आयुर्वेदोपदेशं मे कुरु कारुण्यतो नृणाम् ।
तथेत्युक्त्वा सहस्राक्षोऽध्यापयामास तं मुनिम् ॥

मुनीन्द्र इन्द्रतः साङ्गमायुर्वेदमधीत्य सः ।
अभिनन्द्य तमाशीर्भिराजगाम पुनर्महीम् ॥
अथात्रेयो मुनिश्रेष्ठो भगवान् करुणाकरः ।
स्वनाम्ना संहितां चक्रे नरचक्रानुकम्पया ॥
ततोऽग्निवेशं भेडञ्च जातूकर्णं पराशरम् ।
क्षारपाणिञ्च हारीतमायुर्वेदमपाठयत् ॥
तन्त्रस्य कर्त्ता प्रथममग्निवेशोऽभवत् पुरा ।
ततो भेड़ादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ॥
श्रावयामासुरात्रेयं मुनिवृन्देन वन्दितम् ।
श्रुत्वा च तानि तन्त्राणि हृष्टोऽभूदत्रिनन्दनः ॥
यथावत् सूत्रितन्तस्मात् प्रहृष्टा मुनयोऽभवन् ।
दिवि देवर्षयो देवाः श्रुत्वा साध्विति तेऽब्रुवन् ॥

भरद्वाजप्रादुर्भावः ।

विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।
तपःस्वाध्यायधर्म्माणां ब्रह्मचर्य्यव्रतायुषाम् ॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।
समेताः पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे ॥
भरद्वाजोऽङ्गिरा गर्गो मरीचिर्भृगुभार्गवौ ।
पुलस्त्योऽगस्तिरसितो वशिष्ठः सपराशरः ॥
हारीतो गौतमः साङ्ख्यो मैत्रेयश्च्यवनोऽपि च ।
जमदग्निश्च गार्गश्च कश्यपः काश्यपोऽपि च ॥
नारदो वामदेवश्च मार्कण्डेयः कपिञ्जलः ।
शाण्डिल्यः सहकौण्डिन्यः शाकुनेयश्च शौनकः ॥
आश्वलायनसाङ्कृत्यौ विश्वामित्रः परीक्षकः ।

आयुर्वेदावतरणम् ।

देवलो गालवो धौम्यः काम्यकात्यायनावुभौ ॥
काङ्कायनो वैजवापः कुशिको बादरायणः ।
हिरण्याक्षश्च लौगाक्षिः शरलोमा च गोभिलः ॥
वैखानसा वालखिल्यास्तथैवान्ये महर्षयः ।
ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च ॥
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ।
सुखोपविष्टास्ते तत्र पुण्याश्चक्रुः कथामिमाम् ॥
धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च ॥
प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ।
कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ॥
अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ।
स वक्ष्यति शमोपायं यथावदमरप्रभुः ॥
कः सहस्राक्षभवनं प्रष्टुं गच्छेत् शचीपतिम् ।
अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ॥
भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ।
इत्थं स मुनिभिर्योग्यैः प्रार्थितो विनयान्वितैः ॥
भरद्वाजो मुनिश्रेष्ठो जगाम त्रिदशालयम् ।
तत्रेन्द्रभवनं गत्वा सुरर्षिगणमध्यगम् ॥
दृष्टवान् वृत्रहन्तारं दीप्यमानमिवानलम् ।
दृष्ट्वैव स मुनिं प्राह भगवान् मघवा मुदा ॥
धर्म्मज्ञ ! स्वागतं तेऽथ मुनिं तं समपूजयत् ।
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ॥
ऋषीणां वचनं सम्यक् श्रावयन् मुनिसत्तमः ।

व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः ॥
तेषां प्रशमनोपायं यथावद्वक्तुमर्हसि ।
तमुवाच मुनिं साङ्गमायुर्वेदं शतक्रतुः ॥
जीवेद्वर्षसहस्राणि देही नीरुङ् निशम्य यम् ।
सोऽनन्तपारं त्रिस्कन्धमायुर्वेद महामुनिः ॥
यथावदचिरात् सर्वं बुबुधे तन्मना मुनिः ।
तेनायुः सुचिरं लेभे भरद्वाजो निरामयम् ॥
अन्यानपि मुनींश्चक्रे नीरुजः सुचिरायुषः ।
तत्तन्त्रजनितज्ञानचक्षुषा ऋषयोऽखिला ॥
गुणान् द्रव्याणि कर्म्माणि दृष्ट्वा तद्विधिमाश्रिताः ।
आरोग्यं लेभिरे दीर्घमायुश्च सुखसंयुतम् ॥
आयुर्वेदोक्तविधिनान्येऽपि स्युर्मनवा यथा ॥

चरकप्रादुर्भाव ।

यदा मत्स्यावतारेण हरिणा वेद उद्धृतः ।
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ॥
अथर्व्वान्तर्गतं सम्यगायुर्वेदञ्च लब्धवान् ।
एकदा स महीवृत्तं द्रष्टुं चर इवागतः ॥
तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीड़ितान् ।
स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥
तान् दृष्ट्वातिदयायुक्तस्तेषां दुःखेन दुःखितः ।
अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥
सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह ।
प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ॥
यतश्चर इवायातो न ज्ञातः केनचिद् यतः ।

तस्माच्चरकनाम्नासौ विख्यातः क्षितिमण्डले ॥
स भाति चरकाचार्य्यो वेदाचार्य्यो यथा दिवि ।
सहस्रवदनस्यांशो येन ध्वंसी रुजां कृतः ॥
आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् ।
मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ॥
तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ।
चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥

धन्वन्तरिप्रादुर्भावः ।

एकदा देवराजस्य दृष्टिर्निपतिता भुवि ।
तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीड़िताः ॥
तान् दृष्ट्वा हृदयं तस्य दयया परिपीड़ितम् ।
दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह ॥
धन्वन्तरे ! सुरश्रेष्ठ ! भगवन् ! किञ्चिदुच्यते ।
योग्यो भवसि भूतानामुपकारपरो भव ॥
उपकाराय लोकानां केन किं न कृतं पुरा ।
त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् ॥
तस्मात् त्वं पृथिवीं याहि काशीमध्ये नृपो भव ।
प्रतीकाराय रोगाणामायुर्वेदं प्रकाशय ॥
इत्युक्त्वा सुरशार्दूलः सर्वभूतहितेप्सया ।
समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ॥
अधीत्य चायुषो वेदमिन्द्राद् धन्वन्तरिः पुरा ।
आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ।
नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ ।
बाल एव विरक्तोऽभूच्चचार सुमहत्तपः ॥

यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम्।
ततो धन्वन्तरिर्लोकैः काशीराजोऽभिधीयते॥
हिताय देहिना स्वीया संहिता विहितामुना।
अर्थं विद्यार्थिनो लोकान् संहितां तामपाठयत्॥

सुश्रुतप्रादुर्भावः।

अथ ज्ञानदृश्या विश्वामित्रप्रभृतयोऽविदन्।
अय धन्वन्तरिः काश्यां काशीराजोऽयमुच्यते॥
विश्वामित्रो मुनिस्तेषु पुत्रं सुश्रुतमुक्तवान्।
वत्स। वाराणसीं गच्छ त्वं विश्वेश्वरवल्लभाम्॥
तत्र नाम्ना दिवोदासः काशीराजोऽस्ति बाहुजः।
स हि धन्वन्तरिः साक्षादायुर्वेदविदां वरः॥
आयुर्वेदं ततोऽधीत्य लोकोपकृतिहेतवे।
सर्वप्राणिदयातीर्थमुपकारी महामख:॥
पितुर्वचनमाकर्ण्य सुश्रुतः काशिकां गतः।
तेन सार्द्धं समध्येतुं मुनिसूनुशतं ययौ॥
अथ धन्वन्तरिं सर्वे वानप्रस्थाश्रमे स्थितम्।
भगवन्त सुरश्रेष्ठं मुनिभिर्बहुभिः स्तुतम्॥
काशीराजं दिवोदासं तेऽपश्यन् विनयान्विताः।
स्वागतञ्च इतिस्माह दिवोदासो यशोधनः॥
कुशलं परिपप्रच्छ तथागमनकारणम्।
ततस्ते सुश्रुतद्वारा कथयामासुरुत्तरम्॥
भगवन्। मानवान् दृष्ट्वा व्याधिभिः परिपीड़ितान्।
क्रन्दतो म्रियमाणांश्च जातास्माकं हृदि व्यथा॥
आमयानां शमोपायं विज्ञातुं वयमागताः।

आयुर्वेदं भवानस्मानध्यापयतु यत्नतः॥
अङ्गीकृत्य वचस्तेषां नृपतिस्तानुपादिशत्।
व्याख्यातं तेन ते यत्नाज्जगृहुर्मुनयो मुदा॥
काशीराजं जयाशीर्भिरभिनन्द्य मुदान्विताः।
सुश्रुताद्याः सुसिद्धार्था जग्मुर्गेहं स्वकं स्वकम्॥
प्रथमं सुश्रुतस्तेषु स्वतन्त्रं कृतवान् स्फुटम्।
सुश्रुतस्य सखायोऽपि पृथक् तन्त्राणि तेनिरे॥
सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुभिर्यतः।
तस्मात् तत् सुश्रुतं नाम्ना विख्यातं क्षितिमण्डले॥
ततः काले व्यतीते तु वाभटो भिषजां वरः।
प्रादुर्बभूव धरणौ धन्वन्तरिरिवापरः॥
आसीद्राजाधिराजस्य सत्यसन्धस्य धीमतः।
ज्ञानिनः पाण्डवाग्र्यस्य सभायां सुचिकित्सकः॥
प्रबन्धा बहवस्तेन प्रणीता हितकाम्यया।
तेषामष्टाङ्गहृदयसंहिता प्रथिता भुवि॥
सा वाभटाभिधानेन ख्याता धरणिमण्डले।
चरकात् सुश्रुताच्चैव तन्त्रेभ्योऽन्येभ्य एवच॥
संगृहीता प्रयत्नेन लोकानुग्रहहेतवे।
विचित्रं कौशलं त्वास्यां चिकित्सासु प्रदर्शितम्॥
अनयोपकृतं सर्वं जगदेतन्न संशयः।

भूतानुकम्पाप्रवणो महेशः
श्मशानवासी जगदादिनाथः।
स्ववीर्य्ययुक्तागदयोगरत्नैः
कीर्णानि तन्त्राणि बहूनि चक्रे॥

रसप्रबन्धास्त्वधुनातना ये
तन्मूलका एव कृताः सुधीभिः ।
सृष्टिस्थितिध्वंसकृतोऽखिलाना-
मनादिनाथस्य महाप्रसादात् ॥

रसग्रन्थेषु तन्त्रेषु धातुशोधनमारणे ।
विवृते च विशेषेण रसराजस्य संस्कृतिः ॥

चरकादौ रसादीनां प्रयोगो नच दृश्यते ।
अत. प्रचार एतेषां हिताय जगतां मत' ॥

अथ सिद्धो नित्यनाथः पार्वतीतनयः सुधीः ।
रसरत्नाकराख्यञ्च रसग्रन्थं प्रणीतवान् ॥

रसेन्द्रचिन्तामणिनामधेयं
टुण्टूकनाथो भिषगग्रगण्यः ।
रसेन्द्रयुक्तैर्विविधैश्चकार
सुभेषजैः कीर्णमतीव चित्रम् ॥

अन्येऽपि बहवो धीरा रसग्रन्थान् प्रतेनिरे ।
सर्व एव हि ते ग्रन्था आश्चर्य्यफलदायिनः ॥

श्रीमाधवकरश्चेन्द्रसूनुः सूरितमो भिषक् ।
नानाशास्त्रोद्धृतं चक्रे संग्रहं रुग्विनिश्चयम् ॥

भ्रमद्भ्यो व्याधिचक्रेभ्यो रक्षितु' ह्यबलान् नरान् ।
नानातन्त्रप्रसूनेभ्यो मधून्याहृत्य यत्नतः ॥

शास्त्रचक्राणि संघूर्ण्य दृष्ट्वा सम्यक् फलाफलम् ।
चक्रपाणिश्चिकित्सात्ममधुचक्रं प्रणीतवान् ॥

अन्ये चक्रकृते रीतिवैशद्य' परिदर्शितम् ।
चिकित्सायां विशेषेण स्नेहादिपचने तथा ॥

नान्यस्मिन् दृश्यते चेदृग् ग्रन्थे कौशलबन्धनम् ।
चिरं विद्योतता सूरिहृदयेऽयं सुसंग्रहः ॥

नाम्ना श्रीनरसिंहपण्डितवरः काश्मीरदेशोद्भवो
नानाकोषमहाब्धिमन्थनगतं रत्नोच्चयं यत्नतः ।
एकीकृत्य निबन्धबन्धनमहो निर्घण्टुराजाभिधं
चक्रे लोकहितेप्सया हितकरं द्रव्याभिधानार्थकम् ॥
कोषात्तस्मात् तथान्येभ्यो द्रव्याणि तद्गुणान् गुणान् ।
सामग्र्येण समालोच्य क्रियास्माभिर्विधीयते ॥

आसीन्मद्रे जनपदे विप्रो विद्वत्कुलोत्तमः ।
शिरोमणिः सद्भिषजां धन्वन्तरिरिव क्षितौ ॥
शास्त्राणां पारदृक् सम्यक् श्रीभावमिश्रनामकः ।
वाराणस्यामवस्थाय भूमिपानां महात्मनाम् ॥
बहूनां बहुधा सम्यग् रुजां कृत्वा प्रतिक्रियाम् ।
प्रतिष्ठां महतीं भूमौ लब्धवान् साधुपूजितः ॥
शिष्यानध्यापयन्तेस्म यो वेदशतसंख्यकान् ।
महारत्नानि चोद्धृत्य आयुर्वेदमहाम्बुधेः ॥
ग्रन्थं भावप्रकाशाख्यं जगतां हितकाम्यया ।
प्रणीतवान् प्रयत्नेन वैद्यानामुपकारकम् ॥
आयुर्वेदप्रबन्धानां ग्रन्थः स चरमः स्मृतः ।
पूर्वाचार्य्यैः प्रणीतेषु पूजनीयैर्महर्षिभिः ॥
तन्त्रेषु यानि रत्नानि तान्यत्रापि प्रधानतः ।
लभ्यन्तेऽन्यदपि बहु यत् क्वापि न च दृश्यते ॥
पारस्यादिप्रदेशेषु जाता ओषधयश्च याः ।
आचार्य्येण गृहीतास्ताः पूर्वाचार्य्यैर्न तद्‌ धृतम् ॥

व्याधिः फिरङ्गकाख्यस्य लिखितश्चात्र लक्षणम्।
तस्य प्रतिक्रिया चापि तन्त्रेऽन्यस्मिन् न दृश्यते॥
अतः प्रतीयते चायुःशास्त्राणां चरमोन्नतिः।
जाता श्रीभावमिश्रस्य समये कुशलप्रदे॥
तदिमं चरमं ग्रन्थं प्रधानमवलम्बनम्।
कृत्वा मूर्द्ध्ना प्रणेतारं कोटिकृत्व प्रणम्य च॥
चरकात् सुश्रुताच्चापि ग्रन्थेभ्योऽन्येभ्य एव च।
समाकृष्य विशेषेण योगरत्नानि यत्नतः॥
यथाबुद्धि यथाज्ञानमस्माभिः क्रियते श्रमः।
तन्त्रोक्तव्यतिरिक्तानि निबन्धेऽत्र बहून्यपि॥
सततं परिदृश्यानि रुजा रूपाणि यानि च।
भेषजानि निबन्धानि तथा दृष्टफलानि च॥

आयुर्वेदस्याष्टौ विभागाः।

इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्वयम्भूः। ततोऽल्पायुष्ट्वमल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्। तद् यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति।

तत्र शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्च। १।

शालाक्यं नाम ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम्। २।

कायचिकित्सा नाम सर्वाङ्गसंसृतानां व्याधीनां ज्वरातीसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थम्। ३।

भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थम्। ४।

कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम्। ५।

अगदतन्त्रं नाम सर्पकीटलूतावृश्चिकमूषिकादिविषव्यञ्जनार्थं विविधविषसयोगविषोपहतोपशमनार्थम्। ६।

रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च। ७।

वाजीकरणतन्त्रं नाम अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्रसादोपचयजननिमित्तं प्रहर्षजननार्थञ्च। ८।

एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते।

इहायुर्वेदविज्ञाने प्रबन्धेऽस्मतकृते शुभे।

दोषांस्त्यक्त्वा गुणान् धीरा गृह्णन्तु करुणापराः॥

---

# द्वितीयोऽध्यायः ।

---

## अथ परिभाषाध्यायः ।

अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिका ।
परिभाषाः प्रकथ्यन्ते दीपभूताः सुनिश्चिताः ॥

तत्र प्रथमतो मानसूत्रं लिख्यते ।

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ।
अतः प्रयोगकार्य्यार्थं मानमत्रोच्यते मया ॥

तत्तु मतभेदान्नानाविधं भवति ।

### कालिङ्गपरिभाषा ।

जालान्तरगतैः सूर्य्यकरैर्ध्वंसो विलोक्यते ।
षड्ध्वंसीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ॥
तिसृभीराजिकाभिश्च सर्षपः प्रोच्यते बुधैः ।
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥
षड्भिश्च रक्तिकाभिः स्यान्माषको हेमधान्यकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरणं तन्निगद्यते ॥
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रकोटरकश्चापि द्रङ्क्षणः स निगद्यते ॥
कोलद्वयन्तु कर्षः स्यात्स प्रोक्तः पाणिमानिकः ।
अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ॥
विडालपदकञ्चैव तथा षोड़शिका मता ।
करमध्यो हंसपदं सुवर्णं कवड़ग्रहः ॥

उदुम्बरश्च पर्य्यायैः कर्ष एव निगद्यते।
स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा॥
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिमानञ्चतुर्थिका।
प्रकुञ्चः षोड़शी विल्वं पलमेवात्र कीर्त्त्यते॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते।
प्रसृतिभ्यामञ्जलिः स्यात् कुडवोऽर्द्धशरावकः॥
अष्टमानञ्च स ज्ञेयः कुड़वाभ्याञ्च माणिका।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः॥
शरावाभ्यां भवेत् प्रस्थं चतुःप्रस्थैस्तथाढ़कम्।
भाजनं कंसपात्रं च चतुःषष्टिपलञ्च तत्॥
चतुर्भिराढ़कैर्द्रोणः कलसो नल्वणोऽर्म्मणः।
उन्मानञ्च घटो राशिर्द्रोणपर्य्यायसंज्ञितः॥
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः।
सूर्पाभ्याञ्च भवेद्द्रोणी वृहद्द्रोणी च सा स्मृता॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः।
चतुःसहस्रपलिका षण्णवत्यधिका च सा॥
पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः।
तुला पलशतं ज्ञेयं सर्वत्रैष विनिश्चयः॥
माषटङ्काक्षविल्वानि कुड़वः प्रस्थ आढ़कः।
राशिर्द्रोणी खारी चेति यथोत्तरचतुर्गुणाः॥
गुञ्जादिमानमारभ्य यावत् स्यात् कुड़वस्थितिः।
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम्॥
प्रस्थादिमानमारभ्य द्विगुणन्तु द्रवार्द्रयोः।
मानं तथा तुलायाश्च द्विगुणं न क्वचित् स्मृतम्॥

मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् ।
विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् ॥

मागधपरिभाषा ।

त्रसरेणुस्तु विज्ञेयस्त्रिंशता परमाणुभिः ।
त्रसरेणुस्तु पर्य्यायनाम्ना वंशी निगद्यते ॥
षड्वंशीभिश्च मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः ।
षट्सर्षपैर्यवस्त्वेको गुञ्जैका तु यवैस्त्रिभिः ॥
गुञ्जाभिर्दशभिः प्रोक्तो माषको ब्रह्मणा पुरा ।
हेमश्च धामकश्चैव पर्य्यायस्तस्य कीर्त्तितः ॥
चतुर्भिर्माषकैः शाणः स निष्काष्टकमेव च ।
शाणौ द्वौ द्रङ्क्षणं विद्यात्कोलं वटकमेव च ॥
कर्षार्द्धं द्विगुणं कर्षं सुवर्णञ्चाक्षमेव च ।
किञ्चिद्विडालपदकं पिचुः पाणितलं तथा ॥
उडुम्बरं तिन्दुकञ्च कवडग्रहमेव च ।
द्वे सुवर्णे पलार्द्धं स्यात् शुक्तिरष्टमिका तथा ॥
द्वे पलार्द्धे पलं मुष्टिः प्रकुञ्चश्च चतुर्थिका ।
विल्वं षोड़शिकाम्रञ्च द्वे पले प्रसृतं विदुः ॥
कुडवः प्रसृताभ्यां स्यादञ्जलिः स निगद्यते ।
अष्टमानं शरावार्द्धं तस्य पर्य्याय एव च ॥
कुडवाभ्यां माणिका स्यात् शरावोऽष्टपलं तथा ।
माणिकाभ्यां भवेत्प्रस्थो ज्ञेयः षोडशभिः पलैः ॥
चतुःप्रस्थैराढकः स्यात्पात्रं कंसश्च भाजनम् ।
अयं भिषग्भिराख्यातस्तु षष्टिपलैरिह ॥
चतुर्भिराढ़कैर्द्रोणः कथितः पूर्वसूरिभिः ।

घटः कलस उन्मानो नल्वणोऽर्म्मण एव च ॥
द्रोणपर्य्यायनामानि कीर्त्तितानि भिषग्वरैः।
अयञ्च पलसंख्यातः षट्पञ्चाशत् शतद्वयम् ॥
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः।
सूर्पाभ्याञ्च भवेद्द्रोणी वृहद्द्रोणी च सा स्मृता ॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः।
चतुःसहस्रपलिका षणवत्यधिका च सा ॥
तुला पलशतं प्रोक्तं भारः स्याद्विंशतिस्तुला।
पलानां द्विसहस्राणि भारः परिमितो वुधैः।
माषकः शाणतिन्दूके पलं कुडवप्रस्थकौ ॥
राशिर्द्रोणी खारी चेति यथोत्तरचतुर्गुणाः।
शुष्कद्रव्येष्विदं मानं द्विगुणन्तु द्रवार्द्रयोः ॥
ज्ञातव्यं कुडवादूर्द्ध्वं प्रस्थादिश्रुतिमानतः।
कुडवेऽपि क्वचिद्द्वित्वं यथा दन्त्योष्ठते स्मृतम् ॥
अनित्या परिभाषेयं यथादर्शनमुच्यते।
अष्टौ पलानि कुडवो नारिकेले तथैव च ॥
अन्यच्च। कुड़वे माणिकायाञ्च तुलामाने तथैव च।
पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते ॥
शुष्कद्रव्ये तु या मात्रा चार्द्रस्य द्विगुणा हि सा।
शुष्कस्य गुरुतीक्ष्णत्वात् तस्मादर्द्धं प्रकीर्त्तितम् ॥

अस्यापवादः।

वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरो-
वर्षाभूकुटजाश्वगन्धसहितास्ताः पूतिगन्धामृताः।
मांसं नागबला सहाचरपुरी हिङ्ग्वार्द्रके नित्यशो

ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता घनाः॥

अन्यच्च। गुडूची कुटजो वासा कुष्माण्डश्च शतावरी।
अश्वगन्धासहचरी शतपुष्पा प्रसारणी॥
प्रयोक्तव्याः सदैवार्द्रा द्विगुणा नैव कारयेत्।

अन्यच्च। वासाकुटजकुष्माण्डशतपुष्पाः शतावरी।
प्रसारण्यश्वगन्धा च नागाख्यातिबला बला॥
नित्यमार्द्राः प्रयोक्तव्या न तासां द्विगुणं भवेत्॥
तत्रालिङ्गं द्वादशभीरक्तिभिर्माषकः स्मृतः।

द्रव्याणामुपयुक्तानुपयुक्तत्वमाह।

शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्म्मसु।
आर्द्रन्तु द्विगुणं दद्यादेष सर्वत्र निश्चयः॥
द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ।
ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः॥

व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत् त्यजेत्।
अनुक्तमपि युक्तं यद्योजयेत्तत्र तद्बुधः॥

अथ पञ्चकषायाः।

स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ।
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम्॥

तत्रादौ स्वरसविधिः।

आहतात्तत्क्षणाकृष्टाद्द्रव्यात् क्षुण्णात्समुद्भवेत्।
वस्त्रनिष्पीड़ितो यश्च रसः स्वरस उच्यते॥

आहतात् शीताग्निकीटादिभिरनुपहतात्। क्षुण्णात् संपिष्टात्।

कुड़वं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले।

अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ॥
आदाय शुष्कद्रव्यं वा स्वरसानामसम्भवे ।
जलेऽष्टगुणिते साध्यं पादशिष्टञ्च गृह्यते ॥
स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत् ॥

कल्कविधिः ।

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ।
प्रक्षिप्य गालयेद्वस्त्रे तन्मानं कोलसम्मितम् ॥

क्वाथविधिः ।

पानीयं षोड़शगुणं क्षुण्णे द्रव्यपले क्षिपेत् ।
मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् ॥
कर्षादौ तु पलं यावद्दद्यात् षोड़शिकं जलम् ।
ततस्तु कुड़वं यावत्तोयमष्टगुणं क्षिपेत् ॥
चतुर्गुणमतस्तोर्द्ध्वं यावत् प्रस्थादिकं जलम् ।
तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् ॥
शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते ।
मात्रोत्तमा पलेन स्यात्त्रिभिरक्षैस्तु मध्यमा ॥
जघन्या तु पलार्द्धेन स्नेहक्वाथौषधेषु च ॥

पाने क्वाथ्यादिद्रव्यव्यवस्था ।

दशरत्तिकमानेन गृहीत्वा तोलकद्वयम् ।
दत्त्वाम्भः षोड़शगुणं ग्राह्यं पादावशेषितम् ॥

हिमविधिः ।

क्षुण्णं द्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम् ।
निशोषितं हिमः स स्यात्तथा शीतकषायकः ॥
तस्य मानं मतं पाने पलद्वयमितं बुधैः ॥

मन्थविधिः। जले चतुःपले शीते क्षुसं द्रव्यपलं क्षिपेत्।
मृत्पात्रे मन्थयेत्सम्यक् तस्माच्च द्विपल पिबेत्॥

अवान्तरभेदात्तण्डुलोदकमाह।

तण्डुलं कण्डशः कृत्वा पलं ग्राह्यं हि तण्डुलात्।
चतुर्गुणं जलं देयं तण्डुलोदककर्म्मणि॥
शीतकषायमानेन तण्डुलोदककल्पना॥

फाण्टविधिः।

क्षुसे द्रव्यपले सम्यग् जलमुष्णं विनिःक्षिपेत्।
मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत्पटात्॥
स स्याच्चूर्णद्रवः फाण्टस्तन्मानं द्विपलोन्मितम्॥

चूर्णविधिः।

अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम्।
तत्स्याच्चूर्णं रजः क्षोदस्तस्य पर्य्याय उच्यते॥

भावनाविधिः।

द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत्।
भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः॥
भाव्यद्रव्यसमं क्वाथ्यं क्वाथ्यादष्टगुणं जलम्।
अष्टांशशेषितः क्वाथो भाव्यानां तेन भावना॥
दिवा दिवातपे शुष्कं रात्रौ रात्रौ निवासयेत्।
शुष्कं चूर्णीकृतं द्रव्यं सप्ताहं भावनाविधिः॥

पुटपाकविधिः।

पुटपक्वस्य कल्कस्य स्वरसो गृह्यते यतः।
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया॥
द्रव्यमापोथितं जम्बूवटपत्रादिसम्पुटे।

वेष्टयित्वा ततो बद्धा दृढं रज्ज्वादिना तथा ॥
मृल्लेपं द्व्यङ्गुलं कुर्य्यादथवाङ्गुलिमात्रकम् ।
दहेत्पुटान्तरादग्नौ यावल्लेपस्य रक्तता ॥

उष्णोदकविधिः ।

अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा ।
अथवा क्वथनेनैव सिद्धमुष्णोदकं भवेत् ॥
श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम् ।
कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि ॥

अवलेहविधिः ।

क्वाथादेर्यत्पुनः पाकाद्घनत्वं सा रसक्रिया ।
सोऽवलेहश्च लेहश्च प्राग्य इत्युच्यते बुधैः ॥
सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुडः ।
द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः ॥
सुपक्वे तन्तुमत्त्वं स्यादवलेहेऽप्सु मज्जनम् ।
स्थिरत्वं पीडिते मुद्रा गन्धवर्णरसोद्भवः ॥

वटकाविधिः ।

वटका अथ कथ्यन्ते तन्नाम वटिका वटी ।
मोदको गुड़िका पिण्डी गुडो वर्त्तिस्तथोच्यते ॥
लेहवत्साध्यते वह्नौ गुड़ो वा शर्करायथवा ।
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्म्मिता वटी ॥

तत्र वह्निसिद्धे गुडादौ ।

कुर्य्यादवह्निसिद्धेन क्वचिद्गुग्गुलुना वटीम् ।
द्रवेण मधुना वापि गुटिकां कारयेद्बुधः ॥
सिता चतुर्गुणा देया वटीषु द्विगुणो गुड़ः ।

चूर्णं चूर्णसमः कार्य्यो गुग्गुलुर्मधु तत्समम् ॥
द्रवन्तु द्विगुणं देयं मोदकेषु भिषग्वरैः ॥

चूर्णस्य पाकनिषेधमाह ।

प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य तेन हि ।
आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते ॥

आसन्नपाके उपस्थितपाके न तु पाकमापन्ने तथा सति प्रचुरचूर्णानां प्रवेशो न स्यादित्यर्थः। स्वल्पस्य चूर्णस्य पाकान्ते कदुष्णदशायां प्रक्षेप इति ।

अथाणुवटिकाविधिः ।

धात्वादीनामुद्भिदां वा चूर्णमुक्तैर्द्रवैः प्लुतम् ।
अनुक्ते तोययोगेन विमर्द्य विदधीत च ॥
यवसर्षपगुञ्जादिप्रमाणां वटिकां भिषक् ।
अनिर्द्दिष्टवटीसिद्धौ प्रायो गुञ्जात्मिका मितिः ॥
तत्सेवनं यथादोषमनुपानेन चेष्यते ॥

रसचूर्णम् ।

रसराजयुतं बलिहैममुखं
विधिना पुटितमनु शैत्यगतम् ।
उपनीय ततः परिमर्द्दयतां
रसचूर्णमिदं कथितं मुनिभिः ॥

———

# तृतीयोऽध्यायः ।

---

स्नेहपाकस्य साधारणो विधिः ।

तत्र तैलमूर्च्छाविधिः ।

तत्रादौ तिलतैलमूर्च्छा ।

कृत्वा तैलं कटाहे दृढ़तरविमले मन्दमन्दानलैस्तत्
तैलं निष्फेनभावं गतमिह यदा शैत्ययुक्तं तदैव ।
मञ्जिष्ठारात्रिलोध्रैर्जलधरनलिकैः सामलैः साक्षपथ्यैः
सूचीपत्राङ्घ्रिनीरैरुपहितमथितैर्गन्धयोगं जहाति ॥
तैलस्येन्दुकलांशिकैकविकसाभागोऽपि मूर्च्छाविधौ
ये चान्ये त्रिफलापयोदरजनीह्रीवेरलोध्रान्विताः ।
सूचीपुष्पवटावरोहनलिकास्तस्याश्च पादांशिका ।
दुर्गन्धं विनिहन्ति तैलमरुणं सौरभ्यमाकुर्वते ॥

कटुतैलमूर्च्छा ।

वयःस्थारजनीमुस्तविल्वदाडिम्बकेशरैः ।
कृष्णजीरकह्रीवेरनलिका स्त्रभीतके ॥
एते. समांशैः प्रस्थे च कर्षमात्र प्रयोजयेत् ।
अरुणादिपलं तत्र तोयञ्चाढ़कसम्मितम् ॥
कटुतैल पचेत्तेन आमदोषोपशान्तये ॥

एरण्डतैलमूर्च्छा ।

विक्रमा मुस्तक धान्यं त्रिफला वैजयन्तिका ।
ह्रीवेरवनखर्ज्जूरवटशुङ्गानिशायुगम् ॥
नलिका भेषजं देयं केतकी च समं समम् ।

प्रस्थे देयं श्रुक्तिमित मूर्च्छने दधिकाञ्जिकम् ॥

घृतमूर्च्छा ।

पथ्याधात्रीविभीतैर्जलधररजनीमातुलुङ्गद्रवैश्च
द्रव्यैरेतैः समस्तैः पलकपरिमितैर्मन्दमन्दानलेन ।
आज्यप्रस्थं विफेनं परिचपलगतं मूर्च्छयेद्वैद्यराज-
स्तस्मादामोपदोषं हरति च सकलं वीर्य्यवत्सौख्यदायि ॥

वातहरतैलानां विशेषमूर्च्छाविधिः ।

आम्रजम्बूकपित्थानां वीजपूरकविल्वयोः ।
गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम् ॥
पञ्चपल्लवतोयेन गन्धानां चालनं मतम् ॥

स्नेहपाकस्य कालनियमः ।

मूर्च्छा स्यात्सप्तभिः सिद्धा रात्रिभिर्बुधसम्मता ।
व्रीहिप्रास्थद्वयोः पाकः सद्यः सिध्यति नान्यथा ॥
स्यात्पाकः पयसो द्वाभ्यां स्वरसादेस्तु तिसृभिः ।
दधिकाञ्जिकतक्राणां सिद्धो भवति पञ्चभिः ॥
मूत्रादीनामेकया स्यात्तत्र कल्कस्य सप्तभिः ।
गन्धानां पञ्चभिर्ज्ञेयः स्नेहपाके क्रमोऽप्ययम् ॥

स्नेहसाधने क्वाथ्यजलादेः
परिमाणमाह ।

निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम् ।
पादशिष्टं गृहीत्वा तु स्नेहस्तेनैव साधयेत् ॥
चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम् ।
कुडवादिक्वाथ्यसंघाते दद्यादष्टगुणं पयः ॥
अत्यन्तकठिने द्रव्ये नीरं षोड़शिकं मतम् ॥

अन्यच्च। कर्षादितः पलं यावत् क्षिपेत् षोड़षिकं जलम्।
तदूर्द्ध्वं कुड़व यावद्भवेदष्टगुणं पयः॥
प्रस्थादितः क्षिपेन्नीर खारीं यावच्चतुर्गुणम्॥
तुलाद्रव्ये जलद्रोणो द्रोणेद्रव्यतुला मता।
अनिर्द्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते।
जलस्नेहौषधानाञ्च प्रमाणं यत्र नेरितम्।
तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम्॥
स्नेहसिद्धौ द्रव्येऽनुक्ते सर्वत्राम्भश्चतुर्गुणम्।
गन्धद्रव्याणि चेच्छन्ति कल्कस्यार्द्धांशिकानि च॥
स्नेहपाकविधौ यत्र क्षीरमेकन्तु कथ्यते।
तोयादीनामनिर्द्देशे क्षीरमेव चतुर्गुणम्॥
द्रवान्तरेण योगे तु क्षीरं स्नेहसमं विदुः॥
वृन्दस्त्वाह। स्वरसक्षीरमाङ्गल्यैः पाको यत्रेरितः क्वचित्।
जल चतुर्गुण तत्र वीर्य्याधानार्थमावपेत्॥
न मुञ्चति रस द्रव्यं क्षीरादिभिरुपस्कृतम।
सम्यक् पाको न जायेत तस्मात्तोयं चतुर्गुणम्॥
पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसविधौ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्॥
अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम्।
कल्कस्यांशं तत्र दद्याच्चतुर्थं षष्ठमष्टमम्॥
दुग्धे दधि रसे तक्रे कल्को देयोऽष्टमांशिकः।
कल्काच्च सम्यक् पाकार्थं तोयमत्र चतुर्गुणम्॥
कल्कात् कल्कद्रव्यात् चतुर्गुणं तोयं पेयणार्थम्।
क्वाथेन केवलेनैव पाको यत्रोदितः क्वचित्।

क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ॥
कल्कहीनस्तु यः स्नेहः स साध्यः केवले द्रवे ॥
केवले द्रवे क्वाथितरस्मिन् स्वरसादिरूपे।
पुष्पकल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम्।
स्नेहात् स्नेहाष्टमांशश्च पुष्पकल्कः प्रयुज्यते ॥
आदौ कल्कः प्रदातव्यो गन्धद्रव्यं ततः परम्।
तैलसुगन्ध्यर्थे दातव्यं शिह्लकं कुङ्कुमं नखम् ॥
गन्धचन्दनकर्पूरमेलावीजं लवङ्गकम् ॥

गन्धद्रव्याणि।

एलाचन्दनकुङ्कुमागुरुमुराकक्कोलमांसीशटी-
श्रीवासच्छदग्रन्थिपर्णशशभृत्चौणीभजोशीरकम्।
कस्तूरीनखपूतितैलजलमुञ्जेथीलवङ्गादिकं
गन्धद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु ॥

स्नेहपाकपरिज्ञानम्।

वर्त्तिवत् स्नेहकल्कः स्याद्यदाङ्गुल्या विवर्त्तितः।
शब्दहीनोऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा ॥
यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि।
वर्णगन्धरसोत्पत्तिः स्नेहः सिद्धो भवेत्तदा ॥
स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा।
ईषत्स्वरसकल्कस्तु स्नेहपाको मृदुर्भवेत् ॥
मध्यपाकस्य सिद्धिश्च कल्के नीरसकोमले।
ईषत्कठिनकल्कश्च स्नेहपाको भवेत् खरः ॥
तदूर्द्धं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः।
आमपक्वश्च निर्वीर्य्यो वह्निमान्द्यकरो गुरुः ॥

नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्म्मसु ।
अभ्यङ्गार्थे खरः प्रोक्तो युञ्ज्यादेवं यथोचितम् ॥
घृततैलगुडादींश्च साधयेन्नैकवासरे ।
प्रकुर्वन्त्युषितास्त्वेते विशेषाद्गुणसञ्चयम् ॥

---

## चतुर्थोऽध्यायः ।

---

अथ द्रव्याणां मात्राविधिर्लिख्यते ।
स्थितिर्नास्त्येव मात्रायाः कालमग्निं बलं वयः ।
प्रकृतिं देशदोषौ च दृष्ट्वा मात्रां प्रकल्पयेत् ॥
नाल्पं हन्त्यौषधं व्याधिं यथाल्पाम्बु महानलम् ।
दोषवच्चातिमात्र स्यात् शस्यमत्युदकं यथा ॥
मात्रया हीनया द्रव्यं विकारं न निवर्त्तयेत् ।
द्रव्याणामतियोगाच्च व्यापत्संजायते ध्रुवम् ॥

द्रव्यप्रतिनिधिः ।

कदाचिद्द्रव्यमेकं वा योगे यत्र न लभ्यते ।
तत्तद्गुणयुत द्रव्यं परिवर्त्तेन गृह्यते ॥
मधु यत्र न विद्येत तत्र जीर्णो गुड़ो मतः ।
पुरातनगुड़ाभावे रौद्रे यामचतुष्टयम् ॥
संशोष्य नूतनं ग्राह्यं पुरातनगुड़ैषिणा ।
क्षीराभावे भवेन्मौद्गो यूषो मासूर एव वा ॥
सिताभावे च खण्डः स्यात् शाल्यभावे च षष्टिकः ।

असम्भवे च द्राक्षाया गाम्भारीफलमिष्यते ॥
न भवेद्दाडिमो यत्र वृक्षाम्लं तत्र दापयेत्।
सौराष्ट्र्यदभावे च ग्राह्या पङ्कस्य पर्पटी ॥
नत तगरमूलं स्यादभावे सिंहलीजटा।
प्रयोगे यत्र लौहं स्यादभावे तन्मलं विदुः ॥
सर्षपः शुक्लवर्णो यः स हि सिद्धार्थ उच्यते।
तत्र सिद्धार्थकाभावे सामान्यः सर्षपो मतः ॥
चविकागजपिप्पल्यौ पिप्पलीमूलवत् स्मृते।
अभावे पृश्निपर्ण्याश्च सिंहपुच्छी विधीयते ॥
नित्यं मुञ्जतिकाभावे तालमस्तकमिष्यते।
कुङ्कुमस्याप्यभावे तु निशा ग्राह्या भिषग्वरैः ॥
मुक्ताभावे शुक्तिचूर्णं वज्रे वैक्रान्तमिष्यते।
धान्यकाभावतो दद्यात् शतपुष्पां भिषग्वरः ॥
वाराहीकन्दकाभावे चर्मकारालुको मतः।
सुवर्णमथवा रौप्यं योगे यत्र न लभ्यते।
तत्र लौहेन कर्म्माणि भिषक्कुर्य्याद्विचक्षणः ॥
अभावात्पौष्करे मूले कुष्ठं सर्वत्र गृह्यते ॥
सामुद्रं सैन्धवाभावे विडं वा गृह्यते बुधैः।
पुष्पाभावे फलञ्चामं विड्भेदे विल्वतः फलम् ॥
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते।
रास्नाभावे च वन्दाको जीराभावे च धान्यकम् ॥
कर्पूरस्याप्यभावेऽपि सुगन्धं मुस्तमिष्यते।
रसाञ्जनस्य चाप्राप्तौ दार्वीक्वाथं प्रयोजयेत् ॥
मेदाभावेऽश्वगन्धा स्यान्महामेदे तु सारिवा।

जीवकर्षभकाभावे गुडूची च विदारिका॥
ऋद्धग्रभावे बला ग्राह्या वृद्धग्रभावे महाबला ।
काकोलीयुगलाभावे निचिपेच्च शतावरीम् ॥
देया मृगमदाभावे पूतिका तद्गुणा बुधैः ।
रोहीतकत्वचोऽभावे पिचुमर्द्दस्य गृह्यते ॥
कापोतं सर्वमांसानां तुल्यं गुणकरं स्मृतम् ।
मांसक्काथापरिप्राप्तौ यूषो मौद्गः प्रदीयते ॥
धेन्वाः प्ररूढ़वत्सायाः चीरं ज्ञात्वपयोगुणम् ।
यत्र यद्द्रव्यमप्राप्तं भेषजे परपूर्वतः ।
ग्राह्यं तद्गुणसाम्यात्तु न तत्र क्वापि दूषणम् ॥

भेषजग्रहणसङ्केतः ।

लवणं सैन्धवं प्रोक्तं चन्दनं रक्तचन्दनम् ।
चूर्णलेहासवस्नेहाः साध्या धवलचन्दनैः ॥
कषायलेपयोः प्रायो युज्यते रक्तचन्दनम् ।
पयःसर्पिःप्रयोगेषु गव्यमेव हि गृह्यते ॥
शकृद्रसो गोमयकं मूत्रं गोमूत्रमुच्यते ॥
अन्यच्च । पाठौ्तौ चापि मृत्पालमुत्पले नीलमुत्पलम् ।
शकृद्रसे गोमयरसश्चन्दने रक्तचन्दनम् ॥
सिद्धार्थः सर्षपे ग्राह्यो लवणे सैन्धवं मतम् ।
मूत्रे गोमूत्रमादेयं विशेषो यत्र नेरितः ॥
पयःसर्पिःप्रयोगेषु गव्यमेव प्रशस्यते ।
स्त्रियश्चतुष्पदे ग्राह्या पुमांसो विहगेषु च ॥
जाङ्गलानां वयस्थानां चर्मरोमनखादिकम् ।
हित्वा ग्राह्यं पूतमांसं सास्थिकं खण्डशः कृतम् ॥

पक्वव्यमाजमांसञ्च विधिना घृततैलयोः ।
हित्वा स्त्रीं पुरुषञ्चापि क्लीवं तत्रापि दापयेत् ॥
शृगालवर्हिणोः पाके पुमांसं तत्र दापयेत् ।
मयूरी जम्बुकी छागी वीर्य्यहीना स्वभावतः ॥
काश्मीराजमतेनैव छाग एव नपुंसकः ।
अभावादप्रतीच्छाद्वा वृद्धवैद्योपदेशतः ॥
वन्ध्या छागी विपन्नव्या न तु शास्त्रमतं चरेत् ।
स्त्रीणां तीक्ष्णं गवां मूत्रं न तु पुंसां विधीयते ॥
पित्तात्मिकाः स्त्रियो यस्मात्सौम्यास्तु पुरुषा मताः ।
क्षीरमूत्रपुरीषाणि जीर्णाहारे तु संहरेत् ॥

द्रवेऽप्यनुक्ते जलमेव देयं
भागेऽप्यनुक्ते समता विधेया ।
अङ्गेऽप्यनुक्ते विहितन्तु मूलं
कालेऽप्यनुक्ते दिवसस्य पूर्वम् ॥

सारः स्यात् खदिरादीनां निम्बादीनान्तु वल्कलम् ।
फलञ्च दाड़िमादीनां पटोलादेश्छदस्तथा ॥
न्यग्रोधादेस्त्वचो ग्राह्या सारः स्याद्वीजकादितः ।
तालीशादेश्च पत्राणि फलं स्यात्त्रिफलादितः ॥
महान्ति यानि मूलानि काष्ठगर्भाणि यानि च ।
तेषाञ्च वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः ॥
मूलानि शिशिरे ग्रीष्मे पत्रं वर्षावसन्तयोः ।
त्वक्कन्दौ शरदि क्षीरं यथर्त्तु कुसुमं फलम् ॥
हेमन्ते सारमोषध्या गृह्णीयात्कुशलो भिषक् ॥

अरद्यखिलकर्मार्थं ग्राह्यं सरसमौषधम् ।
विरेकवमनार्थञ्च वसन्तान्ते समाहरेत् ॥

---

# पञ्चमोऽध्यायः ।

---

भैषज्यसेवनकालः ।

अभक्तं पूर्वभक्तञ्च मध्यभक्तं सभक्तकम् ।
भक्तोपरिष्टात्सामुद्गं भक्तस्यैवान्तरेऽपि च ॥
ग्रासे ग्रासान्तरे चैव मुहुर्मुहुरिति स्मृताः ।
काला दशैते धीमद्भिरौषधस्य समासतः ॥
बलिनो महतो व्याधेरभुक्ते भेषजं हितम् ।
सर्वव्याधिहर पथ्यं पूर्वभक्तं महौषधम् ॥
मध्यकायगतान् रोगान्मध्यभक्तं निहन्ति च ।
सभक्तं सुकुमाराणां बालानामौषधद्विषाम् ॥
भक्तोपरिष्टात् शस्तञ्च जर्द्ध जत्रुविकारिणाम् ।
सम्बन्धे वर्चसां मुद्गं दीप्ताग्निबलिनां हितम् ॥
भक्तयोरन्तरे ज्ञेयं भोजनद्वयमध्यतः ।
तच्च नित्यं प्रयुञ्जीत मध्यदेहविकारिणाम् ॥
ग्रासे ग्रासे क्षयाग्नीनां वाह्यासक्तधियामपि ।
ग्रासान्तरे हितं विद्यात्कुष्ठमेहविकारिणाम् ॥
मुहुर्मुहुः श्वासकासतृष्णार्त्तिच्छर्द्दिरोगिणाम् ॥
सामुद्गं भेषजं विद्यादन्नस्यादावसानयोः ।

अन्यच्च । ज्ञेयः पञ्चविध कालो भैषज्यग्रहणे नृणाम् ।
किञ्चित्सूर्य्योदये जाते तथा दिवसभोजने ॥
सायन्तने भोजने च मुहुश्चापि तथा निशि ॥

तत्र प्रथमः कालः ।

प्रायःपित्तकफोद्रेके विरेकवमनार्थयोः ।
लेखनार्थं च भैषज्यं प्रभातेऽनन्नमाहरेत् ॥

द्वितीयः कालः ।

भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते ।
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ॥
समानवाते विगुणे मन्देऽग्नावतिदीपनम् ।
दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक् ॥
व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत् ।
हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात् ॥

तृतीयः कालः ।

उदाने कुपिते वाते स्वरभङ्गादिकारिणि ।
ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने ॥
प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते प्रदीयते ।
औषधं प्रायशो धीरैः कालोऽयं स्यात्तृतीयकः ॥

चतुर्थः कालः ।

मुहुर्मुहुश्च तृट्छर्दिहिक्काश्वासगरेषु च ।
सान्नञ्च भेषजं दद्यादिति कालश्चतुर्थकः ॥

पञ्चमः कालः ।

ऊर्द्ध्वजत्रुविकारेषु लेखने बृंहणे तथा ।
पाचने शमने देयमनन्नं भेषजं निशि ॥

वीर्य्याधानम्।

स्नेहः सिद्धो गुडादिश्च गुणहीनोऽब्दतो भवेत्।
स्नेहाद्याः पूर्णवीर्य्याः स्युराचतुर्म्मासतः परम्॥
अब्दादूर्द्ध घृतं पक्वं हीनवीर्य्यत्वमाप्नुयात्।
तैले विपर्य्ययं विद्यात्पक्वेऽपक्वे विशेषतः॥
ऊर्द्धं मासद्वयाच्चूर्णं हीनवीर्य्यत्वमाप्नुयात्।
हीनत्वं गुडिकालेहौ भजेते वत्सरात्परम्॥
ओषध्यो लघुपाकाः स्युर्निर्वीर्य्या वत्सरात्परम्।
पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः॥

प्रक्षेपविधिः।

प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः।
परिभाषामिमामन्ये प्रक्षेपेऽप्यूचिरे परम्॥
माषिकं हिङ्गुसिन्धूत्थं जरणाद्यास्तु शाणिकाः।
षोडशाष्टचतुर्भागं वातपित्तकफे तथा।
क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा॥

क्षीरादिपाकमाह।

द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः॥
क्षीरमस्त्वारनालानां पाको नास्ति विनाम्भसा।
सम्यक् पाकं न गच्छन्ति तस्मात्तोयं चतुर्गुणम्॥

एतत्तु वचनं केवलक्षीरादिपक्वपाचनादौ क्षीरपञ्च-मूल्यादौ, नान्यत्र तैलघृतादिपाके तत्र द्रवान्तरमस्त्येव तैलादिपाके यत्र चतुर्गुणं क्षीरमेवास्ति न द्रवान्तरमस्ति तत्र कण्ठोक्तत्वात्परिभाषा न प्रवर्त्तते यथा अव्यक्तानुक्त-

लेशोक्तसन्दिग्धार्थप्रकाशिकाः इत्यभिप्रेत्य व्याख्येयमिति गुरवः ।

घृततैलादियोगे च यद्द्रव्यं पुनरुच्यते ।
ज्ञातव्यं तदिहाचार्य्यैर्भागतो द्विगुणेन हि ॥

---

## षष्ठोऽध्यायः ।

---

### अथ सन्धानविधिः ।

द्रवेषु चिरकालस्थं द्रव्यं यत्सन्धितं भवेत् ।
आसवारिष्टभेदैस्तु प्रोच्यते भेषजोचितम् ॥

### आसवारिष्टयोर्लक्षणम् ।

यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ।
अरिष्टः क्वाथसाध्यः स्यात्तयोर्मानं पलोन्मितम् ॥
आप्लाव्य सुरया सम्यग् द्रव्याणि विविधानि च ।
सप्ताहान्ते परिस्राव्य रसं वस्त्रेण गालयेत् ॥
एषोऽरिष्टाभिधानेन भिषग्भिः परिकीर्त्तितः ।
अरिष्टस्य गुणा ज्ञेया वीजद्रव्यगुणैः समाः ॥

### सामान्यतोऽरिष्टविधिः ।

अनुक्तमानारिष्टेषु द्रवद्रोणे गुड़ात्तुलाम् ।
क्षौद्रं क्षिपेद्गुडादर्द्धं प्रक्षेपं दशमांशिकम् ॥

द्विविधं सीधुमाह ।

ज्ञेयः शीतरसः सीधुरपक्कमधुरद्रवैः ।
सिद्ध. पक्करसः सीधुः सम्यक्कमधुरद्रवैः ॥

मधुरद्रवैरिक्षुरसादिभिः ।

सुरादिलक्षणमाह ।

दिनानि कतिचिद्भित्त्व गुड़ादौ स्थापयेद्भिषक् ।
ततो विक्लित्तिमापन्नं यन्त्रैश्च नाड़िकादिभिः ॥
विधिवत् स्रावयेत्तास्मादन्यपात्रे स्रुत रसम् ।
श्लक्ष्णीयास्सा सुरा ख्याता तीक्ष्णाष्णवीर्य्यमालिनी ॥

परिपक्कान्नसन्धानात्समुत्पन्नां सुरा जगुः ।
सुरामण्डः प्रसन्ना स्यात्ततः कादम्बरी घना ॥
तदधो जगलो ज्ञेयो मेदको जगलाद्घनः ।
वक्सो हृतसारः स्यात् सुरावीजञ्च किण्वकम् ॥

यत्तालखर्ज्जूररसैः सन्धिता सा हि वारुणी ।

कन्दमूलफलादीनि सस्नेहलवणानि च ।
यत्र द्रवेऽभिषूयन्ते तच्छुक्तमभिधीयते ॥

अभिषूयन्ते द्रवेणाप्लाव्य सन्धीयन्ते ।

विनष्टमम्लतां यातं मद्यं वा मधुरद्रवः ।
विनष्टः सन्धितो यस्तु तच्छुक्तमभिधीयते ॥

गुडाम्बुना सतैलेन कन्दशाकफलैस्तथा ।
सन्धितञ्चाम्लतां यातं गुडशुक्तं प्रचक्षते ॥

एवमेव हि शुक्तं स्यान्मृद्वीकासम्भवं तथा ।

तुषाम्बु सन्धितं ज्ञेयमामैर्विदलितैर्यवैः ।
यवैस्तु निस्तुषैः पक्कैः सौवीरं साधितं भवेत् ॥

अपरञ्च । सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषीकृतैः ।
गोधूमैरपि सौवीरमाचार्य्याः केचिदूचिरे ॥
आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः ।
पक्वैर्वा सहितैस्तत्तु सौवीरसदृशं गुणैः ॥
सन्धितं धान्यमण्डादि काञ्जिकं कथ्यते जनैः ।
शाण्डाकी सन्धिता ज्ञेया मूलकैः सर्षपादिभिः ।

धान्याम्लम् ।

प्रस्थं षष्टिकधान्यस्य नीरप्रस्थद्वये क्षिपेत् ।
आधारभाण्ड सरुध्य भूमेर्गर्भे निधापयेत् ॥
पश्चादथ समुद्धृत्य वस्त्रपूतञ्च कारयेत् ।
ततो जातरसं योज्यं धान्याम्लं सर्वकर्म्मसु ॥
धान्याम्लं शालिचूर्णाच्च कोद्रवादिकृतं भवेत् ॥

काञ्जिकसाधनम् ।

तुलामितं षष्टिकतण्डुलञ्च
प्रगृह्य चान्नं विधिवद्विधाय ।
द्रोणेऽम्भसि क्षिप्तमथ त्रियामा-
स्तत्तत्र रक्षेत्पिहितं प्रयत्नात् ॥
ततस्तु कल्कं सकलं निरस्येत्
तत्काञ्जिकं कथ्यत आरनालम् ।
तद्भेदि तीक्ष्णं लघु पाचनञ्च
दाहज्वरघ्नं कफवातनाशि ॥

---

# सप्तमोऽध्यायः ।

## स्नेहविधिः ।

गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।
औषधं स्नेहनं प्रायो विपरीत विरूक्षणम् ॥
सर्पिर्मज्जवसातैलं स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥
पित्तघ्नास्ते यथा पूर्वमितरघ्ना यथोत्तरम् ।
घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ॥
द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ।
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ॥
वृद्धबालाबलकृशा रूक्षाः क्षीणास्रेतसः ।
वातार्त्तस्यन्दितिमिरदारुणप्रतिबोधिनः ॥
स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ।
ऊरुस्तम्भातिसारामगलरोगगरोदरैः ॥
मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ।
अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥
तत्र धीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम् ।
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ॥
तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ।
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ॥
रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च ।
शेषौ वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च ॥

तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ।
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे ॥
ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ।
तैलं त्वरायां शीतेऽपि घर्म्मेऽपि च घृतं निशि ॥
निश्येव पित्ते पवने संसर्गे पित्तवत्यपि ।
निश्यन्यथा वातकफाद्रोगाः स्युः पित्ततो दिवा ॥
युक्त्यावचारयेत् स्नेहं भक्ष्याद्यन्ने न बस्तिभिः ।
नस्याभ्यञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणैः ॥
रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणा ।
स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात् स्मृताः ॥
यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा ।
स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्म्माशु साधनात् ॥
द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्य्यन्ति या क्रमात् ।
ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च गरीयसीम् ॥
कल्पयेद्वीक्ष्य दोषादीन प्रागेव तु ह्रसीयसीम् ।
ह्यस्तने जीर्णे एवान्ने स्नेहोऽच्छः शुद्धये बहुः ॥
शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ।
बृंहणो रसमद्याद्यैः सभक्तोऽल्पो हितः स च ॥
बालवृद्धपिपासार्त्तस्नेहद्विण्मद्यशीलिषु ।
स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ॥
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ।
प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्द्ध्वदेहजान् ॥
व्याधीन जयेद्बलं कुर्य्यादङ्गानाञ्च यथाक्रमम् ।
वार्युष्णमच्छेऽनुपिबेत् स्नेहे तत्सुखपक्तये ॥

आस्योपलेपशुद्धैश्च तीव्राग्नेः क्रूरे न तु।
जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत्॥
तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिः।
भोज्यान्नं मात्रया प्राश्नन् श्वः पिबेत्पीतवानपि॥
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम्॥

उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः।
न वेगरोधी व्यायामक्रोधशोकहिमातपान्॥
प्रवातयानपानाध्वभाष्यात्यासनसंस्थितीः।
नीचात्युच्चोपधानाह स्वप्नधूमरजांसि च॥
यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत्।
सर्वकर्म्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः॥
उपचारस्तु शमने कार्य्यः स्नेहे विरिक्तवत्।
त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत्॥
सम्यक् स्निग्धोऽथवा यावदतः सात्मीभवेत्परम्।
वातानुलोम्यं दीप्तोऽग्निर्वर्च्चः स्निग्धमसंहतम्॥
स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्य्ययः।
अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः॥
अमात्रयाहितोऽकाले मिथ्याहारविहारतः।
स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः॥
कण्डूकुष्ठज्वरोत्क्लेशशूलानाह भ्रमादिकान्।
क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम्॥
तक्रारिष्टखडोद्दालयवश्यामाककोद्रवम्।
पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु॥
यथास्वं प्रतिरोगञ्च स्नेहव्यापदि साधनम्॥

स्निग्धो द्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत् ।
स्विन्नस्त्र्यहं स्थितः कुर्य्याद्विरेकं वमनं पुनः ॥
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ।
मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ॥
स्नेहोचिताश्च येऽस्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ।
संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ॥
अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ॥
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत् ॥
प्राज्यमांसरसास्तेषु पेया वा स्नेहभर्ज्जिताः ।
तिलचूर्णश्च सस्नेहफाणितः कृशरास्तथा ॥
क्षीरपेया घृताढ्योष्णा दध्नो वा सगुडः सरः ।
पेया वा पञ्चप्रसृता स्नेहैस्तण्डुलपञ्चमैः ॥
सप्तैते स्नेहनाः सद्यः स्नेहाश्च लवणोल्बणाः ।
तद्ध्यभिष्यन्द्यरूक्षञ्च सूक्ष्ममुष्णं व्यवायि च ॥
गुड़ानूपामिषक्षीरतिलमाषसुरादधि ।
कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥
त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ।
स्नेहान् यथास्वमेतेषां योजयेदविकारिणः ।
क्षीणानां त्वामयैरग्निदेहसन्धुक्षणक्षमान् ॥
दीप्तान्तरग्निः परिशुद्धकोष्ठः
प्रत्यग्रधातुर्बलवर्णयुक्तः ।
दृढेन्द्रियो मन्दजरः शतायुः
स्नेहोपसेवी पुरुषः प्रदिष्टः ॥

मूर्द्धतैलविधिः ।

अभ्यङ्गः परिषेकश्च पिचुर्वस्तिरितिक्रमात् ।
मूर्द्धतैलं चतुर्द्धा स्याद्बलवत्तद्यथोत्तरम् ॥
त्रयोऽभ्यङ्गादयः पूर्वं प्रसिद्धाः सर्वतः स्मृताः ।
शिरोवस्तिविधिश्चात्र प्रोच्यते सुश्रसम्मतः ।
शिरोवस्तिश्चर्म्मणः स्याद्द्विमुखो द्वादशाङ्गुलः ॥
शिरःप्रमाणस्तं बद्ध्वा मस्तके माषपिष्टकैः ।
सन्धिरोधं विधायाशु स्नेहैः कोष्णैः प्रपूरयेत् ॥
तावद्धार्य्यस्तु यावत्स्यान्नासाकर्णमुखस्रुतिः ।
वेदनोपशमो वापि मात्राणां वा सहस्रकम् ॥
विना भोजनमेवात्र शिरोवस्तिः प्रशस्यते ।
प्रयोज्यस्तु शिरोवस्तिः पञ्च सप्त दिनानि वा ॥
शिरोवस्तिं विमोच्याथोष्णनीरे स्नानञ्च कारयेत् ।
अनेन दुर्ज्जया रोगा वातजा यान्ति संक्षयम् ॥
शिरःकम्पादयस्तेन सर्वकालेषु युज्यते ॥

---

## अष्टमोऽध्यायः ।

---

अथ पञ्च कर्म्माणि ।

प्रथमं वमनं पश्चाद्विरेकश्चानुवासनम् ।
एतानि पञ्च कर्म्माणि निरूहो नावनं तथा ॥

तत्र वमनविधिः ।

शरत्काले वसन्ते च प्रावृट्काले च देहिनाम् ।
वमनं रेचनञ्चैव कारयेत् कुशलो भिषक् ॥
बलवन्तं कफव्याप्तं हृल्लासादिनिपीडितम् ।
तथा वमनसात्म्यञ्च धीरचित्तञ्च वामयेत् ॥
विषदोषे स्तन्यरोगे मन्देऽग्नौ श्लीपदेऽर्वुदे ।
हृद्रोगे कुष्ठवीसर्पे मेहाजीर्णभ्रमेषु च ॥
विदारिकापचीकासश्वासपीनसवृद्धिषु ॥
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ।
नासाताल्वोष्ठपाकेषु कर्णस्रावेऽधिजिह्वके ।
गलशुण्ड्यामतीसारे पित्तश्लेष्मगदे तथा ॥
मेदोगदेऽरुचौ चैव वमनं कारयेद्भिषक् ॥
स्तन्यरोगे दुष्टदुग्धजनिते बालस्य रोगे ।
न वामनीयस्तिमिरीन गुल्मी नोदरी कृशः ।
नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः ॥
मदार्त्तो बालको रूक्षः क्षुधितश्च निरूहितः ।
उदावर्त्त्यूर्द्ध्वरक्ती च दुश्छर्द्दिः केवलानिली ॥
पाण्डुरोगी क्रिमिव्याप्तः पाठनात् स्वरघातवान् ।
एतेऽप्यजीर्णव्यथिता वाम्या ये विषपीडिताः ॥
कफव्याप्ताश्च ते वाम्या मधुकक्वाथपानतः ॥
शुष्कतस्करवीथद्रव्यो दुश्छर्द्दिः ।
सुकुमारं कृशं बालं वृद्धं भीरुञ्च वामयेत् ।
पाययित्वा यवागूं वा क्षीरतक्रदधीनि च ॥
असात्म्यैः श्लेष्मलैर्भोज्यैर्दोषानुत्क्लिश्य देहिनाम् ।

स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्त्तते ॥
वमनेषु च सर्वेषु सैन्धवं मधुना हितम् ।
बीभत्सं वमनं दद्याद्विपरीतं विरेचनम ॥
क्वाथ्यद्रव्यस्य कुडवं श्रापयित्वा जलाढ़के ।
अर्द्धभागावशिष्टञ्च वमनेष्ववचारयेत् ॥
क्वाथपाने नव प्रस्था ज्येष्ठा मात्रा प्रकीर्त्तिता ।
मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी ॥
वमने च विरेके च तथा शोणितमोक्षणे ।
अर्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥
अर्द्धत्रयोदशपलं सार्द्धषटकम् ॥
कल्कचूर्णावलेहानां त्रिपल मात्रयोत्तमम् ।
मध्यमं द्विपलं विद्यात्कनीयस्तु पल भवेत् ॥
वमने चाष्टवेगाः स्युः पित्तान्ता उत्तमास्तु ते ।
षड्वेगा मध्यमा वेगाश्चत्वारस्त्ववरे मताः ॥
कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्जयेत् ।
सुस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम् ॥
कृष्णा कटफलसिन्धुञ्च कफे कोष्णजलैः पिबेत ॥
पटोलवासा निम्बाश्च पित्ते शीतजलैः पिबेत् ॥
सश्लेष्मवातपीड़ायां सक्षीरं मदनं पिबेत् ।
अर्कमूलत्वचश्चूर्णं पिबेत् कफविषार्द्दित. ॥
अजीर्णे कोष्णपानीयं सिन्धुं पीत्वा वमेत् सुधीः ।
कट्फलमत्र मदनफलम् ।
प्रसेको हृद्ग्रहः कोठः कण्डूर्दुश्छर्द्दिते भवेत् ।
अतिवान्ते भवेत्तृष्णा हिक्कोद्गारो विसंज्ञता ॥

जिह्वानिःसरणं चाक्ष्णोर्व्यावृत्तिर्हनुसंहतिः ।
रक्तच्छर्दिः ष्ठीवनञ्च कण्ठपीडा च जायते ॥

हनुसंहतिः हन्वोरमिलनम् ।

वमनस्यातियोगे तु मृदु कुर्य्याद्विरेचनम् ।
वमनेन प्रविष्टायां जिह्वाया कवलग्रह ॥
स्निग्धाम्ललवणैर्युक्तैर्घृतक्षीररसैर्हितैः ।
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ॥
निःसृतान्तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ।
व्यावृत्तेऽक्षिणि घृताभ्यक्ते पीडनञ्च शनैः शनै ॥
हनुमोक्षे स्मृतः स्वेदो नस्यञ्च श्लेष्मवातहृत् ।
रक्तपित्तविधानेन रक्तष्ठीवमुपाचरेत् ॥
धात्रीरसाञ्जनोशीरलाजाचन्दनवारिभि ।
मन्थं कृत्वा पाययेच्च सघृतक्षौद्रशर्करम ॥
शाम्यन्त्यनेन तृष्णाद्या रोगाश्छर्दिसमुद्भवाः ।
हृत्कण्ठशिरसां शुद्धिर्दीप्ताग्नित्वञ्च लाघवम् ॥
कफपित्तविनाशश्च सम्यग्वान्तस्य लक्षणम् ।
ततोऽपराह्णे दीप्ताग्निं मुद्गयष्टिकशालिभि. ॥
हृद्यैश्च जाङ्गलरसैः कृत्वा यूषञ्च भोजयेत् ।
तन्द्रा निद्रास्यदौर्गन्ध्यं कण्डूश्च ग्रहणी विषम् ।
सुवान्तस्य न पीडायै भवन्त्येते कदाचन ॥
अजीर्णं शीतपानीयं व्यायामं मैथुनं तथा ।
स्नेहाभ्यङ्गञ्च रोषञ्च दिनमेकं सुधीस्त्यजेत् ॥

---

# नवमोऽध्यायः ।

——

## विरेचनविधि ।

स्निग्धस्विन्नाय वान्ताय दद्यात्सम्यग् विरेचनम् ।
अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत्कफः ॥
मन्दाग्नि गौरवं कुर्य्याज्जनयेद्वा प्रवाहिकाम् ।
अथवा पाचनैरामं बलासं परिपाचयेत् ॥
ऋतौ वसन्ते शरदि देहशुद्धौ विरेचयेत् ।
अन्यदात्ययिके कार्य्ये शोधनं शीलयेद्बुधः ॥
पित्ते विरेचन युञ्ज्यादामोद्भूते गदे तथा ।
उदरे च तथाध्माने कोष्ठशुद्धौ विशेषतः ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
शोधनैः शोधिता ये तु न तेषां पुनरुद्भवः ॥
बालो वृद्धो भृशं स्निग्धः क्षतक्षीणो भयान्वितः ।
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ॥
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ।
शल्याहितश्च रुक्षश्च न विरेच्या विजानता ।
जीर्णज्वरी गरव्यापी वातरक्ती भगन्दरी ॥
अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडिताः ।
योनिरोगप्रमेहार्त्ता गुल्मप्लीहव्रणार्दिताः ॥
विद्रधिच्छर्दिविस्फोटविसूचीकुष्ठसंयुताः ।
कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः ॥

प्लीहशोथाश्चिरोगार्त्ता. क्रिमिक्षारानलाहिता ।
शूलिनो मूत्रघातार्त्ता विरेकार्हा नरा मता ॥

बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूरकोष्ठो दुर्विरेच्य स कथ्यते ।
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा ।
क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकै ॥
मृदुर्द्राक्षा पयश्चुतैलैरपि विरिच्यते ।
मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते ।
क्रूर. स्नुक्पयसा हेमक्षीरीदन्तीफलादिभिः ॥

मात्रोत्तमा विरेकस्य त्रिंशद्वेगै कफान्तिका ।
वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगिका ॥
द्विपल श्रेष्ठमाख्यात मध्यमञ्च पलं भवेत् ।
पलार्द्धञ्च कषायाणा कनीयस्तु विरेचनम् ॥
कल्कमोदकचूर्णानां कर्षं मध्वाज्यलेहतः ।
कर्षद्वयं पलं वापि वयोरोगाद्यपेक्षया ।
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्काथादिभि पिबेत ॥
त्रिफलाक्काथगोमूत्रैः पिबेद्व्योष कफार्दितः ॥
त्रिवृत्सैन्धवशुण्ठीना चूर्णमम्लै. पिबेन्नरः ।
वातार्दितो विरेकाय जाङ्गलानां रसेन वा ॥
एरण्डतैलं त्रिफलाक्काथेन द्विगुणेन वा ।
युक्त पीतं पयोभिर्वा न चिरेण विरिच्यते ॥
सक्षीरा सेवतो पेया विरेकार्थं सितायुता ।
नारिकेलजतोयेन पेया वा स्वर्णपत्रिका ॥
त्रिवृता कौटजं वीजं पिप्पली विश्वभेषजम् ।

सम्हीकारसं चौद्रं वर्षाकाले विरेचनम् ॥
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ।
द्राचाम्बुना सयष्ट्याह्वं शीतलञ्च घनात्यये ॥
त्रिवृतां चित्रक पाठामजाजी सरलां वचाम् ।
हेमचीरी च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥
पिप्पलीं नागरं सिन्धु श्यामां त्रिवृतया सह ।
लिह्यात् चौद्रेण शिशिरे वसन्ते च विरेचनम् ॥
त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम् ॥

अभयामोदक. ।

अभया मरिचं शुण्ठी विरङ्गामलकानि च ।
पिप्पली लिप्पलीमूलं त्वक् पत्रं मुस्तमेव च ॥
एतानि समभागानि दन्ती तु त्रिगुणा भवेत् ।
त्रिवृताष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा ।
मधुना मोदकान् कृत्वा कर्षमात्रान् प्रमाणत ।
एकैक भक्षयेत्प्रातः शीतञ्चानुपिबेज्जलम् ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ।
पानाहारविहारेषु भवेन्नियन्त्रण सदा ॥
विषमज्वरमन्दाग्निपाण्डुकासभगन्दरान् ।
दुर्नामकुष्ठयच्माशींगलगण्डभ्रमोदरान् ॥
विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् ।
वातरोगास्तथाध्मानं मूत्रकृच्छ्राणि चाश्मरीम् ॥
पृष्ठपार्श्वोरुजघनजङ्घोदररुजं जयेत् ।
सततं शीलनादेषां पलितानि प्रणाशयेत् ॥
अभयामोदका ह्येते रसायनवराः स्मृताः ॥

पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी।
सुगन्धि किञ्चिदाघ्राय ताम्बूलं शीलयेद्बुधः॥
निर्वातस्थो न वेगांश्च धारयेन्न शयीत च।
शीताम्बु न स्पृशेत् क्वापि कोष्णनीरं पिबेन्मुहुः॥
दुर्विरिक्तस्य नाभेस्तु स्तब्धता कुक्षिशूलरुक्।
पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम्॥
विदाहोऽरुचिराध्मानं भ्रमश्छर्द्दिश्च जायते।
तं पुनः पाचनैः स्नेहैः पक्त्वा स्निग्धन्तु रेचयेत्॥
तेनास्योपद्रवा यान्ति दीप्तोऽग्निर्लघुता भवेत्।
विरेकस्यातियोगेन मूर्च्छाभ्रंशो गुदस्य च॥
शूलं कफातियोगः स्यान्मांसधावनसन्निभम्।
मेदोनिभं जलाभासं रक्तं वापि विरिच्यते॥
तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुलाम्बुभिः।
मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु॥
सहकारत्वचः कल्को दध्ना सौवीरकेण वा।
पिष्टो नाभिप्रलेपेन हन्त्यतीसारमुल्बणम्॥
अजाक्षीरं रसं वापि वैष्किरं हारिणं तथा।
शालिभिः षष्टिकैः स्वल्पं मसूरैर्वापि भोजयेत्॥
शीतैः संग्राहिभिर्द्रव्यैः कुर्य्यात् संग्रहणं भिषक्॥
लाघवे मनसस्तुष्टावनुलोमं गतेऽनिले।
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि॥
इन्द्रियाणां बलं बुद्धेः प्रसादं वह्निदीपनम्।
धातुस्थैर्य्यं वयःस्थैर्य्यं भवेद्रेचनसेवनात्॥
प्रवातसेवा शीताम्बु स्नेहाभ्यङ्गमजीर्णताम्।

व्यायामं मैथुनं चैव न सेवेत विरेचितः॥
शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत् कृताम्।
जङ्गालविष्किराणां वा रसैः शाल्योदनं हितम्॥
विरेकाद्यौषधे पीते सम्यग् यो न विरिच्यते।
पिबेदुष्णाम्बुना तत्र सैन्धवं दोषशान्तये॥

---

## दशमोऽध्यायः।

---

### वस्तिकर्म्म।

अथातो नेत्रवस्तिप्रमाणपरिभाग
चिकित्सितं व्याख्यास्यामः।

तत्र स्नेहादीनां कर्म्मणां वस्तिकर्म्म प्रधानतममाहुराचार्य्याः। कस्मादनेककर्म्मकरत्वादस्तेरिह वस्तिर्नानाविधद्रव्यसंयोगाद्दोषाणां संशोधनसंशमनसंग्रहणानि करोति। क्षीणशुक्रं वाजीकरोति कृशं बृंहयति स्थूलं कर्षयति चक्षुः प्रीणयति वलीपलितमुपहन्ति वयः स्थापयति। शरीरोपचयं वर्णबलमारोग्यमायुषः परिवृद्धिञ्च करोति वस्तिः सम्यगुपासितः। तथा ज्वरातीसारतिमिरप्रतिश्यायशिरोरोगाधिमन्थार्द्दितात्तेपकपक्षाघातैकाङ्गसर्वाङ्गरोगाध्मानोदरशर्कराशूलवृद्ध्युपदंशानाहमूत्रकृच्छ्रगुल्मवातशोणितवातमूत्रपुरीषोदावर्त्तशुक्रार्त्तवस्तन्य-

नाशहृद्रनुमन्याग्रहार्शोऽश्मरीमूढगर्भप्रभृतिषु चात्यर्थमुपयुज्यते ।

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ।
संसर्गे सन्निपाते च वस्तिरेव हितः सदा ॥

तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षडष्टदशाङ्गुलप्रमाणानि कनिष्ठिकानामिकामध्यमाङ्गुलिपरीणाहान्यग्रेऽध्यर्द्धद्व्यङ्गुलनद्धत्रितीयाङ्गुलसन्निविष्टकर्णिकानि कङ्कश्येनवर्हिपत्रनाड़ीतुल्यप्रवेशानि मुद्गमाषकलायस्रोतांसि विदध्यान्नेत्राणि तेषु त्वास्थापनद्रव्यप्रमाणमातुरहस्तसम्मितेन प्रसृतेन सम्मितौ प्रसृतौ द्वौ चत्वारोऽष्टौ विधेयाः ।

वर्षोत्तरेषु नेत्राणां वस्तिमानस्य चैव हि ।
वयोबलशरीराणि समीक्ष्य वर्द्धयेद्विधिम् ॥

पञ्चविंशतेरूर्द्ध्वं द्वादशाङ्गुलं मूलेऽङ्गुष्ठोदरपरीणाहमग्रे कनिष्ठिकोदरपरीणाहमग्रे त्र्यङ्गुलसन्निविशिष्टकर्णिकं गृध्रपत्रनाड़ीतुल्यप्रवेशं कोलास्थिमात्रच्छिद्रं क्लिन्नकलायमात्रच्छिद्रमित्येके ।

सर्वाणि मूले वस्तिनिबन्धनार्थं द्विकर्णिकानि ।
आस्थापनद्रव्यप्रमाणन्तु विहिता द्वादश प्रसृताः ।

सप्ततेस्तूर्द्ध्वं नेत्रप्रमाणमेतदेव द्रव्यप्रमाणन्तु द्विरष्टवर्षवत् ।

तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि श्लक्ष्णानि दृढ़ानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि । वस्तयश्चाद्रुताना मृदवो नातिबहला दृढ़ाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम् ।

मूत्रकोषस्य वस्तिस्तु तदलाभे तु चर्म्मण: ॥
कषायरक्त स मृदुर्वस्ति: स्निग्धो दृढ़ो हित: ।
नेत्रालाभे हिता नाड़ी नलवंशास्थिसम्भवा: ॥

तत्र द्विविधो वस्ति नैरूहिक: स्नैहिकश्च । आस्थापनं निरूह इत्यनर्थान्तरम् । स दोषनिर्हरणाच्छरीररोगहरणाद्वा निरूह: वय:स्थापनादायु:स्थापनाद्वास्थापनम् । तत्र यथाप्रमाणगुणविहित: स्नेहवस्तिविकल्पोऽनुवासन: पादावकृष्ट: । अनुवसन्नपि न दुष्यत्यनुदिवं वा दीयत इत्यनुवासन: । तस्यापि विकल्पोऽर्द्धद्वैमात्रावकृष्टोऽपरिहार्य्यो मात्रावस्तिरिति ।

निरूह: शोधनो लेखी स्नेहनो बृंहणो मत: ।
निरूहशोधितान्मार्गान् सम्यक् स्नेहोऽनुगच्छति ॥
अपेतसर्वदोषासु नाड़ीष्विव वहज्जलम् ।
सर्वदोषहरश्चासौ शरीरस्य च जीवन: ॥
तस्माद्विशुद्धदेहस्य स्नेहवस्तिर्विधीयते ॥

तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्श:पाण्डुरोगभ्रममदमूर्च्छाच्छर्द्दिकुष्ठमेहोदरस्थौल्यश्वासकासकण्ठशोषशोफोपसृष्टक्षतक्षीणचतुस्त्रिमासगर्भिणीदुर्बलाग्न्यसहा बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्या: ।

उदरी च प्रमेही च कुष्ठी स्थूलश्च मानव: ।
अवश्यं स्थापनीयाश्च नानुवास्या: कथञ्चन ॥
असाध्यता विकाराणां स्यादेषामनुवासनात् ।
असाध्यत्वेऽपि भूयिष्ठं गात्राणां सदनं भवेत् ॥

पक्वाशये तथा श्रोण्यां नाभ्यधस्ताच्च सर्वतः ।
सम्यक् प्रणिहितो वस्तिः स्थानेष्वेतेषु तिष्ठति ॥
पक्वाशयाद्वस्तिवीर्य्यं खैर्देहमुपसर्पति ।
वृक्षमूले निषिक्तानामपां वीर्य्यमिव द्रुमम् ॥
स चापि सहसा वस्तिः केवलः समलोऽपि वा ।
प्रत्येति त्वनिलैर्वीर्य्यमपानाद्यैर्विनीयते ॥
वीर्य्येण वस्तिरादत्ते दोषानापादमस्तकात् ।
पक्वाशयस्थोऽम्बरगो भूमेरर्को रसानिव ॥
सकटीपृष्ठकोष्ठस्थान् वीर्य्येणालोड्य सञ्चयान् ।
उत्खातमूलान् हरति दोषाणां साधु योजितः ॥
दोषत्रयस्य यस्माच्च प्रकोपे वायुरीश्वरः ।
तस्मात्तस्यातिवृद्धस्य शरीरमभिनिघ्नतः ॥
वायोर्विहते वेगं नान्या वस्तेर्ऋते क्रिया ।
पवनाविद्धतोयस्य वेलावेगमिवोदधेः ॥
शरीरोपचयं वर्णं बलमारोग्यमायुषः ।
कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः ॥

अत ऊर्द्धं व्यापदो वक्ष्यामः ।

तत्र नेत्रं चलितं विवर्त्तितं पार्श्वावपीड़ितमत्युत्क्षिप्तमवसन्नं तिर्य्यक्क्षिप्तमिति षट् प्रणिधानदोषाः । अतिस्थूलं कर्कशमवनतमणु भिन्नं सन्निकृष्टविप्रकृष्टकर्णिकं सूक्ष्मातिच्छिद्रमतिदीर्घमतिह्रस्वमित्येकादश नेत्रदोषाः । बहलताल्पता सच्छिद्रता प्रस्तीर्णता दुर्बद्धतेति पञ्च वस्तिदोषाः । अतिपीड़ितता शिथिलपीड़िततता भूयोभूयोऽवपीड़नं कालातिक्रम इति चत्वारः पीड़नदोषाः । आमता

हीनतातिमात्रतातिशीततात्युष्णतातितीक्ष्णतातिमृदुता-
तिस्निग्धतातिरूक्षतातिसान्द्रतातिद्रवता इत्येकादश द्रव्य-
दोषाः। आवाक्शीर्षोच्छीर्षन्युब्जोत्तानसङ्कुचितदेहस्थि-
तताद्दक्षिणपार्श्वशायिनः प्रदानमिति सप्त शय्या-
दोषाः। क्रोध आयासः शोको मैथुनं दिवास्वप्न उच्चैःस-
म्भाषणं यानयानं चिरासनं स्नानमतिचंक्रमणं शीतसम्भोग-
स्तोयवातातपानां सेवनमविहिताशनमिति पञ्चदशा-
तुरनिमित्ताः। स्नेहस्त्वष्टाभिः कारणैः प्रतिहतो न
प्रत्यागच्छति त्रिभिर्दोषैरशनाभिभूतो मलव्यामिश्रो
दूरानुप्रविष्टोऽस्विन्नस्यानुष्णोऽल्पोऽल्पाशनस्य चेति वैद्यातुर-
निमित्ता भवन्ति। अयोगस्तूभयोराध्मानं परिकर्त्तिका
परिस्रावः प्रवाहिका हृदयोपसरणमङ्गप्रग्रहोऽतियोगो
जीवादानमिति नव व्यापदो वैद्यनिमित्ता भवन्ति।

षट्सप्तति समासेन व्यापदः परिकीर्त्तिताः।
तासां वक्ष्यामि विज्ञानं सिद्धिञ्च तदनन्तरम्॥

---

## एकादशोऽध्यायः।

---

अथातोऽनुवासनोत्तरवस्तिचिकित्सितं
व्याख्यास्यामः।

विरेचनात्सप्तरात्रे गते जातबलाय च।
कृतान्नायानुवास्याय सम्यग् देयोऽनुवासनः॥

यथा वयोनिरूहाणां या मात्राः परिकीर्त्तिताः।
पादावकृष्टास्ताः कार्याः स्नेहवस्तिषु देहिनाम्॥
अत ऊर्द्ध्वं प्रवक्ष्यामि तैलानीह यथाक्रमम्।
पानान्वासननस्येषु यानि हन्युर्गदान् बहून्॥

शट्यादितैलम्।

शटिपुष्करकृष्णाह्वामदनामरदारुभिः।
शताह्वाकुष्ठयष्ट्याह्ववचाविल्वहुताशनैः॥
सुपिष्टैर्द्विगुणं क्षीरं तैलं तोयं चतुर्गुणम्।
पक्वा वस्तौ विधातव्यं मूढ़वातानुलोमनम्॥
अर्शांसि ग्रहणीदोषमानाहं विषमज्वरम्।
कट्यूरुपृष्ठकोष्ठस्थान् वातरोगांश्च नाशयेत्॥

वचादितैलम्

वचापुष्करकुष्ठैलामदनामरसिन्धुजैः।
काकोलीद्वययष्ट्याह्वमेदायुग्मनराधिपैः॥
पाठाजीवकजीवन्तीभार्गीचन्दनकट्फलैः।
सरलागुरुविल्वाम्बुवाजिगन्धाग्निवृद्धिभिः॥
विड़ङ्गारग्वधश्यामात्रिवृन्मागधिकर्द्धिभिः।
पिष्टैस्तैलं पचेत् क्षीरं पञ्चमूलरसान्वितम्॥
गुल्मानाहाग्निषङ्गार्शोग्रहणीमूत्रसङ्गिनाम्।
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिणाम्॥

चित्रकादितैलम्।

चित्रकातिविषापाठादन्तीविल्ववचामिषैः।
सरलांशुमतीरास्नानीलिनीचतुरङ्गुलैः॥
स्वर्ण्याजमोदकाकोलीमेदायुग्मसुरद्रुमैः।

जीवकर्षभवर्षाभूवस्तगन्धमृताह्वयैः॥
रेणुखगन्धामञ्जिष्ठाशटीपुष्करतस्करैः।
सक्षीरं विपचेत्तैलं मारुतामयनाशनम्॥
गृध्रसीखञ्जकुब्जाद्यमूत्रोदावर्त्तरोगिणाम्।
शस्यतेऽल्पबलाग्नीनां वस्तावाशु नियोजितम्॥

## भूतिकादितैलम्।

भूतिकैरण्डवर्षाभूरास्नावृषकरोहिषैः।
दशमूलसहाभार्गीषड्ग्रन्थासरदारुभिः॥
बलानागबलामूर्वावाजिगन्धामृताह्वयैः।
सहाचरवरीविश्वाकाकनासाविदारिभिः॥
यवमाषातसीकोलकुलत्थैः क्वथितैः शृतम्।
जीवनीयप्रतीवापं तैलं क्षीरचतुर्गुणम्॥
जङ्घोरुत्रिकपार्श्वांसबाहुमन्याशिरःस्थितान्।
हन्याद्वातविकारांस्तु वस्तियोगैर्निषेवितम्॥

## जीवन्त्यादितैलम्।

जीवन्त्यतिबलामेदाकाकोलीद्वयजीवकैः।
ऋषभातिविषाकृष्णाकाकनासावचामरैः॥
रास्नामदनयष्ट्याह्वसरलाभीरुचन्दनैः।
स्वयंगुप्ताशटीशृङ्गीकलसीसारिवाह्वयैः॥
पिष्टैस्तैलघृतं पक्वं क्षीरेणाष्टगुणेन तु।
तच्चानुवासने देयं शुक्राग्निबलवर्द्धनम्॥
वृंहणं वातपित्तघ्नं गुल्मानाहहरं परम्।
नस्ये पाने च संयुक्तमूर्द्ध्वजत्रुगदापहम्॥

मधुकादितैलम् ।

मधुकोशीरकाश्मर्य्यकटुकोत्पलचन्दनैः ।
श्यामापद्मकजीमूतशक्राह्वातिविषाम्बुभिः ॥
तैलपादं पचेत्सर्पिः पयसाष्टगुणेन च ।
न्यग्रोधादिगणक्वाथयुक्तं वस्तिषु योजितम् ॥
दाहासृग्दरवीसर्पवातशोणितविद्रधीन् ।
पित्तरक्तज्वराद्यांश्च हन्यात्पित्तकृतान् गदान् ॥

मृणालादितैलम् ।

मृणालोत्पलशालूकसारिवाद्वयकेशरैः ।
चन्दनद्वयभूनिम्बपद्मवीजकसेरुकैः ॥
पटोलकटुकारक्तागुन्द्रापर्पटवासकैः ।
पिष्टैस्तैलं विपक्वं तृणमूलरसेन च ॥
क्षीरद्विगुणसंयुक्तं वस्तिकर्म्मणि योजितम् ।
नस्येऽभ्यञ्जनपाने वा हन्यात्पित्तगदान् बहून् ॥

त्रिफलाद्यं तैलम् ।

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ।
तैलमेभिः समैः पक्वं सुरसादिरसाप्लुतम् ॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम् ।
स्थूलतालस्यकण्ड्वादीन् जयेत्कफकृतान् गदान् ॥

पाठाद्यं तैलम् ।

पाठाजमोदाशार्ङ्गेष्टापिप्पलीद्वयनागरैः ।
सरलागुरुकालीयभार्गीचव्यामरद्रुमैः ॥

मरिचैलाभयाकुष्ठीशटीग्रन्थिककट्फलैः ।
तैलमेरण्डतैलं वा पक्कमेभिः समायुतम् ॥
वल्लीकण्टकमूलाभ्यां क्वाथेन द्विगुणेन च ।
हन्यादन्वासनैर्दत्तं सर्वान् कफकृतान् गदान् ॥

विड़ङ्गाद्यं तैलम् ।

विड़ङ्गोदीच्यसिन्धूत्थशटीपुष्करचित्रकैः ।
कट्फलातिविषाभार्गीवचाकुष्ठसुराह्वयैः ॥
मेदामदनयष्ट्याह्वश्यामानिचुलनागरैः ।
शताह्वानीलिनीरास्नाकदलीवृषरेणुभिः ॥
विल्वाजमोदकृष्णाह्वादन्तीचव्यनराधिपैः ।
तैलमेरण्डतैलं वा मुष्ककादिरसाप्लुतम् ॥
प्लीहोदावर्त्तवातासृग्गुल्मानाहकफामयान् ।
प्रमेहशर्कराशांसि हन्यादाश्वनुवासनात् ॥

---

# द्वादशोऽध्यायः ।

---

अशुद्धमपि वातेन केवलेनातिपीड़ितम् ।
अहोरात्रस्य कालेन सर्वंश्चैवानुवासयेत् ॥
रुचस्य बहुवातस्य द्वौ त्रीनप्यनुवासनान् ।
दत्त्वा स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत् ॥
अस्निग्धमपि वातेन केवलेनातिपीड़ितम् ।
स्नेहप्रगाढ़ैर्मतिमान्निरूहैः समुपाचरेत् ॥

रात्रौ वस्तिं न दद्यात्तु दोषोत्क्लेशो हि रात्रिजः।
स्नेहो वीर्य्ययुतं कुर्य्यादाध्मानं गौरवं ज्वरम्॥
अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते।
स्फुटस्रोतोमुखे देहे स्नेहौजः परिसर्पति॥
पित्तेऽधिके कफे क्षीणे रूक्षे वातरुगर्द्दिते।
नरे रात्रौ च दातव्यं काले चोष्णेऽनुवासनम्॥
उष्णे पित्ताधिके वापि दिवा दाहादयो गदाः।
सम्भवन्ति यतस्तस्मात्प्रदोषे योजयेद्भिषक्॥
शीते वसन्ते च दिवा ग्रीष्मे प्रावृड्घनात्यये।
स्नेहो दिनान्ते पानोत्थान् दोषान् परिजिहीर्षता॥
अहोरात्रेषु कालेषु सर्वेष्वेवानिलाधिकम्।
तीव्रायां रुजि जीर्णान्नं भोजयित्वानुवासयेत्॥
न वा भुक्तवतः स्नेहः प्रणिधेयः कथञ्चन।
शुद्धत्वाच्छून्यकोष्ठस्य स्नेह ऊर्द्ध्वमथोत्पतेत्॥
सदानुवासयेच्चापि भोजयित्वार्द्रपाणिनम्।
ज्वरं विदग्धभुक्तस्य कुर्य्यात् स्नेहः प्रयोजितः॥
न चातिस्निग्धशमनं भोजयित्वानुवासयेत्।
मदं मूर्च्छाञ्च जनयेद्द्विधा स्नेहः प्रयोजितः॥
रूक्षं भुक्तवतो ह्यन्नं बलं वर्णञ्च ह्रापयेत्।
युक्तस्नेहमतो जन्तुं भोजयित्वानुवासयेत्॥
यूषक्षीररसैस्तस्माद्यथा व्याधिमवेक्ष्य वा।
यथोचितात्पादहीनं भोजयित्वानुवासयेत्॥
अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः।
भोजयित्वा यथाशास्त्रं कृतचंक्रमणं ततः॥

विसर्ज्यं च शकृन्मूत्रं योजयेत् स्नेहवस्तिना ।
प्रणिधानविधानन्तु निरूहे च प्रवक्ष्यते ॥
ततः प्रणिहिते स्नेह उत्तानो वाक्शतं भवेत् ।
प्रसारितैः सर्वगात्रैस्तथा वीर्य्यं विसर्पति ॥
ताड़येत्तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः ।
स्फिजोश्चैनं ततः शय्यां त्रीन् वारानुत्क्षिपेत्ततः ॥
एवं प्रणिहिते वस्तौ मन्दाय सोऽथ मन्दवाक् ।
स्वास्तीर्णे शयने काममासीताचारिके रतः ॥
स तु सैन्धवचूर्णेन शताह्वेन च योजितः ।
देयः सुखोष्णश्च तथा निरेति सहसा सुखम् ॥
तस्मात्रोत्तममध्यान्त्या षट्चतुर्द्द्यमाषकैः ।
हीनमात्रावुभौ वस्तौ नातिकार्य्यकरौ स्मृतौ ॥
अतिमात्रौ तथानाहक्लमातीसारकारकौ ।
उत्तमा स्यात्पलैः षड्भिर्मध्यमा स्यात्पलैस्त्रिभिः ॥
पलैकार्द्धेन हीना स्यादुक्ता मात्रानुवासने ।
यस्यानुवासनो दत्तः सकृदन्वत्यमात्रजेत् ॥
अत्यौष्ण्यादतितैक्ष्ण्याद्वा वायुना वा प्रपीड़ितः ।
सवातोऽधिकमात्रो वा गुरुत्वाद्वा स भेषजः ॥
तस्यान्योऽल्पतरो देयो न हि स्निह्यत्यतिष्ठति ।
विष्टब्धानिलविण्मूत्रः स्नेहहीनोऽनुवासनः ॥
दाहक्लमप्रवाहार्त्तिकरश्चात्यनुवासनः ।
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ।
उपद्रवं विना शीघ्रं स सम्यगनुवासितः ॥
जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः ।

लघ्वन्नं भोजयेत्क्षामं दीप्ताग्निस्तु नरो यदि ॥
प्रातरुष्णोदकं देयं धान्यनागरसाधितम् ।
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते ॥
स्नेहवस्तिक्रमेष्वेव विधिमाहुर्मनीषिणः ।
अनेन विधिना षड् वा सप्त वाष्टौ नवैव वा ॥
विधेया वस्तयस्तेषामन्ते चैव निरूहणम् ।
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ ॥
सम्यग् दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत् ।
जनयेद्बलवर्णौ च तृतीयस्तु प्रयोजितः ॥
रसं चतुर्थो रक्तन्तु पञ्चमः स्नेहयेत्तथा ।
षष्ठस्तु स्नेहयेन्मांसं मेदः सप्तम एव च ।
अष्टमो नवमश्चास्थि मज्जानञ्च यथाक्रमम् ।
एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ॥
अष्टादशाष्टदशकान्द्विनायो ना निषेवते ।
यथोक्तेन विधानेन परिहारक्रमेण तु ॥
स कुञ्जरबलोऽश्वस्य जवैस्तुल्योऽमरप्रभ. ।
वीतपाप्मा श्रुतिधरः सहस्रायुर्नरो भवेत् ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
स्नेहादग्निवधोत्क्लेशौ निरूहात्पवनाद्भयम् ॥
तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः ।
नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥
रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने ।
दद्याद्वैद्यस्ततोऽन्येषामग्न्याबाधभयात्त्र्यहात् ॥
स्नेहोऽल्पमात्रो रूक्षाणां सर्वकालमनत्ययः ।

तथा निरूहः स्निग्धानां स्वल्पमात्रः प्रशस्यते ॥

स्नेहवस्तिजाव्यापदः।

अत ऊर्द्ध्वं प्रवक्ष्यामि व्यापदः स्नेहवस्तिजाः।
बलवन्तो यदा दोषाः कोष्ठे स्युरनिलादयः ॥
अल्पवीर्य्यं तदा स्नेहमभिभूय पृथग्विधान्।
कुर्व्वन्त्युपद्रवान् स्नेहः स चापि न निवर्त्तते ॥
तत्र वाताभिभूते तु स्नेहे मुखकषायता।
जृम्भा वातरुजस्तास्ता वेपथुर्विषमज्वरः ॥
पित्ताभिभूते स्नेहे तु मुखस्य कटुता भवेत्।
दाहस्तृष्णा ज्वरः स्वेदो नेत्रमूत्राङ्गपीतता ॥
श्लेष्माभिभूते स्नेहे तु प्रसेको मधुरास्यता।
गौरवं छर्द्दिरुच्छ्वासः कण्डूः शीतज्वरोऽरुचिः ॥
तत्र दोषाभिभूते तु स्नेहे वस्तिं निधापयेत्।
यथास्वं दोषशमनान्युपयोज्यानि यानि च ॥
अत्याशितेऽन्नाभिभवात् स्नेहो नैति यदा तदा।
गुरुरामाशयः शूलं वायोश्चाप्रतिसञ्चरः ॥
हृत्पीडा मुखवैरस्यं श्वासो मूर्च्छा भ्रमोऽरुचिः।
तत्रापतर्पणस्यान्ते दीपनो विधिरिष्यते ॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः।
तदाङ्गसदनाध्मानौ श्वासः शूलञ्च जायते ॥
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम्।
अतितीक्ष्णौषधैरेवं सिद्धं चाप्यनुवासनम् ॥
शुद्धस्य दूरानुगते स्नेहे स्नेहस्य दर्शनम्।
गात्रेषु सर्व्वेन्द्रियाणामुपलेपोऽवसादनम् ॥

स्नेहगन्धि मुखं तत्र कासश्वासावरोचकः।
अतिपीड़ितवत्तत्र विधिरास्थापनं तथा॥
अस्विन्नस्याविशुद्धस्य स्नेहोऽल्पः सम्प्रयोजितः।
शीतो मृदुश्च नाभ्येति ततो मन्दं प्रवाहयेत्॥
विबन्धगौरवाध्मानशूलाः पक्वाशयं प्रति।
तत्रास्थापनमेवाशु प्रयोज्यं सानुवासनम्॥
अल्पं भुक्तवतोऽल्पो हि स्नेहो मन्दगुणस्तथा।
दत्तो नैति क्लमोत्क्लेशौ भृशं वारतिमावहेत्॥
तत्र वास्थापनं कार्य्यं शोधनीयेन वस्तिना।
अन्वासनञ्च स्नेहेन शोधनीयेन शस्यते॥
अहोरात्रादपि स्नेहः प्रत्यागच्छेन्न दुष्यति।
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत्॥
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः।
सर्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः स विजानत॥
अनायातं त्वहोरात्रात् स्नेहं संशोधनैर्जयेत्।
स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते॥

---

## त्रयोदशोऽध्यायः।

---

अथोत्तरवस्तिविधिः।

वस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतःपरम्।
चतुर्दशाङ्गुलं नेत्रमातुराङ्गुलसम्मितम्॥

मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमम् ।
मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥
पञ्चविंशतिवर्षाणामधो मात्रा द्विकार्षिकी ।
तदूर्द्ध्वं पलमात्रा च स्नेहस्योक्ता भिषग्वरैः ॥
निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुले ।
मूत्रस्रोतः परीणाहं मुद्गवाहिदशाङ्गुलम् ॥
तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु कन्यानान्त्वेकमङ्गुलम् ॥
औरभ्रः शौकरो वापि वस्तिराजश्च पूजितः ।
तदलाभे प्रयुञ्जीत गलचर्म्म तु पक्षिणाम् ॥
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी ।
मूत्रमार्गे पलोन्मानं बालानाञ्च द्विकार्षिकी ॥
अथातुरमुपस्निग्धं सुस्विन्नं प्रथिताशयम् ।
यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् ॥
निषण्णमाजानुसमे पीठे स्थानाश्रये समे ।
स्वभ्यक्तवस्तिमूर्द्धानं तैलेनोष्णेन मानवम् ॥
ततः समं स्थापयित्वा नालमस्य प्रहर्षितम् ।
पूर्वं शलाकयान्विष्य ततो नेत्रमनन्तरम् ॥
शनैःशनैर्घृताभ्यक्तं विदध्यादङ्गुलानि षट् ।
ततोऽवपीड़येद्वस्तिं शनैर्नेत्रञ्च निर्हरेत् ॥
ततः प्रत्यागतस्नेहमपराह्णे विचक्षणः ।
भोजयेत्पयसा मात्रां यूषेणाथ रसेन वा ॥
अनेन विधिना दद्याद्वस्तींस्त्रींश्चतुरोऽपिवा ।
ऊर्द्ध्वजान्वै क्रिये दद्यादुत्तानायै विचक्षणः ॥

अप्रत्यागच्छति भिषग्वस्तावुत्तरसंज्ञिते।
भूयो वस्तिं निदध्यात्तु संयुक्तं शोधनैर्गणे.॥
फलवर्त्तिं निदध्याद्वा शोधनद्रव्यसंभृताम्।
प्रवेशयेद्वा मतिमान् वस्तिद्वारमथैषिणीम्॥
पीडयेद्वाप्यधोनाभेर्बलेनोत्तरमुष्टिना।
आरग्वधस्य पत्रेषु निर्गुण्ड्याः स्वरसेषु च॥
कुर्य्याद्गोमूत्रपिष्टेषु वर्त्तीर्वापि ससैन्धवाः।
मुद्गैलासर्षपसमाः प्रविभज्य वयांसि तु॥
वस्तेरागमनार्थाय ता निदध्याच्छलाकया।
अगारधूमबृहतीपिप्पलीफलसैन्धवैः॥
कृता वा शुक्तगोमूत्रसुरापिष्टैः सनागरैः।
अनुवासनसिद्धिञ्च वीक्ष्य कर्म्म प्रयोजयेत्॥
शर्करामधुमिश्रेण शीतेन मधुकाम्बुना।
दह्यमाने तथा वस्तौ दद्याद्वस्तिं विचक्षणः।
क्षीरवृक्षकषायेण पयसा शीतलेन च॥

शुक्रं दुष्टं शोणितं चाङ्गनानां
पुष्पोद्रेकं तस्य नाशञ्च कष्टम्।
मूत्राघातान्मूत्रदोषान् प्रवृद्धान्
योनिव्याधिं सस्थितिं चापरायाः॥
शुक्रोत्सेकं शर्करामश्मरीञ्च
शूलं वस्तौ वङ्क्षणे मेहने च।
घोरानन्यान् वस्तिजांश्चापि रोगान्
हित्वा मेहानुत्तरो हन्ति वस्तिः॥

सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च।

वस्तेरुत्तरसञ्ज्ञस्य समानं स्नेहवस्तिना ॥

फलवर्त्तिविधिः ।

घृताभ्यक्ता गुदे क्षिप्ता श्लक्ष्णा स्वाङ्गुष्ठसन्निभा ।
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा स्मृता ॥

---

## चतुर्द्दशोऽध्यायः

---

अथातो निरूहोपक्रमचिकित्सितं
व्याख्यास्यामः ।

अथानुवासितमास्थापयेत् स्वभ्यक्तस्विन्नशरीरमुत्सृष्ट-वहिर्वेगमप्रवाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्या-यामधः सुपरिग्रहायां श्रोणिप्रदेशव्यूढ़ायामनुपधानायां वामपार्श्वशायिनमाकुञ्चितदक्षिणसक्थिमितरप्रसारितस-क्थिं सुमनसं जीर्णान्नं वाग्यतं सुनिषण्णदेहं विदित्वा ततो वामपादस्योपरिनेत्रं कृत्वेतरपादाङ्गुष्ठा-ङ्गुलिभ्यां कर्णिकामुपरि निष्पीड्य सव्यपाणिकनिष्ठिका-नामिकाभ्यां वस्तिमुखार्द्धं सङ्कोच्य मध्यमप्रदेशिन्यङ्गुष्ठै-रर्द्धन्तु विवृतास्यं कृत्वा वस्तावौषधं प्रक्षिप्य दक्षिणहस्ता-ङ्गुष्ठप्रदेशिनीभ्यां चानुसिक्तमनायतमबुद्बुदमसङ्कुचित-मवातमौषधासन्नमुपसंगृह्य पुनरितरेण गृहीत्वा दक्षि-णेनावसिञ्चेत्ततः सूत्रेणौषधान्ते द्विस्त्रिर्वाविेष्ट्य बध्नी-यात् । अथ दक्षिणेनोत्तानेन पाणिना वस्तिं गृहीत्वा

वामहस्तमध्यमाङ्गुलिप्रदेशिनीभ्यां नेत्रमुपसंगृह्याङ्गुष्ठेन नेत्रद्वारं पिधाय घृताभ्यक्ताग्रनेत्रं घृताक्तगुदाय प्रयच्छेदनुपृष्ठवंशं समसुन्मुखमाकर्णिकं नेत्रं प्रणिधत्स्वेति ब्रूयात् ।

वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् ।
एकेनैवावपीडेन न द्रुत न विलम्बितम् ॥

ततो नेत्रमपनीय त्रिंशन्मात्राः पीड़नकालादुपेक्ष्योत्तिष्ठेत्यातुरं ब्रूयात् । आतुरमुपवेशयेदुत्कटुकं वस्त्यागमनार्थं निरूहप्रत्यागमनकालस्तु मुहूर्त्तो भवति ॥

निरूहस्य प्रमाणन्तु प्रस्थं पादोत्तरं परम् ।
मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कुडवास्त्रयः ॥
अनेन विधिना वस्तिं दद्याद्वस्तिविशारदः ।
द्वितीय वा तृतीयं वा चतुर्थं वा यथार्थतः ॥
स्यङ्निरूढ़लिङ्गे तु प्राप्ते वस्तिं निवारयेत् ।
अपि हीनक्रम कुर्य्यान्न तु कुर्य्यादतिक्रमम् ॥
विशेषात्सुकुमाराणां हीन एव क्रमो हितः ।
यस्य स्याद्वस्तिरल्पवेगो हीनमलानिल. ॥
दुर्निरूढ़ः स विज्ञेयो मूत्रार्त्त्यरुचिजाड्यवान् ।
यान्ये व प्राक् प्रयुक्तानि लिङ्गान्यतिविरेचिते ॥
तान्ये वातिनिरूढ़ेऽपि विज्ञेयानि विपश्चिता ।
यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः ॥
लाघवं चोपजायते सुनिरूढ़ं तमादिशेत् ॥
सुनिरूढं ततो जन्तुं स्नातवन्तं तु भोजयेत् ।
पित्तश्लेष्मानिलाविष्टं क्षीरयुषरसैः क्रमात् ॥

सर्वं वा जाङ्गलरसैर्भोजयेदविकारिभिः ।
त्रिभागहीनमर्द्धं वा हीनमात्रमथापिवा ॥
यथाग्निदोष मात्रेयं भोजनस्य विधीयते ।
अनन्तर ततो युञ्ज्याद्यथास्वं स्नेहवस्तिना ॥
विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः ।
आस्थापनस्नेहवस्त्योः सम्यग्दाने तु लक्षणम् ॥
तदहस्तस्य पवनाद्भयं बलवदिष्यते ।
रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ॥
पश्चादग्निबलं मत्वा पवनस्य च चेष्टितम् ।
अन्नोपस्तम्भिते कोष्ठे स्नेहवस्तिर्विधीयते ॥
अनागान्तं मुहूर्त्तात्तु निरूहं शोधनैर्हरेत् ।
तीक्ष्णैर्निरूहैर्मतिमान् क्षारमूत्राम्लसयुतैः ॥
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम् ।
शूलारतिज्वरानाहं मरणं वा प्रवर्त्तयेत् ॥
न तु भुक्तवते देयमास्थापनमिति स्थितिः ।
विसूचिकां वा जनयेच्छर्द्दिं वापि सुदारुणाम् ॥
कोपयेत्सर्वदोषान् वा तस्माद्दद्यादभोजिते ।
जीर्णान्नस्याशये दोषाः पुंसः प्रव्यक्तिमागताः ॥
निःशेषाः सुखमायान्ति भोजनेनाप्रपीडिताः ।
न वास्थापनविक्षिप्तमन्नमग्निः प्रधावति ॥
तस्मादास्थापनं देयं निराहाराय जानता ।
आवस्थिकं क्रमञ्चापि मत्वा कार्य्यं निरूहणम् ॥
मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते ॥
क्षाराम्लक्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा ।

लवणानि फलक्षौद्रं शताह्वा सर्षपं वचा ॥
एला त्रिकटुकं रास्ना सरलं देवदारु च।
रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च॥
कटुका शर्करा मुस्तमुशीरं चन्दनं शटी।
मञ्जिष्ठा मदनं चण्डा त्रायमाणा रसाञ्जनम् ॥
विल्वमध्यं यमानी च फलिनी शक्रजा यवाः।
काकोली क्षीरकाकोली जीवकर्षभकावुभौ॥
तथा मेदा महामेदा ऋद्धिर्वृद्धिर्मधूलिका।
निरूहेषु यथालाभमेष वर्गो विधीयते॥

---

## पञ्चदशोऽध्यायः।

---

अत ऊर्द्धं द्वादशप्रसृतान् वक्ष्यामः।
दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम्।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम्॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत्।
संमूर्च्छिते कषायन्तु चतुःप्रसृतिसम्मितम्॥
वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम्।
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत्॥
ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम्।
अपक्वासे भिषक्कुर्य्यात्तद्वत्प्रसृतिह्रापनम्॥
यथावयो निरूहाणां कल्पनेयमुदाहृता।

सैन्धवादिद्रवान्तानां सिद्धिकामैर्भिषग्वरैः ॥
वाते चतुष्पलं चौद्रं दद्यात् स्नेहस्य षट्पलम् ।
पित्ते चतुष्पलं चौद्रं स्नेहं दद्यात्पलत्रयम् ॥
कफे तु षट्पलं चौद्रं चिपेत् स्नेहं चतुष्पलम् ॥
अत ऊर्द्ध्वं प्रवच्यन्ते वस्तयोऽत्र विभागशः ।
यथादोष प्रयुक्ता ये हन्युर्नानाविधान् गदान् ॥
शम्पाकोरुवुर्वर्षाभू वाजिगन्धा निशाच्छदैः ।
पञ्चमूली बला रास्ना गुडूची सुरदारुभिः ॥
क्वथितैः पलिकैरेभिर्मदनाष्टकसंयुतैः ।
कल्कैर्मागधिकाम्भोदहवुषामिसिसैन्धवैः ॥
वत्साह्वयप्रियङ्ग्वायश्याह्वयरसाञ्जनैः ।
दद्यादास्थापनं कोष्णं चौद्राद्यैरभिसंस्कृतम् ॥
पृष्ठोरुत्रिकशूलाश्मविण्मूत्रानिलसङ्गिनाम् ।
ग्रहणीमारुतार्शोघ्नं रक्तमांसबलप्रदम् ॥
गुडूचीत्रिफलारास्नादशमूलबलापलैः ।
क्वथितैः श्लक्ष्णपिष्टैस्तु प्रियङ्ग्वञ्जनसैन्धवैः ॥
शतपुष्पावचाकृष्णायवानीकुष्ठविल्वजैः ।
सगुडैरक्षमात्रैस्तु मदनार्द्धपलान्वितैः ॥
चौद्रतैलघृतचीरशुक्तकाञ्जिकमस्तुभिः ।
समालोड्य च मूत्रैस्तु दद्यादास्थापनं परम् ॥
तेजोवर्णबलोत्साहवीर्य्याग्निप्राणवर्द्धनम् ।
सर्वमारुतरोगघ्नं वयःस्थापनमुत्तमम् ॥
कुशादिपञ्चमूलाब्दत्रिफलोत्पलवासकैः ।
शारिवोशीरमञ्जिष्ठारास्नारेणुपरूषकैः ॥

पलिकैः क्वथितैः सम्यग् द्रव्यैरेभिश्च पेषितैः ।
शृङ्गाटकाम्मगुसेभकेसरागुरुचन्दनैः ॥
विदारीमिसिमञ्जिष्ठाश्यामेन्द्रयवसिन्धुजैः ।
फलपद्मकयष्ट्याह्वैः चौद्रचीरघृताप्लुतैः ॥
दत्तमास्थापनं शीतमम्लहीनैस्तथा द्रवैः ।
दाहासृग्दरपित्तासृक्पित्तगुल्मज्वरान् जयेत् ॥
रोध्रचन्दनमञ्जिष्ठारास्नामन्तावलर्द्धिभिः ।
सारिवावृषकाश्मर्य्यमेदामधुकपद्मकैः ॥
स्थिरादितृणमूलैश्च क्वाथ्यैः कर्षत्रयोन्मितैः ।
पिष्टैर्जीवककाकोलीयुगर्द्धिमधुकोत्पलैः ॥
प्रपौण्डरीकजीवन्तीमेदारेणुपरूषकैः ।
अभीरुमिसिसिन्धूत्थवत्सकोशीरपद्मकैः ॥
कसेरुशर्करायुक्तैः सर्पिर्मधुपयःप्लुतैः ।
द्रवैस्तीच्णाम्लवर्ज्जैश्च दत्तो वस्तिः सुशीतलः ॥
गुल्मासृग्दरहृत्पाण्डुरोगान् सविषमज्वरान् ।
असृक्पित्तातिसारौ च हन्यात्पित्तकृतान् गदान् ॥
भद्रानिम्बकुलत्थार्ककोशातक्यमृतामरैः ।
सारिवावृहतीपाठामूर्वारग्वधवत्सकैः ॥
क्वाथः कल्कस्तु कर्त्तव्यो वलामदनसर्षपैः ।
सैन्धवामरकुष्ठैलापिप्पलीबिल्वनागरैः ॥
कटुतैलमधुचारमूत्रतैलाम्बुसंयुतैः ।
कार्य्यमास्थापनं तूर्णं कामलापाण्डुमेहिनाम् ॥
मेदस्विनामनग्नीनां कफरोगाश्मनद्विषाम् ।
गलगण्डगरग्लानिश्लीपदोदररोगिणाम् ॥

दशमूलीनिशाविल्वपटोलत्रिफलामवैः ।
क्वथितैः कल्कपिष्टैस्तु मुस्तसैन्धवदारुभिः ॥
पाठामागधिकेन्द्राह्वैस्तैलक्षारमधुप्लुतैः ।
कुर्य्यादास्थापनं सम्यग्मुत्राम्लफलयोजितम् ॥
कफपाण्डुमदालस्यमूत्रमारुतसङ्गिनाम् ।
आमाटोपापचीश्लेष्मगुल्मक्रिमिविकारिणाम् ॥
वृत्राश्मभेदवर्षाभूधान्यगन्धर्वहस्तकैः ।
दशमूलबलामूर्वायवकोलनिशाच्छदैः ॥
कुलत्थविल्वभूनिम्बैः क्वथितैः पलसम्मितैः ।
कल्कैर्मदनयष्ट्याह्वषड्ग्रन्थामरसर्षपैः ॥
पिप्पलीमूलसिन्धूत्थयमानीमिसिवत्सकैः ।
क्षौद्रेक्षुक्षीरगोमूत्रसर्पिस्तैलरसप्लुतैः ॥
तूर्णमास्थापनं कार्य्यं संसृष्टबहुरोगिणाम् ।
दृषत्सौश्यर्कराष्ठीलातूणागुल्मगदापहम् ॥
रास्नारग्वधवर्षाभूकटुकोशीरवारिदैः ।
त्रायमाणामृतारक्ता पञ्चमूलविभीतकैः ॥
सबलैः पालिकैः क्वाथः कल्कस्तु मदनान्वितैः ।
यष्ट्याह्वमिसिसिन्धूत्थफलिनीन्द्रयवाह्वयैः ॥
रसाञ्जनरसक्षौद्रद्राक्षासौवीरसंयुतैः ।
युक्तो वस्तिः सुखोष्णोऽयं मांसशुक्रबलौजसाम् ॥
आयुषोऽग्नेश्च संस्कर्त्ता हन्ति चाशु गदानिमान् ।
गुल्मासृग्दरवीसर्पमूत्रकृच्छ्रक्षतक्षयान् ॥
विषमज्वरमर्शांसि ग्रहणीं वातकुण्डलीम् ।
जानुजङ्घाशिरोवस्तिग्रहोदावर्त्तमारुतान् ॥

वातासृक्शर्कराष्ठीलाकुक्षिशूलोदरारुचीः।
रक्तपित्तकफोन्मादप्रमेहाध्मानहृद्ग्रहान्॥
वातघ्नौषधनिःक्वाथाः सैन्धवत्रिवृतायुताः।
साम्लाः सुखोष्णा योज्याः स्युर्वस्तयः कुपितेऽनिले॥
न्यग्रोधादिगणक्वाथाः काकोल्यादिसमायुताः।
विधेया वस्तयः पित्ते ससर्पिष्काः सशर्कराः॥
आरग्वधादिनिःक्वाथाः पिप्पल्यादिसमायुताः।
सक्षौद्रमूत्रा देयाः स्युर्वस्तयः कुपिते कफे॥
शर्करेक्षुरसक्षीरघृतयुक्ताः सुशीतलाः।
क्षीरवृक्षकषायाढ्या वस्तयः शोणिते हिताः॥
शोधनद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः।
युक्ताः खजेन मथिता वस्तयः शोधनाः स्मृताः॥
त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः।
ऊषकादिप्रतीवापा वस्तयो लेखनाः स्मृताः॥
बृंहणद्रव्यनिःक्वाथाः कल्कैर्मधुरकैर्युताः।
सर्पिर्मांसरसोपेता वस्तयो बृंहणाः स्मृताः॥
चटकाण्डोच्चटाक्वाथाः सक्षीरघृतशर्कराः।
आत्मगुप्ताफलावापाः स्मृता वाजीकरा नृणाम्॥
विदार्य्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः।
क्षीरसिद्धाः क्षौद्रयुताः सास्राः पिच्छिलसंज्ञिताः॥
वाराहमाहिषौरभ्रवैडालैणेयकौक्कुटम्।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु॥
प्रियङ्ग्वादिगणक्वाथा अम्बष्ठाद्येन संयुताः।
सक्षौद्राः सघृताश्चैव ग्राहिणो वस्तयः स्मृताः॥

एतेष्वेव च योगेषु स्नेहाः सिद्धाः पृथक् पृथक् ।
समस्तेष्वथवा सम्यग्विधेया स्नेहवस्तयः ॥
नरस्योत्तमसत्त्वस्य तीक्ष्णं वस्तिं निधापयेत् ।
मध्यमं मध्यसत्त्वस्य विपरीतस्य वै मृदुम् ॥
एवं कालं बलं दोषं विकारञ्च विकारवित् ।
वस्तिद्रव्यबलं चैव वीक्ष्य वस्तीन् प्रयोजयेत् ॥
दद्यादुत्क्लेशनं पूर्वं मध्ये दोषहरं पुनः ।
पश्चात्संशमनीयञ्च दद्याद्वस्तिं विचक्षणः ॥
एरण्डवीजं मधुकं पिप्पली सैन्धवं वचा ।
हवुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः ॥
शताह्वा मधुकं विल्वं कौटजं फलमेव च ।
सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः ॥
प्रियङ्गु मधुकं मुस्ता तथैव च रसाञ्जनम् ।
सक्षीरः शस्यते वस्तिर्दोषाणां शमनः परः ॥

———

# षोड़शोऽध्याय: ।

---

कृपाणां तत्समानानां तथा सुमहतामपि ।
नारीणां सुकुमाराणां शिशुस्थविरयोरपि ॥
दोषनिर्हरणार्थाय बलवर्णोदयाय च ।
समासेनोपदेक्ष्यामि विधान माधुतैलिकम् ॥
यानस्त्रीभोज्यपानेषु नियमश्चात्र नोच्यते ।
फलञ्च विपुलं दृष्टं व्यापदाञ्चाप्यसम्भव: ॥
योज्यस्त्वत: सुखेनैव निरूहक्रममिच्छता ।
यदेच्छति तदैवैष प्रयोक्तव्यो विपश्चिता ॥
एरण्डक्वाथतुल्यांशं मधु तैलं पलाष्टकम् ।
शतपुष्पापलार्द्धेन सैन्धवार्द्धेन सयुतम् ॥
माधुतैलिकसंज्ञोऽय वस्तिर्दार्वीविलोडित: ।
मेदोगुल्मक्रिमिप्लीहमलोदावर्त्तनाशन: ॥
एरण्डमूलनि:क्वाथो मधु तैल ससैन्धवम् ।
एष युक्तरथो वस्ति: सवचापिप्पलीफल: ॥
पञ्चमूलस्य नि क्वाथैस्तैलं मागधिका मधु ।
ससैन्धव: सयष्ट्याह्व: सिद्धवस्तिरिति स्मृत: ॥
क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत् ।
हवुषासैन्धवाक्षांशो वस्ति: स्याद्दीपन: पर: ॥
मुस्तापाठामृतातिक्ताबलारास्नापुनर्नवा: ।
मञ्जिष्ठारग्वधोशीरत्रायमाणाख्यगोक्षुरान् ॥
पालिकान् पञ्चमूलाल्पसहितान् मदनाष्टकम् ।
जलाढ़के पचेत् क्वाथं पादशेषं पुन: पचेत् ॥

क्षीरप्रस्थेन संयुक्तं क्षीरशेषं परिस्रुतम् ।
पादेन जाङ्गलरसस्तया मधु घृतं समम् ॥
शताह्वाफलिनीयष्टीवत्सकैः सरसाञ्जनैः ।
कार्षिकैः सैन्धवयुतैः कल्कैर्वस्तिः प्रयोजितः ॥
वातासृग्मेहशोफार्शोगुल्ममूत्रविबन्धनुत् ।
विसर्पज्वरविड्भङ्गरक्तपित्तविनाशनः ॥
बल्यः सञ्जीवनो वृष्यश्चक्षुष्यः शूलनाशनः ।
स्थापनानामयं राजा वस्तिर्मुस्तादिको मतः ॥
अवेक्ष्य भेषजं बुद्ध्या विकारञ्च विकारवित् ।
वीजेनानेन मतिमान् कुर्य्याद्वस्तिशतान्यपि ॥
स्नानमुष्णोदकैः कुर्य्याद्दिवास्वप्नमजीर्णताम् ।
वर्जयेदपरं सर्वमाचरेत् स्नेहवस्तिवत् ॥
यस्मान्मधु च तैलञ्च प्राधान्येन प्रदीयते ।
माधुतैलिक इत्येवं भिषग्भिर्वस्तिरुच्यते ॥
बलोपचयवर्णानां यस्माद्व्याधिशतस्य च ।
भवत्येतेन सिद्धिस्तु सिद्धवस्तिरतो मतः ॥
सुखिनामल्पदोषाणां नित्यं स्निग्धाश्च ये नराः ।
मृदुकोष्ठाश्च ये तेषां विधेया माधुतैलिकाः ॥
मृदुत्वात्पादहीनत्वादक्लत्स्नविधिसेवनात् ।
एकवस्तिप्रदानाच्च सिद्धवस्तिष्वयन्त्रणा ॥
यस्यौषधस्य या मात्रा सेवने परिकीर्त्तिता ।
ततः पञ्चगुणं मानं वस्तिकर्म्मणि सम्मतम् ॥
सेवितं यान् गुणान् कुर्य्यान्मुखमार्गेण भेषजम् ।
वस्तिप्रयोजितञ्चातः कुर्य्याद्धीनतरान् यतः ॥

धुस्तूरमहिफेनञ्च यदन्यन्मदकारि च।
सकृद्द्विर्वाप्यवहितो बहुशो न प्रयोजयेत्॥
यः सम्यग्हीनशक्तित्वात्स्न्नालोपादथापि वा
भोक्तुं किञ्चिन्न शक्नोति गुदमार्गेण योजयेत्॥
वस्तियोगात्फलरसं क्षीरं यूषादिकं तथा।
यतो जीवत्यन्नेनापि प्राप्याहारगुणं नरः॥

---

## सप्तदशोऽध्यायः।

---

अथातो नेत्रवस्तिव्यापच्चिकित्सितं
व्याख्यास्यामः।

अथ नेत्रे विचलिते तथा चैव विवर्त्तिते।
गुदे क्षतं रुजा वा स्यात्तत्र सद्यः क्षतक्रिया॥
अत्युत्क्षिप्तेऽवसन्ने च नेत्रे पायौ भवेद्रुजा।
विधिरत्रापि पित्तघ्नः कार्य्यः स्नेहैश्च सेचनम्॥
तिर्य्यक् प्रणिहिते नेत्रे तथा पार्श्वावपीड़िते।
मुखस्यावरणाद्वस्तिर्न सम्यक् प्रतिपद्यते॥
ऋजु नेत्रं विधेयं स्यात्तत्र सम्यग्विजानता।
अतिस्थूले कर्कशे च नेत्रे चावनते तथा॥
गुदे भवेत् क्षत रुक् च साधनं पूर्ववत् स्मृतम्॥
आसन्नकर्णिके नेत्रे भिन्नेऽणौ वाप्यपार्थकः।
अवसेको भवेद्वस्ते स्तस्माद्दोषान् विवर्जयेत्॥

प्रकृष्टकर्णिके रक्तं गुदमर्म्मप्रपीड़नात् ।
चरत्यन्त्रापि पित्तघ्नो विधिर्वस्तिश्च पिच्छिलः ॥
ऋस्वे त्वणुस्रोतसि च क्लेशी वस्तिश्च पूर्ववत् ।
प्रत्यागच्छंस्तत' कुर्य्याद्रोगान् वस्तिविघातजान् ॥
दीर्घे महास्रोतसि च ज्ञेयमत्यवपीड़वत् ॥
प्रस्तीर्णे बहले चापि वस्तौ दुर्बद्धदोषवत् ॥
वस्तावल्पेऽल्पता वापि द्रव्यस्याल्पगुणा मताः ॥
दुर्बद्धे चाणुभिन्ने च विद्धिरं भिन्ननेत्रवत् ॥
अतिप्रपीड़ितो वस्तिः प्रयात्यामाशयं ततः ।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥
तत्र तूर्णं गलापीडं कुर्य्याच्चाप्यवधूननम् ।
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥
शनैः प्रपीड़ितो वस्तिः पक्वाधानं न गच्छति ।
न च सम्पादयत्यर्थांस्तस्मान्नातिप्रपीडयेत् ॥
भूयोभूयोऽवपीडेन वायुरन्तः प्रपीड्यते ।
तेनाध्मानं रुजश्चोग्रा यथास्वं तत्र वस्तयः ॥
कालातिक्रमणात् क्लेशो व्याधिश्चापि प्रवर्द्धते ।
तत्र व्याधिवलघ्नन्तु भूयो वस्तिं निधापयेत् ॥
गुदोपदेहशोफौ तु स्नेहोऽपक्वः करोति हि ।
तत्र संशोधनो वस्तिर्हितं चापि विरेचनम् ॥
हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ मतौ ।
अतिमात्रौ तथानाहक्लमातीसारकारकौ ॥
मूर्च्छां दाहमतीसारं पित्तं चात्युष्णतीक्ष्णकौ ।
मृदुशीतावुभौ वातविबन्धाध्मानकारकौ ॥

तत्र हीनादिषु हितः प्रत्यनीक क्रियाविधिः ॥
तत्र सान्द्रे तनुं वस्तिं तनौ सान्द्रञ्च दापयेत् ।
स्निग्धोऽतिजाड्यकृद्रूक्ष' स्तम्भाध्मानकृदुच्यते ॥
वस्तिं रूक्षमतिस्निग्धे स्निग्धं रूक्षे च दापयेत् ॥
अतिपीडितवद्दोषान् विधिं चाप्यवशीर्षके ॥
उच्छीर्षके ससुन्नाहं वस्तिः कुर्य्याच्च मेहनम् ।
तत्रोत्तरौ हितौ वस्तिः सुस्विन्नस्य सुखावहः ॥
न्युब्जस्य वस्तिर्नाप्नोति पक्वाधानं विमार्गगः ।
हृद्गद बाधते चात्र वायुः कोष्ठमथापि च ॥
उत्तानस्यावृते मार्गे वस्तिर्नान्तः प्रपद्यते ।
नेत्रसम्वेजनस्थान्तो वायुश्चान्तः प्रकुप्यति ॥
देहे सङ्कुचिते दत्तः सक्थ्नोरप्युभयोस्तथा ।
न सम्यगनिलाविष्टो वस्तिः प्रत्येति देहिन' ॥
स्थितस्य वस्तिर्दत्तस्तु चिप्रमायात्यवाङ्मुखः ।
न चाशयं तर्पयति तस्मान्नार्थकरो हि स' ॥
नाप्नोति वस्तिर्दत्तस्तु कृत्स्नं पक्वाशयं पुन' ।
दक्षिणाश्रितपार्श्वस्य वामपार्श्वानुगो हित' ॥
न्युब्जादीनां प्रदानञ्च वस्तेर्नैव प्रशस्यते ।
पश्चादनिलकोपोऽत्र यथास्वं तत्र कारयेत् ॥
व्यापदः स्नेहवस्तेस्तु प्रोक्तास्तत्र चिकित्सिते ।
अयोगाद्यास्तु वक्ष्यामि व्यापदः सचिकित्सिता' ॥
अनुष्णोऽल्पौषधो हीनो वस्तिर्नैति प्रयोजितः ।
विष्टम्भाध्मानशूलैश्च तमयोगं प्रचक्षते ॥
तत्र तीक्ष्णो हितो वस्तिस्तीक्ष्णं चापि विरेचनम् ॥

समीषान्ने तथा भुक्ते बहुदोषे च योजितः ।
अत्याशितस्यातिबहुर्वस्तिर्मन्दोष्ण एव च ॥
अनुष्णलवणस्नेहो ह्यतिमात्रोऽथवा पुनः ।
तथा बहुपुरीषञ्च क्षिप्रमाध्मापयेन्नरम् ॥
हृत्कटीपार्श्वपृष्ठेषु शूलं तत्रातिदारुणम् ।
तत्र तीक्ष्णतरो वस्तिर्हितं चाप्यनुवासनम् ॥
अतितीक्ष्णोष्णलवणो रूक्षो वस्तिः प्रयोजितः ।
सपित्तं कोपयेद्वायुं कुर्य्याच्च परिकर्त्तिकाम् ॥
नाभिवस्तिगुदं तत्र छिनत्तीवाति देहिनः ।
पिच्छावस्तिर्हितस्तत्र स्नेहश्च मधुरैः स्मृतः ॥
अत्यम्ललवणस्तीक्ष्णः परिस्रावाय कल्पते ।
दौर्बल्यमङ्गसादश्च जायते तत्र देहिनः ॥
परिस्रवेत्ततः पित्तं दाहं सञ्जनयेद्गुदे ।
पिच्छावस्तिर्हितस्तत्र वस्तिः क्षीरघृतस्य च ॥
प्रवाहिका भवेत्तीक्ष्णान्निरूहात्सानुवासनात् ।
सदाहशूलं कृच्छ्रेण वास्त्रत्रोपवेश्यते ॥
पिच्छावस्तिर्हितस्तत्र पयसा चापि भोजनम् ।
सर्पिर्मधुरकैः सिद्धं तैलं चाप्यनुवासनम् ॥
अतितीक्ष्णो निरूहो वा सवाते चानुवासनः ।
हृदयस्योपसरणं कुरुते चाङ्गपीड़नम् ॥
दोषैस्तत्र रुजस्तास्ता मदो मूर्च्छाङ्गगौरवम् ।
सर्वदोषहरं वस्तिं शोधनं तत्र दापयेत् ॥
रूक्षस्य बहुवातस्य तथा दुःशयितस्य च ।
वस्तिरङ्गग्रहं कुर्य्याद्रूक्षो मृद्वल्पभेषजः ॥

तत्राङ्गसदः प्रस्तम्भो जृम्भोद्वेष्टनवेपकाः ।
पर्वभेदश्च तत्रेष्टाः स्वेदाभ्यञ्जनवस्तयः ॥
अत्युष्णतीक्ष्णोऽतिबहुर्दत्तोऽतिस्वेदितस्य च ।
अल्पदोषस्य वा वस्तिरतियोगाय कल्पते ॥
विरेचनातियोगेन समानं तच्चिकित्सितम् ।
पिच्छावस्तिप्रयोगश्च तत्र शीतः सुखावहः ॥
अतियोगात्परं यत्र जीवादानं विरिक्तवत् ।
देयस्तत्र हितश्चापि पिच्छावस्तिः सशोणितः ॥
नवैता व्यापदो यास्तु निरूहं प्रत्युदाहृताः ।
स्नेहवस्तिष्वपि हि ता विज्ञेया कुशलैरिह ॥
इत्युक्ता व्यापदः सर्वाः सलक्षणचिकित्सिताः ।
भिषजा च तथा कार्य्यं यथैता न भवन्ति हि ॥

---

## अष्टादशोऽध्यायः ।

---

### नस्यग्रहणविधिः ।

नस्यं तत्कथ्यते धीरैर्नासाग्राह्यं यदौषधम् ।
नावनं नस्यकर्मेति तस्य नामद्वयं मतम् ॥
नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् ।
कफपित्तानिलध्वंसी पूर्वमध्यापराह्णके ॥
दिनस्य गृह्यते नस्यं रात्रावप्युत्कटे गदे ॥

नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चोपतर्पितः ।
तथा नवप्रतिश्यायी गर्भिणी ज्वरदूषितः ॥
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ।
क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ ॥
वेगावरोधी श्रान्तश्च स्नातुकामश्च वर्ज्जयेत् ॥
अष्टवर्षस्य बालस्य नस्यकर्म्म समाचरेत् ।
अशीतिवर्षादूर्द्ध्वञ्च नावनं नैव दीयते ॥

अथ वैरेचनं नस्यं ग्राह्यं तैले सुतीक्ष्णकैः ।
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथैरसैस्तथा ॥
नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च विन्दवः ।
प्रत्येकं रेचनं योग्यं मुख्यमध्याल्पमात्रया ॥
नस्यकर्म्मणि दातव्यं शाणैकं तीक्ष्णमौषधम् ।
हिङ्गु स्याद्यवमात्रन्तु माषैकं सैन्धवं मतम् ॥
क्षीरञ्चैवाष्टशाणं स्यात्पानीयञ्च त्रिकार्षिकम् ।
कार्षिकं मधुरद्रव्यं नस्यकर्म्मणि योजयेत् ॥
अवपीडः प्रधमनं द्वौ भेदावपरौ स्मृतौ ।
शिरोविरेचनस्यार्थे तौ तु देयौ यथायथम् ॥
कल्कीकृतादौषधाद्यः पीडितो निःसृतो रसः ।
सोऽवपीड़ः समुद्दिष्टस्तीक्ष्णद्रव्यसमुद्भवः ॥
षडङ्गुला द्विवक्त्रा या नाडी चूर्णं तया धमेत् ।
तीक्ष्णं कोलमितं वक्त्रवाते. प्रधमनं हितम् ।
ऊर्द्ध्वजत्रुगते रोगे कफजे स्वरसंक्षये ।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥
शोफापस्मारकुष्ठेषु नस्यं वैरेचनं हितम् ।

भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ॥
गलरोगे सन्निपाते निद्रायां विषमज्वरे ।
मनोविकारे कृमिषु युज्यते चावपीडनम् ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते ।
चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः ॥

नस्यं स्याद्गुडशुण्ठीभ्यां पिप्पलीसैन्धवेन वा ।
जलपिष्टेन कर्णाक्षिनासामूर्द्धभवा गदाः ॥
मन्याहनुगलोद्भूता नश्यन्ति भुजपृष्ठजाः ।
मधूकसारकृष्णाभ्यां वचामरिचसैन्धवैः ॥
नस्यं कोष्णाम्भसा पिष्टं दद्यात्संज्ञाप्रबोधनम् ।
अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके ॥
सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च ।
वस्तमूत्रेण संपिष्टं नस्यं तन्द्रानिवारणम् ॥
रोहितस्य च पित्तेन भावितं मरिचं वचा ।
कट्फलं चेति तच्चूर्णं देयं प्रधमनं बुधैः ॥

अथ बृंहणनस्यस्य कल्पना कथ्यतेऽधुना ।
मर्शश्च प्रतिमर्शश्च द्वौ भेदौ स्नेहने मतौ ॥
मर्शस्य तर्पणी मात्रा मुख्या शाणैः स्मृताष्टभिः ।
मध्यमा तु चतुःशाणैर्हीना शाणमिता मता ॥
एकैकस्मिंस्तु मात्रेयं देया नासापुटे बुधैः ।
मर्शस्य द्वित्रिवेलं वा वीक्ष्य दोषबलाबलम् ॥
एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः ।
त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितः ॥
मर्शे शिरोविरेके च व्यापदो विविधाः स्मृताः ।

दोषोत्क्लेशात् चयाच्चैव विज्ञेयास्ता यथाक्रमम् ॥
दोषोत्क्लेशनिमित्तासु युञ्ज्याद्दमनशोधनम्।
अथ चयनिमित्तासु यथास्वं बृंहणं हितम् ॥
शिरोनासाक्षिरोगेषु सूर्य्यावर्त्तार्द्धभेदके।
दन्तरोगे बले हीने मन्याबाहंसजे गदे ॥
मुखशोषे कर्णनादे वातपित्तगदे तथा।
अकालपलिते चैव केशश्मश्रुप्रपातने ॥
पूज्यते बृंहणं नस्यं स्नेहैर्वा मधुरद्रवैः ॥
सशर्करं पयःपिष्टं भृष्टमाज्येन कुङ्कुमम्।
नस्यप्रयोगतो हन्याद्वातरक्तभवा रुजः ॥
भ्रूशङ्खाक्षिशिरःकर्णसूर्य्यावर्त्तार्द्धभेदकान्।
नस्यं स्यादणुतैलेन तथा नारायणेन वा ॥
माषादिना वा सर्पिर्भिस्तत्तद्भेषजसाधितैः ॥

अणुतैलमुक्तं सुश्रुतेन। तद्यथा, तिलपरिपीड़नोपकरणकाष्ठान्याहृत्य यैरनल्पकालं तिलाः परिपीडितास्तान्यणूनि खण्डशः कल्पयित्वा उदूखले संकुट्य कटाहे पानीयेनाप्लाव्य क्वाथयेत्ततस्तैलं निःसरति तत्तैलं हस्तेन जलान्निःसार्य्य वातघ्नौषधकल्केन पचेत्। तदणुतैलमिति तद्वातरोगहरम्।

तैलं कफे स्याद्वाते च केवले पवने तथा।
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्जानमेव च ॥
माषात्मगुप्तरास्नाभिर्बलारुवुकरोहिषैः।
कृतोऽश्वगन्धया क्वाथो हिङ्गुसैन्धवसंयुतः ॥
कोष्णो नस्यप्रयोगेण पक्षाघातं सकम्पनम्।

ऊर्ध्वदृष्टितवातञ्च मन्यास्तम्भावबाहुकौ॥
प्रतिमर्शस्य मात्रा तु द्विविन्दुमिता मता।
प्रत्येकशो नासिकया स्नेहनेऽतिविनिश्चितम्॥
स्नेहे ग्रन्थिद्वयं यावन्निमग्ना चोद्धृता ततः।
तर्ज्जनी य स्रवेद्विन्दुं सा मात्रा विन्दुसंज्ञिता॥
एवंविधैर्विन्दुसंज्ञैरष्टाभिः शाण उच्यते।
स देयो मर्शनस्येषु प्रतिमर्शो द्विविन्दुकः॥
समयाः प्रतिमर्शस्य बुधैः प्रोक्ताश्चतुर्द्दश।
प्रभाते दन्तकाष्ठान्ते गृहान्निर्गमने तथा॥
व्यायामाध्वव्यवायान्ते विण्मूत्रान्तेऽञ्जने कृते।
कवलान्ते भोजनान्ते दिवास्वप्नोत्थिते तथा॥
वमनान्ते तथा सायं प्रतिमर्शः प्रयुज्यते।
ईषदुच्छिङ्कनात् स्नेहो यथा वक्त्रं प्रपद्यते॥
नस्ये निषिक्तं त विद्यात्प्रतिमर्शप्रमाणतः।
उच्छिष्टं न पिबेच्चैतन्निष्ठीवेन्मुखमागतम्॥
क्षीणे तृष्णास्यशोषार्त्ते बाले वृद्धे च पूज्यते।
प्रतिमर्शान्न जायन्ते रोगाश्चैवोर्द्ध्वजत्रुजाः॥
वलीपलितनाशश्च बलमिन्द्रियजं भवेत्।
विभीतं निम्बगाम्भारी शिवा शेलुश्च काकिनी॥
एकैकतैलनस्येन पलित नश्यति ध्रुवम्॥
अथ नस्यविधिं वक्ष्ये नस्यग्रहणहेतवे।
देशे वातरजोमुक्ते कृतदन्तनिघर्षणम्॥
विशुद्धं धूमपानेन स्विन्नभालगल तथा।
उत्तानशायिनं किञ्चित्प्रलम्बशिरसं नरम्॥

आस्तीर्णहस्तपादञ्च वस्त्राच्छादितलोचनम्।
समुन्नामितनासाग्रं वैद्यो नस्येन योजयेत्॥
कोष्णेनाच्छिन्नधारेण हेमताराादिशुक्तिभिः।
शुक्त्या वा यत्र युक्त्या वा प्लोतैर्वा नस्यमाचरेत्॥
नस्येष्वासिच्यमानेषु शिरो नैव प्रकम्पयेत्।
न कुप्येन्न प्रभाषेत नोच्छिङ्क्षेन्न हसेत्तथा॥
एतैर्हि विहितः स्नेहो नैवान्तः सम्प्रपद्यते।
ततः कासप्रतिश्यायशिरोऽक्षिगदसम्भवः।
शृङ्गाटकमभिव्याप्य स्थापयेन्न गिलेद्द्रवम्॥
पञ्चसप्तदशैव स्युर्मात्राः स्नेहस्य धारणे।
उपविश्याथ निष्ठीवेन्नासावक्त्रागतं द्रवम्॥
वामदक्षिणपार्श्वाभ्यां निष्ठीवेत्सम्मुखं न हि।
नीते नस्ये मनस्तापं रजः क्रोधञ्च सन्त्यजेत्॥
शयीत निद्रां त्यक्त्वा च प्रोत्तानो वाक्शतं नरः।
तथा शिरोविरेकान्ते धूमो वा कवलो हितः॥
नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः।
शुद्धिहीनातियोगा हि विज्ञेयाः शास्त्रचिन्तकैः॥
लाघवं मलसंशुद्धिः स्रोतसां व्याधिसङ्क्षयः।
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम्॥
कण्डूप्रदेहौ गुरुता स्रोतसां कफसंस्रवः।
मूर्द्ध्नि हीनविशुद्धे तु लक्षणं परिकीर्त्तितम्॥
मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः।
शून्यता शिरसश्चापि मूर्द्ध्नि गाढं विरेचिते॥
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्।

तत्र हीनेन नस्येन शुद्धे वातघ्नमाचरेत् ॥
सम्यग्विशुद्धे शिरसि सर्पिर्नस्येन दीयते ।
कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः ॥
लक्षणं तदतिस्निग्धे तत्र रूक्षं प्रदापयेत् ।
भोजयेच्चानभिष्यन्दि नस्ये वातिक्रमादिशेत् ॥

---

# ऊनविंशोऽध्यायः ।

---

अथ धूमपानविधिः ।

धूमस्तु षड्विधः प्रोक्तः शमनो बृंहणस्तथा ।
रेचनः कासहा चैव वामनो व्रणधूपनः ॥
शमनस्य तु पर्य्यायौ मध्यः प्रायोगिकस्तथा ।
बृंहणस्य च पर्य्यायौ स्नेहनो मृदुरेव च ॥
रेचनस्यापि पर्य्यायौ शोधनस्तीक्ष्ण एव च ।
अधूमार्हाश्च खल्वेते श्रान्तो भीतश्च दुःखितः ॥
दत्तवस्तिर्विरिक्तश्च रात्रौ जागरितस्तथा ।
पिपासितश्च दाहार्त्तस्तालुशोषी तथोदरी ॥
शिरोऽभितापी तिमिरी छर्द्याध्मानप्रपीड़ितः ।
क्षतोरस्कः प्रमेहार्त्तः पाण्डुरोगी च गर्भिणी ॥
रूक्षः क्षीणोऽभ्यवहृतक्षीरक्षौद्रघृतासवः ।
भुक्तान्नदधिमत्स्यश्च बालो वृद्धः कृशस्तथा ॥
अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान् ।
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ॥
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा ।
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥
धूमस्तु द्वादशाद्वर्षाद् गृह्यतेऽशीतकान्न च ।
कासश्वासप्रतिश्यायान्मन्याहनुशिरोरुजः ॥

वातश्लेष्मविकारांश्च हन्याद्धूमः सुयोजितः।
धूमोपयोगात्पुरुषः प्रसन्नेन्द्रियवाङ्मनाः॥
दृढ़केशद्विजश्मश्रुः सुगन्धिवदनो भवेत्॥
धूमनाड़ी भवेत्तत्र त्रिखण्डा च त्रिपर्विका।
कनिष्ठिका परीणाहा राजमाषागमान्तरा॥
धूमनाडी भवेद्दीर्घा शमने रोगिणोऽङ्गुलैः।
चत्वारिंशन्मितैस्तद्वद्द्वात्रिंशद्भिर्मृदौ मता॥
तीक्ष्णे चतुर्विंशतिभिः कासघ्ने षोडशोन्मितैः।
दशाङ्गुलैर्वामनीये तथा स्याद्व्रणनाड़िका॥
कलायमण्डलस्थूला कुलत्थागमरन्ध्रिका॥
अथैषिकां प्रलिम्पेच्च सुश्लक्ष्णां द्वादशाङ्गुलाम्
धूमद्रव्यस्य कल्केन लेपश्चाष्टाङ्गुलः स्मृतः॥
कल्कं कर्षमितं लिप्त्वा छायाशुष्कञ्च कारयेत्।
इषिकामपनीयाथ स्नेहाक्तां वर्त्तिमादरात्॥
अङ्गारैर्दीपितां कृत्वा धृत्वा नेत्रस्य रन्ध्रके।
वदनेन पिबेद्धूमं वदनेनैव संत्यजेत्॥
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत्सुधीः।
शरावसंपुटे क्षिप्त्वा कल्कमङ्गारदीपितम्॥
छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत्।
एलादिकल्कं शमने स्निग्धं सर्ज्जरस मृदौ॥
रेचने तीक्ष्णकल्कञ्च श्वासघ्ने क्षुद्रिकोषणम्।
वामने स्नायुचर्म्माद्यं दद्याद्धूमस्य पानकम्॥
व्रणे निम्बवचाद्यञ्च धूपनं संप्रशस्यते।
अन्येऽपि धूमा गेहेषु कर्त्तव्या रोगशान्तये॥

तद्यथा । मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम् ।
मरिचं हिङ्गु मांसी च वीजं कार्पाससम्भवम् ॥
छागरोमाहिनिर्म्मोको विष्ठा वैड़ालिकी तथा ।
गजदन्तश्च तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥
गेहेषु धूपनं दत्तं सर्वान् बालग्रहान् जयेत् ।
पिशाचान् राक्षसान्हत्वा सर्वज्वरहरं भवेत् ॥
इत्यपराजितो धूमः ।
मनस्तापं रजः क्रोधं धूमपाने निवारयेत् ।
नेत्राणि धातुजान्याहुर्नलवंशादिजान्यपि ॥



# विंशोऽध्यायः।

---

अथ गण्डूषकवलप्रतिसारणविधिः।

तत्र गण्डूषकवलप्रतिसारणाना भेदकानि लक्षणा न्याह। तत्रादौ गण्डूष उच्यते।

स्नेहचीरकषायार्द्यद्रवैः संपूर्णमाननम्।
आपूर्य स्थीयते तावद्विधिर्गण्डूषधारणे॥
कफपूर्णास्यता यावच्छेदो दोषस्य वामयेत्।
नेत्रघ्राणस्रुतिर्यावत्तावद्गण्डूषधारणम्॥
गण्डूषान् सुस्थितः कुर्य्यात् स्विन्नभालगलादिकः।
मनुष्यस्त्रींस्तथा पञ्च सप्त वा दोषनाशनात्॥
चतुर्विधः स्याद्गण्डूषः स्नेहनः शमनस्तथा।
शोधनो रोपणश्चैव कवलश्चापि तादृशः॥
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणै रूक्षैः संशोधनं कफे।
कषायतिक्तमधुरैः कटूष्णो रोपणो व्रणे॥
दद्याद्द्रवेषु चूर्णञ्च गण्डूषे कोलमात्रकम्।
कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः॥
धार्य्यन्ते पञ्चमाद्वर्षाद्गण्डूषाः कवलादयः।
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्॥
इन्द्रियाणां प्रसादश्च गण्डूषे क्लिष्टते भवेत्।

हरेदास्यस्य वैरस्यं शोषपाकं व्रणं तृषाम्॥
दन्तचालञ्च गण्डूषो वैशद्यं तु करोति हि॥

अथ कवलः।

वातपित्तकफघ्नस्य द्रवस्य कवलं मुखे।
अर्द्धं निक्षिप्य संचर्व्य निष्ठीवेत्कवले विधिः॥
कवलः कुरुते काङ्क्षां भक्ष्येषु हरते कफम्।
तृष्णां शोषञ्च वैरस्यं दन्तचालञ्च नाशयेत्॥

अथ प्रतिसारणम्।

दन्तजिह्वामुखानां यच्चूर्णकल्कावलेहकैः।
शनैर्वर्षणमङ्गुल्या तदुक्तं प्रतिसारणम्॥
वैरस्यं मुखदौर्गन्ध्यं मुखशोषं तथा तृषाम्।
अरुचिं दन्तपीडाञ्च निहन्ति प्रतिसारणम्॥
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च।
अतियोगान्मुखे पाकः शोषस्तृष्णा वमिः क्लमः॥

———

# एकविंशतितमोऽध्यायः ।

---

स्वेदविधिः ।

स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ।
तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥
उपनाहो वचाकिण्वशताह्वादेवदारुभिः ।
धान्यैः समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥
उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैः ।
केवले पवने श्लेष्मसंसृष्टे सुरसादिभिः ॥
पित्तेन पद्मकाद्यैश्च शाल्वनाख्यैः पुनः पुनः ।
स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ॥
अलाभे वातजित्पत्रकौशेयाविकशाटकैः ॥
बध्नं रात्रौ दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् ॥
ऊष्मा तूत्कारिकालोष्टकपालोपलपांशुभिः ।
पत्रभङ्गेन धान्येन करीषसिकतातुषैः ॥
अनेकोपायसन्तप्तैः प्रयोज्या देशकालतः ॥
अथवा वातनिर्णाशि द्रव्यक्वाथरसादिभिः ।
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं विधाय च ॥
विमुच्यास्य त्रिखण्डाञ्च धातुजां काष्ठजामुत ।
षडङ्गुलास्यां गोपुच्छां नाड़ीं युञ्ज्याद्विहस्तिकाम् ॥
सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम्

हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥
द्रवस्वेदस्तु वातघ्नद्रव्यक्वाथेन पूरिते ।
कटाहे कोष्ठके वापि सूपविष्टोऽवगाहयेत् ॥
सौवर्णं राजतं वापि ताम्रं लौहञ्च दारुजम् ।
कोष्ठकं तत्र कुर्वीतोच्छ्राये षड्विंशदङ्गुलम् ॥
आयामे वा तदेव स्याच्चतुष्कोणन्तु चिक्कणम् ॥

पक्षान्तरमाह ।

नाभेः षडङ्गुलं यावन्मग्नं क्वाथस्य धारया ।
कोष्णया स्कन्धयोः सिक्तस्तिष्ठेत् स्निग्धतनुर्नरः ॥

अयमर्थः । प्रथमतो वातघ्नद्रव्यक्वाथेन कण्ठपूरिते कोष्ठके कटाहे वा सूपविष्टस्तिष्ठेत् । अथवा नाभेः षडङ्गुलमूर्द्धं यावत् क्वाथे मग्न उपविष्टः । पश्चात् क्वाथस्य धारया स्कन्धयोः सिच्यमानस्तिष्ठेत् । यावत् कोष्ठकं परिपूर्णं भवतीत्यर्थः ।

तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले ।
अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥
मुहूर्त्तैकं समारभ्य यावत् स्यात्तच्चतुष्टयम् ।
तावत्तदवगाहेत यावदारोग्यनिश्चयः ॥

द्रवस्वेदभेदं परीषेकमाह । यथा—
शिग्रुवारुणकैरण्डकरञ्जसुरसार्ज्जकात् ।
शिरीषवासावंशार्कमालतीदीर्घवृन्ततः ॥
पत्रभङ्गैर्वचाद्यैश्च मांसैश्चानूपवारिजैः ।
दशमूलेन च पृथक्सहितैर्वा यथामलम् ॥

स्नेहवद्भिः सुराशुक्तवारिक्षीरादिसाधितैः ।
कुम्भीर्गलन्तीर्नाड़ीर्वा पूरयित्वा रुजार्द्दितम् ॥
वस्त्रावच्छादितं गात्रं स्निग्धं सिञ्चेद्यथासुखम् ॥
चौरमौर्णं वा कार्पासं तीव्रोष्णे सलिले क्षिपेत् ।
निष्काश्य सलिलं रोगभुवं संस्वेदयेद्भिषक् ॥
आध्माने चामवाते च स्वेद एष प्रशस्यते ॥
निर्वातेऽन्तर्वहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ।
व्याधिव्याधितदेशर्त्तु वशान्मध्यवरावरम् ॥
कफार्त्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ।
आमाशयगते वायौ कफे पक्वाशयाश्रिते ॥
रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ।
अल्पं वङ्क्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा ॥
पित्तास्रकोपतृष्मूर्च्छास्वराङ्गसदनभ्रमाः ।
सन्धिपीड़ा ज्वरः श्यावरक्तमण्डलदर्शनम् ॥
स्वेदातियोगाच्छर्द्दिश्च तत्र स्तम्भनमौषधम् ।
स्वेदनं गुरुतीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा ॥
प्रायस्तिक्तं कषायञ्च मधुरञ्च समासतः ॥
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ।
स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ॥
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ।
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ॥
भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्द्दितान् ।
क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीड़ितान् ॥
गर्भिणीं पुष्पितां सूतां मृदुरात्ययिके गदे ॥

श्वासकासप्रतिश्यायहिक्काध्मानविबन्धिषु।
स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे॥
अङ्गमर्दे कटीपार्श्वपृष्ठकुक्षिहनुग्रहे।
महत्त्वे मुष्कयोः खल्ल्यामाध्माने वातकण्टके।
मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते॥
कर्णनासाशिरःकोष्ठजङ्घापादोरुरुक्षु च।
स्वेदं यथायथं कुर्य्यात्तदौषधविभागतः॥

स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते।
निर्वातं गृहमायासो गुरु प्रावरणं भयम्॥
उपनाहाहवक्रोधभूरिपानं क्षुधातपः॥

कृत्वा तूलमयं चक्रं चोदान् कर्पूरसम्भवान्।
निक्षिप्य तूलचक्रेण चान्येन छादयेद्धि तत्॥
बध्नीयाद्वेदनाभूमिं तच्चक्रयुगलेन च।
आमवाते विशेषेण स्वेद एष सुखावहः॥

शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे।
दीप्तेऽग्नौ मार्द्दवे जाते स्वेदनाद्विरतिर्मता॥

स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते॥

## अथ कर्णविधिः।

स्वेदयेत्कर्णदेशन्तु किञ्चिन्नु पार्श्वशायिनः।
मूत्रैः स्नेहै रसैरुष्णैः श्रोत्ररन्ध्रं प्रपूरयेत॥
कर्णञ्च पूरितं रक्षेच्छतं पञ्चशतानि वा।

सहस्रं वापि मात्राणां श्रोत्रकण्ठशिरोगदे ॥
मूत्राद्यैः पूरणं कर्णे भोजनात्प्राक् प्रशस्यते ।
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥
कर्णे शूलाकुले कोष्णं वस्तमूत्रं ससैन्धवम् ।
निक्षिपेत्तेन शाम्यन्ति शूलपाकादिका रुजः ॥
शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च ।
कटूष्णं कर्णयोर्देयमेतत्स्याद्वेदनापहम् ॥
पीतार्कपत्रमाज्येन लिप्तं वह्नौ प्रतापयेत् ।
तद्रसः श्रवणे क्षिप्तः कर्णशूलहरः परः ॥

---

# द्वात्रिंशोऽध्यायः ।

---

अथ लेपविधिः ।

आलेपस्य तु नामानि लेपो लेपनलिप्तकौ ।
दोषघ्नो विषहा वर्ण्यः स च लेपस्त्रिधा मतः ॥
त्रिप्रमाणश्चतुर्भागस्त्रिभागोऽर्द्धाङ्गुलोन्नतः ।
आर्द्रो व्याधिहरः स स्याच्छुष्को दूषयति छविम् ॥

दोषघ्नो लेपो यथा—

शोथघ्नीदारुसिद्धार्थशुण्ठीशोभाञ्जनत्वचाम् ।
आरनालेन पिष्टानां प्रलेपः सर्वशोथहा ॥
शिरीषमधुयष्टी च तगरं रक्तचन्दनम् ।
एलामांसी निशायुग्मं कुष्ठं बालकमेव च ॥
इति सचूर्ण्य लेपोऽयं पञ्चमांशघृतप्लुतः ।
जलेन क्रियते सुश्रैर्दशाङ्ग इति संज्ञितः ॥
विसर्पश्च विस्फोटान् शोथदुष्टव्रणान् जयेत् ॥

विषहा लेपो यथा—

अजादुग्धतिलैर्लेपो नवनीतेन संयुतः ।
शोथमारुष्करं हन्ति लेपो वा कृष्णमार्त्तिकः ॥

वर्ण्यो लेपो यथा—

रक्तचन्दनमञ्जिष्ठालोध्रकुष्ठप्रियङ्गवः ।

वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥
अथ लेपविधिश्चैव प्रोच्यते सुश्रुसम्मतः ।
आलेपश्च प्रदेहश्च द्वौ भेदौ तस्य भाषितौ ॥
चर्म्मार्द्रं माहिष यद्वत्प्रोच्यते संमितस्तयोः ।
शीतस्तनुर्विशोषी च प्रलेप. पित्तहृन्मतः ॥
आर्द्रो घनस्तथोष्णः स्यात्प्रदेहः श्लेष्मवातहा ।
न रात्रौ लेपन कुर्य्याच्छुष्यमाणं न धारयेत् ॥
शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति ।
तमसा पिहितो ह्युष्मा लोमकूपमुखे स्थितः ॥
विना लेपेन निर्य्याति न रात्रौ लेपयेदतः ।
रात्रावपि प्रलेपादिर्व्रणे देयो विचक्षणैः ॥
अपाकिन्यतिगम्भीरे रक्तश्लेष्मसमुद्भवे ॥

लेपो यथा—

मधुकं चन्दन मूर्वां नलमूलञ्च पर्पटम् ।
उशीरं वालकं पद्मं प्रलेपः पित्तशोथहृत् ॥

प्रदेहो यथा—

बीजपूरजटाहिस्रा देवदारु महौषधम् ।
रास्नारग्विः प्रदेहोऽयं वातशोथविनाशनः ॥
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकताशिवाः ।
गोमूत्रपिष्टः कोष्णोऽयं प्रदेहः श्लेष्मशोथहा ॥

———

# त्रयोविंशोऽध्यायः।

---

अथ नेत्रप्रसादनकर्म्माणि।

सेक आश्च्योतनं पिण्डी विडालस्तर्पणं तथा।
पुटपाकोऽञ्जनञ्चेति कृत्वा नेत्रमुपाचरेत्॥

तत्र सेकविधिः।

सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः।
मीलिताक्षस्य मर्त्त्यस्य प्रदेयश्चतुरङ्गुलः॥
स सस्नेहो भवेद्वाते पित्ते रक्ते च रोपणः।
लेखनस्तु कफे कार्य्यस्तस्य मात्रा विधीयते॥
षड्भिर्वाचां शतैः स्नेहे चतुर्भिश्चैव रोपणे।
तैस्त्रिभिर्लेखने कार्य्यः सेको नेत्रप्रसादने॥
निमेषोन्मेषणं पुंसामङ्गुल्या छोटिकाथवा।
गुर्व्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः॥
सेकस्तु दिवसे कार्य्यो रात्रौ चात्यन्तिके गदे।
एरण्डस्य दलैः पिष्टैः पक्वमाजं पयो हितम्॥
सुखोष्णं नेत्रयोरन्तः सिक्तं वातार्त्तिनाशनम्॥

अथाश्च्योतनविधिः।

क्वाथक्षौद्रासवक्षेहबिन्दूनां यत्तु पातनम्।
द्व्यङ्गुलोन्मीलिते नेत्रे प्रोक्तमाश्च्योतनं हितम्॥
बिन्दवोऽष्टौ लेखनेषु रोपणे दशबिन्दवः।

स्नेहे ते द्वादश प्रोक्ताः शीतले कोष्णरूपिणः ॥
उष्णे तु शीतरूपाः स्युः सर्वत्रैवैष निश्चयः।
वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम् ॥
कफे तीक्ष्णोष्णरूक्षञ्च क्रमादाश्चोतनं हितम्।
आश्चोतनानां सर्वेषां मात्रा स्याद्वाक्शतोन्मिता ॥
ततः परं लोचनाभ्यां भेषजानामयोगतः।
आश्चोतनं न कर्त्तव्यं निशायां केनचित् क्वचित् ॥
तद्यथा। विल्वादिपञ्चमूलेन वृहत्येरण्डशिग्रुभिः।
क्वाथ आश्चोतने कोष्णो वाताभिष्यन्दनाशनः ॥

अथ पिण्डीविधिः।

युक्तभेषजकल्कस्य पिण्डी च कोलमात्रया।
वस्त्रखण्डेन सबद्धा नेत्रेऽभिष्यन्दनाशिनी ॥
स्निग्धोष्णा पिण्डिका वाते पित्ते सा शीतला मता।
रूक्षोष्णा श्लेष्मणि प्रोक्ता विधिरुक्तो बुधैरयम् ॥
सा यथा। धात्रीविरचिता पित्ते शिग्रुपत्रकृता कफे।

अथ विडालकविधिः।

विड़ालको बहिर्लेपो नेत्रे पक्ष्मविवर्जितः।
तस्य मात्रा परिज्ञेया मुखालेपविधानवत् ॥
यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः।
जलपिष्टैर्बहिर्लेप सर्वनेत्रामयापहः ॥

अत्र मुखालेपविधिरुच्यते यथा—
अङ्गुलस्य चतुर्थांशो मुखालेपो विधीयते।
मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत् ॥
स्थितिकालो न शुष्कत्वं शुष्को दूषयति त्वचम्।

अथ तर्पणविधिः ।

संशुद्धदेहशिरसो जीर्णान्नस्य शुभे दिने ।
पूर्वाह्णे चापराह्णे वा कार्य्यमक्ष्णोश्च तर्पणम् ॥
वातातपरजोहीने वेश्मन्युत्तानशायिनः ।
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ ॥
समौ दृढावसंबाधौ कर्त्तव्यौ नेत्रकोषयोः ।
पूरयेद्घृतमण्डेन विलीनेन सुखोदकैः ॥
निमग्नान्यक्षिपक्ष्माणि यावत् स्युस्तावदेव हि ।
पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः ॥
भिषग्भिरेष विख्यातस्तर्पणस्योदितो विधिः ।
यद्रूक्षं परिशुष्कञ्च नेत्रं कुटिलमाविलम् ॥
शीर्णपक्ष्म शिरोत्पातकृच्छ्रोन्मीलनसंयुतम् ।
तिमिरार्ज्जुनशुक्राद्यैरभिष्यन्दाधिमन्थकैः ॥
शुष्काक्षिपाकशोथाभ्यां युतं वातविपर्य्ययैः ।
तन्नेत्रं तर्पयेत्सम्यङ्नेत्ररोगविशारदः ॥
तर्पणं धारयेद्वर्त्मरोगे वाचां शतं बुधैः ।
स्वस्थे कफे सन्धिरोगे वाचां पञ्चशतानि च ॥
षट्शतानि कफे कृष्णारोगे सप्तशतानि हि ।
दृष्टिरोगे शतान्यष्टावधिमन्थे सहस्रकम् ॥
सहस्रं वातरोगेषु धार्य्यमेव हि तर्पणम् ।
पूर्णे चापाङ्गमार्गेण स्रावयित्वाक्षि शोधयेत् ॥
स्विन्नेन यवपिष्टेन स्नेहवीर्य्यैरितं ततः ।
यथास्वं धूमपानेन कफमस्य विरेचयेत् ॥
एकाहं वा त्र्यहं वापि पञ्चाहं तर्पणञ्चरेत् ।

तर्पणे तृप्तिलिङ्गानि नेत्रस्यैतानि लक्षयेत् ।
सुखस्वप्नावबोधत्व वैशद्यं नेत्रपाटवम् ।
निवृत्तिर्व्याधिशान्तिश्च क्रियालाघवमेव च ॥
गुर्वाविलमतिस्निग्धमश्रुकण्डूपदेहवत् ।
घर्षतोदयुतं नेत्रमतितर्पितमादिशेत् ॥
रूक्षमाविलमस्राढ्यमसह्यं रूपदर्शने ।
व्याधिवृद्धिश्च तज्ज्ञेयं हीनतर्पितमक्षि च ॥
अनयोर्दोषबाहुल्यात्प्रयतेत चिकित्सिते ।
रूक्षस्निग्धोपचाराभ्यामेतयोः स्यात्प्रतिक्रिया ॥
दुर्द्दिनात्युष्णशीतेषु चिन्तायां संभ्रमेषु च ।
अशान्तोपद्रवे चाक्षितर्पणं न प्रशस्यते ॥

अथ पुटपाकविधिः ।

अत ऊर्द्ध्वं प्रवक्ष्यामि पुटपाकप्रसाधनम् ।
द्वे बिल्वे स्निग्धमांसस्य परद्रव्यपलं मतम् ॥
द्रवस्य कुडवोन्मानं सर्वमेकत्र पेषयेत् ।
तदेकत्र समालोड्य पत्रैः सुपरिवेष्टितम् ॥
काश्मरीकुमुदैरण्डपद्मिनीकदलीभवैः ।
मृदावलिप्तमङ्गारैः खादिरैरवकूलयेत् ॥
कतकाश्मन्तकैरण्डपाटलावृषबादरैः ।
सक्षीरद्रुमकाष्ठैर्वा गोमयैर्वापि युक्तितः ॥
स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं कृशाम् ।
तर्पणोक्तेन विधिना यथावदवचारयेत् ॥
कनीनके निषेच्यः स्यान्नित्यमुत्तानशायिनः ।
स्नैहनो लेखनश्चैव रोपणश्चेति स त्रिधा ॥

हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्य स तु लेखनः।
दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत्॥
सर्पिर्मांसवसामज्जमेदःस्वादौषधैः कृतः।
स्नेहनपुटपाकः स्याद्धार्य्यौ द्वे वाक्शते दृशि॥
जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंयुतैः।
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः॥
समुद्रफेनकासीसस्रोतोजदधिमस्तुभिः।
लेखनो वाक्शतं तस्य परं धारणमिष्यते॥
स्तन्यजाङ्गलमज्जाज्यतिक्तद्रव्यविपाचितः।
लेखनात्त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः॥

तिक्तकद्रव्याण्याह यथा—

निम्बामृतावृषपटोलनिदिग्धिकाभिः।
स्यात्पञ्चतिक्तक इति प्रथितो गणोऽयम्॥
आचरेत्तर्पणोक्तान्तु क्रियां व्यापत्तिदर्शने।
तेजांस्यनिलमाकाशमादर्शं भास्वराणि च॥
नेक्षेत तर्पिते नेत्रे यस्य वा पुटपाकवान्।

अथाञ्जनम्।

अथ संपक्वदोषस्य प्राप्तमञ्जनमाचरेत्॥
अञ्जनं क्रियते येन तद्द्रव्यञ्चाञ्जनं मतम्।
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते॥
पूर्वाह्णे चापराह्णे वा ग्रीष्मे शरदि चेष्यते।
वर्षास्वनभ्रे नात्युष्णे वसन्ते च सदैव हि॥
अथवा सर्वदा प्रातः सायं वाञ्जनमाचरेत्।
नातिशीतोष्णवाताभ्रवेलायां तत्प्रयुज्यते॥

श्रान्तेऽथ रुदिते भीते पीतमद्ये नवज्वरे ।
अजीर्णे वेगघाते च नाञ्जनं संप्रयुज्यते ॥
रागोपदेहौ तिमिरं शूल संरम्भमेव च ।
निद्राक्षयञ्च कुरुते निषिद्धे युक्तमञ्जनम् ॥

गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि च ।
कुर्य्याच्छलाकयाङ्गुल्या हीनानि च यथोत्तरम् ॥
तत् प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा ।
स्नेहनञ्चेति लिङ्गानि तेषां विस्तरतः शृणु ॥
लेखन चारतीक्ष्णाम्लरसैरञ्जनमिष्यते ।
कषायतिक्तरसयुक्तस्नेह रोपणं मतम् ॥
मधुरं स्नेहसम्पन्नमञ्जनन्तु प्रसादनम् ॥

अथ वटी लेखनी यथा—

शङ्खनाभिर्विभीतस्य मज्जा पथ्या मनःशिला ।
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् ॥
छागीक्षीरेण संपिष्य वर्त्तिं कुर्य्याद्यवोन्मिताम् ।
तिमिरं मांसवृद्धिञ्च काचं पटलमर्व्वुदम् ॥
रात्र्यान्ध्यं वार्षिकं पुष्पं वर्त्तिश्चन्द्रोदया हरेत् ॥

इति चन्द्रोदया वर्त्तिर्लेखनी ।

रोपणी वटी ।

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः ।
यातीपुष्पाणि पञ्चाशन्मरिचानि तु षोड़श ॥
सूक्ष्मपिष्टाम्बुना वर्त्तिः कृता कुसुमिकाभिधा ।
तिमिरार्ज्जुनशुक्राणां नाशिनी मांसवृद्धिनुत् ॥

इति कुसुमिकावर्त्ती रोपणी ।

स्नेहनी वटी ।

धात्र्यक्षपथ्याबीजानि एकद्वित्रिगुणानि च ।
पिष्ट्वा वर्त्तिं जले कुर्य्यादञ्जनं द्विहरेणुकम् ॥
नेत्रस्रावं हरत्याशु वातरक्तरुजं तथा ॥

अथ रसक्रियालेखनी यथा—

तुत्थमाक्षिकसिन्धूत्थसिताशङ्खमनःशिलाः ।
गैरिक सिन्धुफेनञ्च मरिचञ्चेति चूर्णयेत् ॥
संयोज्य मधुना कुर्य्यादञ्जनार्थं रसक्रियाम् ।
वर्त्मरोगार्म्मतिमिरकाचशुक्रहरीं पराम् ॥

रोपणी रसक्रिया ।

रसाञ्जनं सर्ज्जरसो जातीपुष्पं मनःशिला ।
समुद्रफेनो लवणं गैरिकं मरिचं तथा ॥
एतत्समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मने ।
अञ्जनं क्लेदकण्डूघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥

स्नेहनी रसक्रिया ।

कतकस्य फलं घृष्ट्वा मधुना नेत्रमञ्जयेत् ।
ईषत्कर्पूरसहित स्मृत नेत्रप्रसादनम् ॥

अथ चूर्णाञ्जनं तल्लेखनं यथा—

दन्ताण्डत्वक्शिलाकाचशङ्खचन्दनसैन्धवैः ।
द्रव्यैरञ्जनयोगोऽयं पुष्पार्म्मादिविलेखनः ॥

रोपणचूर्णम् ।

शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा ।
गृह्णीयात्तज्जलं सर्वं त्यजेच्चूर्णमधोगतम् ॥
शुष्कं तच्च जलं सर्वं पर्पटीसन्निभं भवेत् ।

विचूर्ण्य भावयेत्सम्यक् त्रिवेल त्रिफलारसैः ॥
कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत् ।
अञ्जयेन्नयन तेन सर्वदोषप्रशान्तये ॥
समस्तनेत्ररोगघ्न चूर्णमेतन्न संशयः ॥

स्नेहनं चूर्णम् ।

अग्नितप्तं हि सौवीर निषिञ्चेत्त्रिफलारसैः ।
सप्तवेलं तथा स्तन्यैः स्त्रीणां सिक्तं विचूर्णितम् ॥
अञ्जयेत्तेन नयने प्रत्यहं चक्षुषोर्हितम् ।
सर्वानक्षिविकारांस्तु हन्यादेतन्न सशय. ॥

अथ प्रत्यञ्जनविधिः ।

गतदोषमपेताश्रु प्रपश्यत्सम्यगम्भसि ।
प्रक्षाल्याक्षि यथादोषं कार्यं प्रत्यञ्जनं ततः ॥
नचानिवृत्तदोषेऽक्षिण धावन सम्प्रयोजयेत् ॥

प्रत्यञ्जनं यथा—

शुद्धे नागे द्रुते शुद्धं तुल्य सूतं विनिक्षिपेत् ।
कृष्णाञ्जन तयोस्तुल्यं सर्वमेकत्र चूर्णयेत् ॥
दशमाशेन कर्पूरं तस्मिंश्चूर्णे प्रदापयेत् ।
एतत्प्रत्यञ्जनं नेत्रगदजिन्नयनामृतम् ॥

इति नयनामृतं प्रसादनं चूर्णाञ्जनम् ।

विषहरी वर्त्तिः ।

जयपालभवां मज्जां भावयेन्निम्बुकद्रवैः ।
एकविंशतिवेलं तु ततो वर्त्तिं प्रकल्पयेत् ॥
मनुष्यलालया घृष्ट्वा ततो नेत्रे तयाञ्जयेत् ।
सर्पदष्टविष जित्वा सञ्जीवयति मानवम् ॥

अथ दृष्टिप्रसादनी शलाका ।
त्रिफलाभृङ्गशुण्ठीनां रसैस्तद्वच्च सर्पिषा ।
गोमूत्रमध्वजाक्षीरैः सिक्तो नाग. प्रतापितः ॥
तच्छलाका हरत्येव सर्वान् नेत्रभवान् गदान् ॥

---

# चतुर्विंशोऽध्यायः ।

---

क्षारपाकविधिः ।

शस्त्रानुशस्त्रेभ्यः क्षारः प्रधानतमश्छेद्यभेद्यलेख्यकरणात्त्रिदोषघ्नत्वाद्विशेषक्रियावचारणाच्च । तत्र क्षरणात् क्षणनाद्वा क्षारः । नानौषधिसमवायात्त्रिदोषघ्नः शुक्लत्वात्सौम्यस्तस्य सौम्यस्यापि सतो दहनपचनदारणादिशक्तिरविरुद्धा । स खल्वाग्नेयौषधिगणभूयिष्ठत्वात्कटुक उष्णस्तीक्ष्णः पाचनो विलयनः शोधनो रोपणः शोषणः स्तम्भनो लेखनः कृम्यामकफकुष्ठविषमेदसामुपहन्ता पुंस्त्वस्य चातिसेवितः स द्विविधः प्रतिसारणीयः पानीयश्च । तत्र प्रतिसारणीयः कुष्ठकिटिमदद्रुकिलासमण्डलभगन्दरार्बुददुष्टव्रणनाड़ीचर्म्मकीलतिलकालकन्यच्छव्यङ्गमशकवाह्यविद्रधिकृमिविषार्शःसूपदिश्यते सप्तसु च मुखरोगेषूपजिह्वाधिजिह्वोपकुशदन्तवैदर्भेषु तिसृषु च रोहिणीष्वेतेषु चैवानुशस्त्रप्रणिधानमुक्तम् । पानीयस्तु गरगुल्मोदराग्निसङ्गाजीर्णारोचकानाहशर्कराश्मर्य्याभ्यन्तरविद्रधि-

क्रमिविषार्शःसूपयुज्यते। अहितस्तु रक्तपित्तज्वरितपित्तप्रकृतिबालवृद्धदुर्बलभ्रममदमूर्च्छातिमिरपरीतेभ्योऽन्येभ्यश्चैवंविधेभ्यः।

तञ्चेतरक्षारवद्दग्ध्वा परिस्रावयेत्स च त्रिविधो मृदुर्मध्यस्तीक्ष्णश्च। तं चिकीर्षुः शरदि गिरिसानुजं प्रशस्तदेशजातमनुपहतं मध्यमवयस्कं महान्तमसितमुष्ककं पाटयित्वा खण्डशः प्रकल्प्यावपाट्य निर्वाते देशे निचितं कृत्वा सुधाशर्कराश्च प्रक्षिप्य तिलनालैरादीपयेदथोपशान्तेऽग्नौ तद्भस्म पृथग्गृह्णीयाद्भस्मशर्कराश्च। अथानेनैव विधानेन कुटजपलाशाश्वकर्णपारिभद्रकबिभीतकारग्वधतिल्वकार्कस्नुह्यपामार्गपाटलानक्तमालवृषकदलीचित्रकपूतीकेन्द्रवृक्षास्फोताश्वमारकसप्तच्छदाग्निमन्थगुञ्जाश्चतस्रश्च कोषातकीः समूलफलपत्रशाखा दहेत्। ततः क्षारद्रोणमुदकद्रोणैः षड्भिरालोड्य मूत्रैर्वा यथोक्तैरेकविंशतिवारान् विस्राव्य महति कटाहे शनैर्दर्व्या विघट्टयन् विपचेत्। स यदा भवत्यच्छो रक्तस्तीक्ष्णः पिच्छिलश्च तमादाय महति वस्त्रे परिस्राव्येतरं विसृज्य च पुनरग्नावधिश्रयेत्। तत एव च क्षारोदकात् कुडवमध्यर्द्धं वापनयेत्। ततः कटशर्कराशुक्तिशङ्खनाभीरग्निवर्णाः कृत्वा सुधाशर्कराभिः सह आयसे पात्रे तस्मिन्नेव क्षारोदके निषिच्य पिष्ट्वा तेनैव द्विद्रोणेऽष्टपलसंमितं शङ्खनाभ्यादीनां प्रमाणं प्रतिवाप्य सततमप्रमत्तश्चैनमवघट्टयन् विपचेत्। स यथा नातिसान्द्रो नातिद्रवश्च भवति तथा प्रयतेत। अथैनमागतपाकमवतार्य्यानुगुप्तमायसे कुम्भे संवृतमुखे निदध्यादेष मध्यमः।

एष एवाप्रतीवाप पक्वः संव्यूहिमो मृदु । प्रतिवापे यथालाभं दन्तीद्रवन्तीचित्रकलाङ्गलकीपूतिकप्रवालतालपत्रीविड्सुवर्च्चिकाकनकक्षीरीहिङ्गुवचाविषा समाः श्लक्ष्णचूर्णाः शुक्तिप्रमाणा प्रतिवापः । स एव सप्रतीवापः पक्वः पाक्यस्तीक्ष्णस्तेषां यथाव्याधिबलमुपयोगः । क्षीणबले तु क्षारोदकमावपेद्बलकरणार्थम् ।

नैवातितीक्ष्णो न मृदु शुक्लः श्लक्ष्णोऽथ पिच्छिलः ।
अभिष्यन्दी शिवः शीघ्रः क्षारो ह्यष्टगुणः स्मृतः ॥
अतिमार्दवशैत्योष्णतैक्ष्ण्यपैच्छिल्यसर्पिता ।
सान्द्रतापक्वता हीनद्रव्यता दोष उच्यते ॥

तत्र क्षारसाध्यव्याधिव्याधितमुपवेश्य निवातातपे देशेऽसम्बाधेऽस्य पीड़ितमवकाशं निरीक्ष्यावघृष्यालिख्य प्रच्छयित्वा शलाकया क्षारं पातयित्वा वाक्शतमात्रमुपेक्षेत ।

तस्मिन् निपतिते व्याधौ कृष्णता दग्धलक्षणम् ।
तत्राम्लवर्गः शमनः सर्पिर्मधुकसंयुतः ॥
अथ चेत स्थिरमूलत्वात् क्षारदग्धं न शीर्य्यते ।
इदमालेपनं तत्र समग्रमवचारयेत् ॥
अम्लकाञ्जिकबीजानि तिलान् मधुकमेव च ।
प्रपिष्य समभागानि तेनैवमनुलेपयेत् ॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।
रसेनाम्लेन तीक्ष्णेन वीर्य्योष्णेन च योजितः ॥
आग्नेयेनाग्निना तुल्यः कथं क्षारः प्रशाम्यति ।
एवं चेन्मन्यसे वत्स प्रोच्यमानं निबोध मे ॥

अम्लवर्ज्यान् रसान् क्षारे सर्व्वानेव विभावयेत् ।
कटुकस्तत्र भूयिष्ठो लवणानुरसस्तथा ।
अम्लेन सह संयुक्तः स तीक्ष्णलवणो रसः ॥
माधुर्य्यं भजतेऽत्यर्थं तीक्ष्णभावं विमुञ्चति ।
माधुर्य्याच्छमम् आप्नोति वह्निरद्भिरिवाप्लुतः ॥

तत्र सम्यग्दग्धे विकारोपशमो लाघवमनास्रावश्च । हीनदग्धे तोदकण्डुजाड्यानि व्याधिवृद्धिश्च । अतिदग्धे दाहपाकरागस्रावाङ्गमर्द्दक्लमपिपासामूर्च्छाः स्युर्मरणं वा । क्षारदग्धव्रणन्तु यथादोषं यथाव्याधि चोपक्रमेत् ।

अथ नैते क्षारकृत्याः । तद्यथा, दुर्ब्बलबालस्थविरभीरुसर्व्वाङ्गशूलोदरिरक्तपित्तिगर्भिण्यृतुमतीप्रवृद्धज्वरिप्रमेहोरःक्षतक्षीणतृष्णामूर्च्छोपद्रुतक्लीवापवृत्तोद्वृत्तफलयोनयः । तथा मर्म्मशिरास्नायुधमनीसन्धितरुणास्थिसेवनीगलनाभिनखान्तरशेफस्रोतःस्वल्पमांसेषु च प्रदेशेष्वक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात् । तत्र क्षारसाध्येष्वपि व्याधिषु शूनगात्रमस्थिशूलिनमन्नद्वेषिणं हृदयसन्धिपीड़ोपद्रुतं क्षारो न साधयति ।

विषाग्निशस्त्राशनिमृत्युकल्पः
क्षारो भवत्यल्पमतिप्रयुक्तः ।
स धीमता सम्यगनुप्रयुक्तो
रोगान् निहन्यादचिरेण घोरान् ॥



## द्वादशोऽध्यायः ।

---

### अग्निकर्म्मविधिः ।

क्षारादग्निर्गरीयान् क्रियासु व्याख्यातस्तद्दग्धानां रोगाणामपुनर्भावाद्भेषजशस्त्रक्षारैरसाध्यानां तत्साध्यत्वाच्च ।

अथेमानि दहनोपकरणानि । तद्यथा, पिप्पल्यजाशकृद्गोदन्तशरशलाकाजाम्बवौष्ठेतरलौहाः क्षौद्रगुड़स्नेहाश्च । तत्र पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानाम । जाम्बवौष्ठेतरलौहानि मांसगतानाम् । क्षौद्रगुड़स्नेहाः शिरःस्नायुसन्धिगतानाम् । तत्राग्निकर्म्म सर्व्वर्त्तुषु कुर्य्यादन्यत्र शरद्ग्रीष्माभ्यां तत्राप्यात्ययिकेऽग्निकर्म्मसाध्ये व्याधौ तत्प्रत्यनीकं विधिं कृत्वा सर्व्वव्याधिष्वृतुषु च पिच्छिलमन्नं भुक्तवतः कर्म्म कुर्व्वीत मूढ़गर्भाश्मरीभगन्दरार्शोमुखरोगेष्वभुक्तवतः । तत्र द्विविधमग्निकर्म्माहुरेके त्वग्दग्धं मांसदग्धञ्च । इह तु शिरास्नायुसन्ध्यस्थिष्वपि न प्रतिषिद्धोऽग्निः । तत्र 'शब्दप्रादुर्भावो दुर्गन्धता त्वक्सङ्कोचश्च त्वग्दग्धे । कपोतवर्णताल्पश्वयथुवेदना शुष्कसङ्कुचितव्रणता च मांसदग्धे । कृष्णोन्नतव्रणतास्रावसन्निरोधश्च शिरास्नायुदग्धे । रूक्षारुणता कर्कशस्थिरव्रणता च सन्ध्यस्थिदग्धे । तत्र शिरोरोगाधिमन्थयोर्भ्रूललाटशङ्खप्रदेशेषु दहेत् । वर्त्मरोगेष्वार्द्रालक्तकप्रतिच्छन्नां दृष्टिं

कृत्वा वर्त्म रोमकूपान् दहेत्। त्वङ्मांसशिरास्नायुसन्ध्यस्थिस्थितेऽत्युग्ररुजि वायावुच्छ्रितकठिनसुप्तमांसे व्रणे ग्रन्थ्यर्शोऽर्बुदभगन्दरापचीश्लीपदचर्म्मकीलतिलकालकान्त्रवृद्धिसन्धिशिराच्छेदनादिषु नाडीशोणितातिप्रवृत्तिषु चाग्निकर्म्म कुर्य्यात्। तत्र रोगाधिष्ठानभेदादग्निकर्म्म चतुर्धा भिद्यते। तद्यथा, वलयबिन्दुविलेखाप्रतिसारणानीति दहनविशेषाः।

रोगस्य संस्थानमतो विदित्वा
नरस्य मर्म्माणि बलाबलञ्च।
व्याधिं तथर्त्तुञ्च समीक्ष्य सम्यक्
ततो व्यवस्येद्भिषगग्निकर्म्म॥

तत्र सम्यग्दग्धे मधुसर्पिर्भ्यामभ्यङ्ग। अथेमानग्निना परिहरेत् पित्तप्रकृतिमन्तःशोणितं पित्तिनं भिन्नकोष्ठमनुद्धृतशल्यं दुर्बलं बालं वृद्धं भीरुमनेकव्रणपीडितमस्वेद्यांश्चेति।

अथ ऊर्द्ध्वमितरथा दग्धलक्षणं वक्ष्यामः। तत्र स्निग्धं रूक्षं वाश्रित्य द्रव्यमग्निर्दहति। अग्निमन्तप्तो हि स्नेहः सूक्ष्मशिरानुसारित्वात्त्वगादीननुप्रविश्याशु दहति। तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति। तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धञ्चेति चतुर्विधमग्निदग्धम्। तत्र यद्विवर्णं प्लुष्यतेऽतिमात्रं तत् प्लुष्टम्। यत्रोत्तिष्ठन्ति स्फोटास्तीव्राश्चोषदाहरागपाकवेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धम्। सम्यग्दग्धमनवगाढं तालफलवर्णं सुसंस्थितं पूर्वं लक्षणयुक्तञ्च। अतिदग्धे मांसावलम्बनगात्रं विश्लेषः शिरा-

स्नायुसन्धिस्थिव्यापादनमतिमात्रं ज्वरदाहपिपासा-मूर्च्छाश्चोपद्रवा भवन्ति, व्रणश्चास्य चिरेण रोहति रूढ़श्च विवर्णो भवति। तदेतच्चतुर्विधमग्निदग्धलक्षणमात्मकर्म्म-प्रसाधकं भवति।

अग्निना कोपितं रक्तं भृश जन्तोः प्रकुप्यति।
ततस्तेनैव वेगेन पित्तमस्याभ्युदीर्य्यते॥
तुल्यवीर्य्ये उभे ह्येते रसतो द्रव्यतस्तथा।
तेनास्य वेदनास्तीव्रा प्रकृत्या च विदह्यते॥
स्फोटाः शीघ्रं प्रजायन्ते ज्वरस्तृष्णा च वर्द्धते।
दग्धस्योपशमार्थाय चिकित्सा संप्रवक्ष्यते॥
प्लुष्टस्याग्निप्रतपनं कार्य्यमुष्णं तथौषधम्।
शरीरे स्विन्नभूयिष्ठे स्विन्नं भवति शोणितम्॥
प्रकृत्या ह्युदकं शीतं स्कन्दयत्यतिशोणितम्।
तस्मात्सुखयति ह्युष्णं न तु शीतं कथञ्चन॥
शीतामुष्णाञ्च दुर्दग्धे क्रियां कुर्य्याद्भिषक् पुनः।
घृतालेपनसेकांस्तु शीतानेवास्य कारयेत्॥
सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः।
सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद्भिषक्॥
ग्राम्यानूपौदकैश्चैनं पिष्टैर्मांसैः प्रलेपयेत्।
पित्तविद्रधिवच्चैनं सन्ततोष्माणमाचरेत्॥
अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम्।
क्रियां कुर्य्याद्भिषक् पश्चाच्छालितण्डुलकण्डनैः॥
तिन्दुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत्।
व्रणं गुड़ूचीपत्रैर्वा छादयेदथवौदकैः॥

क्रियाञ्च निखिलां कुर्य्याद्भिषक् पित्तविसर्पवत्।
मधूच्छिष्टं समधुकं रोध्रं सर्ज्जरसं तथा॥
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वेषामग्निदग्धानामेतद्रोपणमुत्तमम्॥
स्नेहदग्धे क्रियां रूक्षां विशेषेणावचारयेत्॥
अत ऊर्द्धं प्रवक्ष्यामि धूमोपहतलक्षणम्।
श्वसिति क्षौति चात्यर्थमत्याध्मति कासते॥
चक्षुषोः परिदाहश्च रागश्चैवोपजायते।
सधूमकं निःश्वसिति घ्रेयमन्यन्न वेत्ति च॥
तथैव च रसान् सर्वान् श्रुतिश्चास्योपहन्यते।
तृष्णादाहज्वरयुतः सीदत्यथ च मूर्च्छति॥
धूमोपहत इत्येवं शृणु तस्य चिकित्सितम्।
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा॥
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत्।
वमतः कोष्ठशुद्धिः स्याद्धूमगन्धश्च नश्यति॥
विधिनानेन नश्यन्ति सदनक्षवथुज्वराः।
दाहमूर्च्छातृड़ाध्मानश्वासकासाश्च दारुणाः॥
मधुरैर्लवणाम्लैश्च कटुकैः कवलग्रहैः।
सम्यग्गृह्णातीन्द्रियार्थान्मनश्चास्य प्रसीदति॥
शिरोविरेचनं तस्मै दद्याद्योगेन शास्त्रवित्।
दृष्टिर्विशुध्यते चास्य शिरोग्रीवञ्च देहिनः॥
अविदाहि लघुस्निग्धमाहारं चास्य कल्पयेत्।
उष्णवातातपैर्दग्धे शीतः कार्य्यो विधिः सदा॥
शीतवर्षानिलैर्हत उष्णः स्निग्धश्च शस्यते।

तथातितेजसा दग्धे सिद्धिर्नास्ति कथञ्चन ॥
इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत् ।
स्नेहाभ्यङ्गपरीषेकैः प्रदेहैश्च तथा भिषक् ॥

——

## षड्‌त्रिंशोऽध्यायः ।

——

### जलौकावचारणविधिः ।

नृपाढ्यबालस्थविरभीरुदुर्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभितो जलौकसः । तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकालाबुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात्सर्वाणि सर्वैर्वा ।

उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम् ।
तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥
शीताधिवासा मधुरा जलौका वारिसम्भवा ।
तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥
अलाबु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् ।
तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥
तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदाचूषणात् । सान्तर्दीपयालाब्वा ।

अथ जलायुका वक्ष्यन्ते। जलमासामायुरिति जलायुका जलमासामोक इति जलौकसः। ता द्वादश तासां सविषाः षट् तावत्य एव निर्विषाः।

तत्र सविषाः कृष्णाः कर्बुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति। तास्वञ्जनचूर्णवर्णा पृथुशिरा कृष्णा। वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा। रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा। इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा। ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका। गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति। ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमिति लिङ्गानि भवन्ति। तत्र महागदः पानालेपनस्य कर्म्मादिषूपयोज्यः। इन्द्रायुधादष्टमसाध्यमित्येताः सविषाः सचिकित्सिता व्याख्याताः।

अथ निर्विषाः कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति। तत्र मनःशिलारञ्जिते इवाभिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला। किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला। यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी। मूषिकाकृतिवर्णानिष्टगन्धा च मूषिका। मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी। स्निग्धा पद्मपत्रवर्णाष्टादशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे। इत्येता अविषा व्याख्याताः। तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि। तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण

भवन्ति। तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः। पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता विमलेष्वम्भःसु च निर्विषाः।

क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु।
न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः॥

तासां ग्रहणमार्द्रचर्म्मणान्यैर्वा प्रयोगैर्गृह्णीयात्। अथैनां नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात्। भक्ष्यार्थे चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य शय्यार्थं तृणमौदकानि च पत्राणि। त्र्यहात् त्र्यहाच्चान्यज्जलं भक्ष्यञ्च दद्यात्। सप्तरात्रात्सप्तरात्राच्च घटमन्यं संक्रामयेत्।

स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः।
अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः॥

अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात् गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्त्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत्। सूक्ष्मशुक्लार्द्रपिचुप्लोतावच्छन्नां कृत्वा मुखमपावृणुयात् अगृह्णन्त्यै क्षीरविन्दुं शोणितविन्दुं वा दद्याच्छस्त्रपदानि वा कुर्वीत यद्येवमपि न गृह्णीयात्तदान्यां ग्राहयेत्। यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृह्णातीति गृह्णन्तीं चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च। दंशे तोदकण्डूप्रादुर्भावैर्जानीयाच्छु-

ह्रमियदादत्त इति शुद्धमाददानामपनयेत्। अथ शोणित-गन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत्। अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्त-मुखीं वामहस्ताङ्गुलीभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठा-ङ्गुलीभ्यां शनैः शनैरनुलोममनुमार्जयेदामुखाद्वामयेत्ता-वद्यावत्सम्यग्वान्तलिङ्गानीति। सम्यग्वान्ता सलिलसरक-न्यस्ता भोक्तृकामा सती चरेत्। या सीदति न चेष्टते सा दुर्वान्ता ता पुनः सम्यग्वामयेत्। दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्तां पूर्ववत्सन्निदध्यात् शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणान्मधुनावघ-ट्टयेच्छीताभिरद्भिश्च परिषिचयेद्बध्नीत वा व्रणं कषायमधुर-स्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति।

स्थानानि ग्रहणं जातीः पोषणं सावचारणम्।
जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद्गदान्॥

---

## चतुर्दशोऽध्यायः।

---

शोणितस्रावस्य साधारणो विधिः।

फेनिलमरुणं कृष्णं परुषं तनु शीघ्रगमस्कन्दि च शोणितं वातेन दुष्टम्। नीलं पीतं हरितं श्यावं विस्रम-निष्टं पिपीलिकामक्षिकाणामस्कन्दि च पित्तदुष्टम्।

गैरिकोदकप्रतीकाशं स्निग्धं शीतलं बहलं पिच्छिलं चिरस्रावि मांसपेशीप्रभं श्लेष्मदुष्टञ्च । सर्वलक्षणसंयुक्तं काञ्जिकाभं विशेषतो दुर्गन्धि च सन्निपातदुष्टम् । पित्तवद्रक्तेनातिकृष्णञ्च । द्विदोषलिङ्गं संसृष्टम् । इन्द्रगोपप्रतीकाशमसंहतमविवर्णञ्च प्रकृतिस्थं जानीयात् ।

अथाविस्राव्याः सर्वाङ्गशोफः क्षीणस्य चाम्लभोजननिमित्तः पाण्डुरोग्यर्शोदरिशोषिगर्भिणीनाञ्च श्वयथवः ।

तत्र शस्त्रविस्रावणं द्विविधं प्रच्छानं शिराव्यधनञ्च । तत्र ऋज्वसङ्कीर्णं सूक्ष्ममसममनवगाढमनुत्तानमाशु च शस्त्रं पातयेन्मर्मशिरास्नायुसन्धीनां चानुपघाति । तत्र दुर्दिने दुर्विद्धे शीतवातयोरस्विन्ने ऽभुक्तवतः स्कन्नत्वाच्छोणितं न स्रवत्यल्पं वा स्रवति ।

मदमूर्च्छाश्रमार्त्तानां वातविण्मूत्रसङ्गिनाम् ।
निद्राभिभूतभीतानां नृणां नासृक् प्रवर्त्तते ॥

तद्दुष्टं शोणितमनिर्ह्रियमाणं कण्डूशोफरागदाहपाकवेदना जनयेत् । अत्युष्णातिस्विन्नातिविद्धेष्वज्ञैर्विस्रावितमतिप्रवर्त्तते । तदतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थं तिमिरप्रादुर्भावं धातुक्षयमाक्षेपकं पक्षाघातमेकाङ्गविकारं तृष्णादाहौ हिक्कां कासं श्वासं पाण्डुरोगं मरणञ्चापादयति ।

तस्मान्न शीते नात्युष्णे नास्विन्ने नातितापिते ।
यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक् ॥
सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते ।
शुद्धं तदा विजानीयात्सम्यग्विस्रावितञ्च तत् ॥

लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः ।
सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा ॥
त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये ।
रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥

अथ खल्वप्रवर्त्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैः सर्षपतैललवणप्रगाढैर्व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्त्तते। अथातिप्रवृत्ते रोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्ज्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाषयवगोधूमचूर्णैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत्। सालसर्ज्जार्जुनारिमेदमेषशृङ्गधवधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वाध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात्। शीताच्छादनभोजनागारैः शीतैः परिषेकप्रदेहैश्चोपाचरेत् क्षारेणाग्निना वा दहेद्यथोक्तं व्यधनादनन्तरं वा तामेवातिप्रवृत्तां शिरां विध्येत्। काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत्। एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिरं क्षीरयूषरसैः सुस्निग्धैश्चाश्नीयादुपद्रवांश्च यथास्वमुपाचरेत्।

धातुक्षयात् स्रुते रक्ते मन्दः सञ्जायतेऽनलः ।
पवनश्च परं कोपं याति तस्मात्प्रयत्नतः ॥
तन्नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्द्धनैः ।
ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत् ॥
चतुर्विधं यदेतद्धि रुधिरस्य निवारणम् ।

सन्धानं स्कन्दनञ्चैव पाचनं दहनं तथा ॥
व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम् ।
तथा सम्पाचयेद्भस्म दाहः सङ्कोचयेच्छिराः ॥
अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत् ।
सन्धाने भ्रश्यमाने पाचनैः समुपाचरेत् ॥
कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि ।
असिद्धिमत्सु चैतेषु दाहः परम इष्यते ॥
सशेषदोषे रुधिरे न व्याधिरतिवर्त्तते ।
सावशेषे ततः स्थेयं न तु कुर्य्यादतिक्रमम् ॥
देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते ।
तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः ॥
स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले ।
शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत् ॥

---

## अष्टाविंशोऽध्यायः ।

---

### दोषधातुमलक्षयवृद्धिविज्ञानम् ।

दोषधातुमलमूलं हि शरीरं तस्मादेतेषां लक्षणमुच्यमानमुपधारय । तत्र प्रस्पन्दनोद्वहनपूरणविवेकधारणलक्षणो वायुः पञ्चधा प्रविभक्तः शरीरं धारयति । रागप-

त्वयोजस्तेजोमेधोष्माकृत् पित्तं पञ्चधा प्रविभक्तमग्निकर्म्मणानुग्रहं करोति। सन्धिसंश्लेषणस्नेहणरोपणपूरणबलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदककर्म्मणानुग्रहं करोति। रसः प्रीणयति रक्तपुष्टिञ्च करोति। रक्तं वर्णप्रसादं मांसपुष्टिं जीवयति च। मांसं शरीरपुष्टिं मेदसञ्च। मेदः स्नेहस्वेददृढ़त्वं पुष्टिमस्थ्नाञ्च। अस्थि देहधारणं मज्जपुष्टिञ्च। मज्जा प्रीतिं स्नेहं बलं शुक्रपुष्टिं पूरणमस्थ्नाञ्च करोति। शुक्रं धैर्य्यं च्यवनं प्रीतिं देहबलं हर्षं वीजार्थञ्च। पुरीषमुपस्तम्भं वाय्वग्निधारणञ्च। वस्तिपूरणविक्लेदकृन्मूत्रम्। स्वेदः क्लेदत्वक्सौकुमार्य्यकृत्। रक्तलक्षणमार्त्तवं गर्भकृच्च। गर्भो गर्भलक्षणम्। स्तन्यं स्तनयोरापीनत्वजननं जीवनञ्चेति। तेषां विधिवत्परिरक्षणं कुर्वीत।

अथ ऊर्द्धमेषां क्षीणलक्षणं वक्ष्यामः। क्षयः पुनरेषामतिसंशोधनातिसंशमनवेगविधारणासात्म्यान्नमनस्तापव्यायामानशनातिमैथुनैर्भवति। तत्र वातक्षये मन्दचेष्टताल्पवाक्त्वमल्पहर्षो मूढ़संज्ञता च पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वञ्च। श्लेष्मक्षये रूक्षतान्तर्दाह आमाशयेतराशयशिरसां शून्यता सन्धिशैथिल्यं तृष्णा दौर्बल्यं प्रजागरणञ्च। तत्र स्वयोनिवर्द्धनद्रव्याण्येव प्रतीकारः। रसक्षये हृत्पीडा कम्पः शून्यता तृष्णा च। शोणितक्षये त्वक्पारुष्यमम्लशीतप्रार्थना शिराशैथिल्यञ्च। मांसक्षये स्फिक्गण्डौष्ठोपस्थोरुवक्षःकक्षापिण्डिकोदरग्रीवाशुष्कता रौक्ष्यतोदौ गात्राणां सदनं धमनीशैथिल्यञ्च। मेदःक्षये

प्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च। अस्थिक्षयेऽस्थितोदो दन्तनखभङ्गो रौक्ष्यञ्च। मज्जक्षयेऽल्पशुक्रता पर्वभेदोऽस्थिनिस्तोदोऽस्थिशून्यता च। शुक्रक्षये मेढ्रवृषणवेदनाऽशक्तिर्मैथुने चिराद्वा प्रसेक. प्रसेके चाल्परक्तशुक्रदर्शनञ्च। तत्रापि स्वयोनिवर्द्धनद्रव्योपयोगप्रतीकारः। पुरीषक्षये हृदयपार्श्वपीड़ा सशब्दस्य च वायोरूर्द्धगमनं कुक्षौ सञ्चरणञ्च। मूत्रक्षये वस्तितोदोऽल्पमूत्रता च। अत्रापि स्वयोनिवर्द्धनद्रव्याण्येव प्रतीकारः। स्वेदक्षये स्तब्धरोमकूपता त्वक्शोषः स्पर्शवैगुण्यं स्वेदनाशश्च। तत्राभ्यङ्गः स्वेदोपयोगश्च। आर्त्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च तत्र संशोधनमाग्नेयानाञ्च द्रव्याणां विधिवदुपयोगः। स्तन्यक्षये स्तनयोर्म्लानता स्तन्यासम्भवोऽल्पता वा तत्र श्लेष्मवर्द्धनद्रव्योपयोगः। गर्भक्षये गर्भास्पन्दनमनुन्नतकुक्षिता च तत्र प्राप्तवस्तिकालायाः क्षीरवस्तिप्रयोगो मेध्यान्नोपयोगश्चेति।

अत ऊर्द्धमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः। वृद्धिः पुनरेषा स्वयोनिवर्द्धनाभ्युपसेवनाद्भवति। तत्र वातवृद्धौ त्वक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढ़वर्चस्त्वञ्च। पित्तवृद्धौ पीतावभासता सन्तापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्यं पीतविण्मूत्रनेत्रत्वञ्च। श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्यं गौरवमवसादस्तन्द्रा निद्रा सन्ध्यस्थिविश्लेषश्च। रसोऽतिवृद्धो हृदयोत्क्लेशं प्रसेकञ्चापादयति। रक्तं रक्ताङ्गाक्षतां शिरापूर्णत्वञ्च। मांसं स्फिग्गण्डौष्ठो-

पस्थोरुबाहुजङ्घासु वृद्धिं गुरुगात्रताञ्च। मेदः स्निग्धाङ्गता-मुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यञ्च। अस्थि अध्यस्थीन्यधिदन्तांश्च। मज्जा सर्वाङ्गनेत्रगौरवम्। शुक्रं शुक्राश्मरीमतिप्रादुर्भावञ्च। पुरीषमाटोपं कुक्षौ शूलञ्च। मूत्रं मुहुर्मुहुः प्रवृत्तिं वस्तितोदमाध्मानञ्च। स्वेदस्त्वचो दौर्गन्ध्यं कण्डूञ्च। आर्त्तवमङ्गमर्द्दमतिप्रवृत्तिं दौर्बल्यञ्च। स्तन्यं स्तनयोरापीनत्वं मुहुर्मुहुः प्रवृत्तिं तोदञ्च। गर्भो जठराभिवृद्धिं शोथञ्च। तेषां यथास्वं संशोधनं क्षपणञ्च क्षयादविरुद्धैः क्रियाविशेषैः प्रतिकुर्वीत।

पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्द्धयेद्धि परं परम्।
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम्॥

बललक्षणं बलक्षयलक्षणमत ऊर्द्ध्वं वक्ष्यामः। तत्र रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत् खल्वोजस्त-देव बलमित्युच्यते सशास्त्रसिद्धान्तत्वात्। तत्र बलेन स्थिरोपचितमांसता सर्वचेष्टास्वप्रतिघातः स्वरवर्णप्रसादो बाह्यानामाभ्यन्तराणाञ्च करणानामात्मकार्य्यप्रतिपत्ति-र्भवति।

ओजः सोमात्मकं स्निग्धं शुक्लं शीतं स्थिरं रसम्।
विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम्॥
देहस्यावयवस्तेन व्याप्तो भवति देहिनाम्।
तदभावाच्च शीर्य्यन्ते शरीराणि शरीरिणाम्॥
अभिघातात् क्षयात्कोपाच्छोकाद्ध्यानाच्छ्रमात् क्षुधः।
ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम्॥
दोषधातुमलक्षीणो बलक्षीणोऽपि वा नरः।

स्वयोनिवर्द्धनं यत्तदन्नपानं प्रकाङ्क्षति ॥
यद्यदाहारजातं हि क्षीणः प्रार्थयते नरः।
तस्य तस्य सलाभे तु तं त क्षयमपोहति ॥
यस्य धातुक्षयाद्वायुः संज्ञां कर्म्म च नाशयेत्।
क्षीणञ्च बलं यस्य नासौ शक्यश्चिकित्सितुम् ॥

---

## ऊनत्रिंशोऽध्यायः।

---

अथातो हिताहितीयमध्यायं
व्याख्यास्यामः।

यद्वायोः पथ्यं तत्पित्तस्यापथ्यमित्यनेन हेतुना न किञ्चिद्द्रव्यमेकान्तेन हितमहितं वास्तीति केचिदाचार्य्या ब्रुवते तत्त, न सम्यक्। इह खलु यस्माद्द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति। तत्रैकान्तहितानि जातिसात्म्यात्सलिलघृत-दुग्धौदनप्रभृतीनि। एकान्ताहितानि दहनपचनमारणा-दिषु प्रवृत्तान्यग्निक्षारविषादीनि। संयोगादपराणि विष-तुल्यानि भवन्ति। हिताहितानि तु यद्वायोः पथ्यं तत्पित्तस्यापथ्यमित्यतः सर्वप्राणिनामयमाहारार्थं वर्ग उपदिश्यते।

तद्यथा, रक्तशालिषष्टिकगङ्गुकमुकुन्दकपाण्डुकपीत-कप्रमोदककालकाशनकपुष्पककर्दमकशकुनाहृतसुगन्ध-ककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः। एणहरिणकुरङ्गमृगमातृकाश्वदंष्ट्राकरालक्रकरकपोतलाव-तित्तिरिकपिञ्जलवर्त्तिरवर्त्तिकादीनां मांसानि। मुद्गव-नमुद्गमकुष्ठकलायमसूरमङ्गल्यचणकहरेणवाढकासतीनाः। चिल्लिवास्तूकसुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः। गव्यं घृतं सैन्धवदाडिमामलकमित्येष वर्गः सर्व-प्राणिनां सामान्यतः पथ्यतमः। तथा ब्रह्मचर्य्य-निर्वातशयनोष्णोदकनिशास्वप्नव्यायामाश्चैकान्ततः पथ्य-तमाः। एकान्तहितान्येकान्ताहितानि प्रागुपदिष्टानि। हिताहितानि तु यद्वायोः पथ्यं तत्पित्तस्यापथ्यमिति।

संयोगतस्त्वपराणि विषतुल्यानि भवन्ति। तद्यथा, वल्लीफलकवककरीराम्लफललवणकुलत्थपिण्याकदधितैल-विरोहिपिष्टकशुष्कशाकाजाविकमांसमद्यजाम्बवचिलिचि-ममत्स्यगोधावराहांश्च नैकध्यमश्नीयात्पयसा।

रोगं सात्म्यञ्च देशञ्च कालं देहञ्च बुद्धिमान्।
अवेक्ष्याग्न्यादिकान् भावान् रोगवृत्तेः प्रयोजयेत्॥
अवस्थान्तरबाहुल्याद्रोगादीनां व्यवस्थितम्।
द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे॥
द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः।
दुग्धस्यैकान्तहिततां विषमेकान्ततोऽहितम्॥
एवं युक्तरसेष्वेषु द्रव्येषु सलिलादिषु।
एकान्तहिततां विद्धि वत्स सुश्रुत नान्यथा॥

अतोऽन्यान्यपि संयोगादहितानि वक्ष्यामः। नवविरूढ़धान्यैर्वसामधुपयोगुड़माषैर्वा ग्राम्यानूपौदकपिशितादीनि नाभ्यवहरेत्। न पयोमधुभ्यां रोहिणीशाकं जातुशाकं वाश्नीयात्। बलाकां वारुणीकुल्माषाभ्यां, काकमाचीं पिप्पलीमरिचाभ्यां, नाड़ीभङ्गशाककुक्कुटदधीनि च नैकध्यम्। मधु चोष्णोदकानुपानं, पित्तेन वा मांसानि, सुराकृशरापयसाञ्च नैकध्यम्। सौवीरकेण सह तिलशष्कुलीं, मत्स्यैः सहेक्षुविकारान्, गुडेन काकमाचीं, मधुना मूलकं, गुड़ेन वाराहं, मधुना च सह विरुद्धम्। क्षीरेण मूलकम्। आम्रजाम्बवश्वाविच्छूकरगोधाश्च सर्वांश्च मत्स्यान् विशेषेण चिलिचिमं पयसा। कदलीफलं तालफलेन पयसा दध्ना तक्रेण वा। लकुचफलं पयसा दध्ना माषसूपेन वा। मधुना घृतेन च। प्राक् पयसः पयसोऽन्ते वा।

अत कर्म्मविरुद्धान् वक्ष्यामः। कपोतान् सर्षपतैलभृष्टान् नाद्यात्। कपिञ्जलमयूरलावतित्तिरिगोधाश्चैरण्डदार्वग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात्। कांस्यभाजने दशरात्रपर्य्युषितं सर्पिर्मधु चोष्णैरुष्णे वा। मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीं, तिलकल्कसिद्धसुपोदिकाशाकम्। नारिकेलेन वराहवसापरिभृष्टां बलाकाम्। भासमङ्गारशूल्यं नाश्नीयादिति।

अतो मानविरुद्धान् वक्ष्यामः। मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात्। स्नेहौ मधुस्नेहौ जलस्नेहौ वा विशेषादान्तरीक्षोदकानुपानौ।

अत ऊर्द्ध्वं रसद्वन्द्वानि रसतो वीर्य्यतो विपाकतश्च विरुद्धानि वक्ष्यामः। तत्र मधुराम्लौ रसवीर्य्यविरुद्धौ मधुरलवणौ च मधुरकटुकौ सर्वतः। मधुरतिक्तौ रसविपाकाभ्यां मधुरकषायौ चाम्ललवणौ रसतः। अम्लकटुकौ रसविपाकाभ्यामम्लतिक्तावाम्लकषायौ च सर्वतः। लवणकटुकौ रसविपाकाभ्यां लवणतिक्तौ लवणकषायौ च सर्वतः। कटुतिक्तौ रसवीर्य्याभ्यां कटुकषायौ तिक्तकषायौ च रसतः। तरतमयोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत्।

विरुद्धान्येवमादीनि रसवीर्य्यविपाकतः।
तान्येकान्ताहितान्येव शेष विद्याद्धिताहितम्॥
व्याधिमिन्द्रियदौर्बल्यं मरणञ्चाधिगच्छति।
विरुद्धरसवीर्य्यादीन् भुञ्जानोऽनात्मवान्नरः॥
यत्किञ्चिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत्।
रसादिष्वयथार्थं वा तद्विकाराय कल्पते॥
विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम्।
वमनं शमनं वापि पूर्वं वाहितसेवनम्॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च।
स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत्॥

व्यायामशीलो बलवान् शिशुश्च
स्निग्धोऽग्निमांश्चापि महाशनश्च।
आप्नोति रोगान् न विरुद्धजाता-
नभ्यासतो वाल्पतया च जन्तुः॥

———

# विंशोऽध्यायः।



अथ दोषवर्णनम्।

वातपित्तश्लेष्माण एव देहसम्भवहेतवः। तैरव्यापन्नैरधोमध्योर्द्ध्वसन्निविष्टैः शरीरमिदं धार्य्यतेऽगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके। त एव च व्यापन्नाः प्रलयहेतवस्तदेभिरेव शोणितचतुर्थैः सम्भवस्थितिप्रलयेष्वप्यविरहितं शरीरं भवति।

नर्त्ते देहः कफादस्ति न पित्तान्न च मारुतात्।
शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते॥

दोषस्थानान्यत ऊर्द्ध्वं वक्ष्यामः। तत्र समासेन वातः श्रोणिगुदसंश्रयः। श्रोणिगुदयोरुपर्य्यधो नाभेः पक्काशयः पक्कामाशयमध्यं पित्तस्य। आमाशयः श्लेष्मणः।

अतः परं पञ्चधा विभज्यन्ते
दोषाः। यथा

उदानस्तदनुप्राणः समानोऽपान एव च।
व्यानश्चैतानि नामानि वायोः स्थानप्रभेदतः॥
कण्ठे हृदि तथाधस्तात्कोष्ठवह्नेर्मलाशये।
सकलेऽपि शरीरेऽसौ क्रमेण पवनो वसेत्॥

अन्यच्च। हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः॥
पित्तस्य यकृत्प्लीहानौ हृदयं दृष्टिस्त्वक् पूर्वोक्तञ्च।

श्लेष्मणस्तूरश्शिरःकण्ठसन्धय इति पूर्वोक्तञ्च। एतानि खलु दोषाणां स्थानान्यव्यापन्नानाम्।

विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा॥

तत्र वायोः स्वरूपमाह।

दोषधातुमलादीनां नेता शीघ्रः समीरणः।
रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः॥

अन्यच्च। उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्त्तनैः।
सम्यग्गत्या च धातूनामिन्द्रियाणाञ्च पाटवैः॥
अनुगृह्णात्यविकृतो हृदयेन्द्रियचित्तधृक्।
रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः॥
खरो मृदुर्योगवाही संयोगादुभयार्थकृत्।
दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात्॥
विभागकरणाद्वायुः प्रधानं दोषसंग्रहे।
पक्वाशयकटीसक्थिश्रोतोऽस्थिस्पर्शनेन्द्रियम्॥
स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः।
उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः॥
तेन भाषितगीतादिप्रवृत्तिः कुपितस्तु सः।
ऊर्द्ध्वजत्रुगतान् रोगान् विदधाति विशेषतः॥
यो वायुः प्राणनामासौ मुखं गच्छति देहधृक्।
सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते॥
प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान्।
आमपक्वाशयचरः समानो वह्निसंगतः॥
सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि।

स दुष्टो वह्निमान्द्यातिसारगुल्मान् करोति हि ॥
पक्वाशयालयोऽपानः काले कर्षति चाप्ययम् ।
समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवान्यधः ॥
क्रुद्धस्तु कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ।
शुक्रदोषप्रमेहांश्च व्यानापानप्रकोपजान् ॥
कृत्स्नदेहचरो व्यानो रससंवाहनोद्यतः ।
स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि ॥
गत्युपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ।
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ॥
प्रस्यन्दनञ्चोद्वहनं पूरणञ्च विरेचनम् ।
धारणञ्चेति पञ्चैताश्चेष्टाः प्रोक्ता नभस्वतः ॥
क्रुद्धः स कुरुते रोगान् प्रायशः सर्वदेहगान् ।
युगपत् कुपिता एते देहं भिन्द्युरसंशयम् ॥

अथ पित्तस्य स्वरूपमाह ।

पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च ।
उष्णं कटुरसञ्चैव विदग्धञ्चाम्लमेव च ॥
पाचकं रञ्जकञ्चापि साधकालोचके तथा ।
भ्राजकञ्चेति पित्तस्य नामानि स्थानभेदतः ॥
अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये ॥
त्वचि सर्वशरीरेषु पित्तं निवसति क्रमात् ॥
पाचकं पचते भुक्तं शेषाग्निबलवर्द्धनम् ।
रसमूत्रपुरीषाणि विरेचयति नित्यशः ॥
रञ्जकं नाम यत्पित्तं तद्रसं शोणितं नयेत् ।
यत्तु साधकमंज्ञं तत् कुर्य्याद्बुद्धिं धृतिं स्मृतिम् ॥

यदालोचकसंज्ञं तद्रूपमग्रहणकारणम्।
भ्राजकं कान्तिकारि स्याल्लेपाभ्यङ्गादिपाचकम्॥

अथ श्लेष्मस्वरूपमाह।

श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीतलस्तथा।
मधुरस्त्वविदग्धः स्याद्विदग्धो लवणः स्मृतः॥
कफस्यैतानि नामानि क्लेदनश्चावलम्बनः।
रसनः स्नेहनश्चापि श्लेष्मणः स्थानभेदतः॥
आमाशयेऽथ हृदये कण्ठे शिरसि सन्धिषु।
स्थानेष्वेषु मनुष्याणां श्लेष्मा तिष्ठत्यनुक्रमात्॥
क्लेदनः क्लेदयत्यन्नमात्मशक्त्या पराण्यपि।
अनुगृह्णाति च श्लेष्मस्थानान्युदककर्मणा॥
त्रिकसन्धारणञ्चापि विदधात्यवलम्बनः॥
उभावपि ततः सौम्यौ तिष्ठतश्चान्तिके यतः।
यतो रसान् विजानीतो रसनारसनौ समौ॥
स्नेहनः स्नेहदानेन समस्तेन्द्रियतर्पणः।
श्लेष्मणः सर्वसन्धीनां संश्लेषं विदधात्यसौ॥

अथ तेषां चयप्रकोपोपशम-
कारणम्।

इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड़ृतवो भवन्ति दोषोपचयप्रकोपशमनिमित्तम्। ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः। तद्यथा, भाद्रपदाश्वयुजौ वर्षाः। कार्त्तिकमार्गशीर्षौ शरत्। पौषमाघौ हेमन्तः। फाल्गुनचैत्रौ वसन्तः। वैशाखज्यैष्ठौ ग्रीष्मः। आषाढ़श्रावणौ प्रावृड़िति। तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चा-

प्रसन्नाः चितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टब्धाग्नीनां विदह्यन्ते विदाहात् पित्तसञ्चयमापादयन्ति स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलापितः पैत्तिकान् व्याधीन् जनयति । ता एवौषधयः कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धाः अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति । ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति । एवमेष दोषाणां सञ्चयप्रकोपहेतुरुक्तः ।

तत्र वर्षाहेमन्तग्रीष्मेषु सञ्चितानां दोषाणां शरद्वसन्तप्रावृट्सु च प्रकुपितानां निर्हरणं कर्त्तव्यम् । तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते श्लैष्मिकाणां निदाघे वातिकानां घनात्यये स्वभावत एव त एते सञ्चयप्रकोपोपशमा व्याख्याताः ।

तत्र पूर्वाह्ने वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्य अपराह्ने

प्रावृष: प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्त-मुपलक्षयेत् । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् ।

सञ्चितानां दोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्य' चयकारणविद्वेषश्चेति लिङ्गानि भवन्ति । तत्र प्रथम क्रियाकाल. ।

अत ऊर्द्ध्वं प्रकोपणानि वक्ष्याम: । तत्र बलवद्विग्रहा-तिव्यायाम-व्यवायाध्ययन-प्रपतनप्रधावन-प्रपीडनाभिघात-लङ्घन-प्लवन-तरण-रात्रिजागरण-भारहरण-गजतुरङ्ग-रथ-पदातिचर्य्या-कटुकषायतिक्तरूक्षलघुशीतवीर्य्य-शुष्कशाक-वल्लूर-वरकोद्दालक-कोरदूषश्यामाक-नीवार-मुद्ग-मसूराढ़-की-हरेणु-कलाय-निष्पावानशन-विषमाशनाध्यशन-वात-मूत्रपुरीष-शुक्रच्छर्द्दिक्षवथूद्गार-वाष्पवेग-विघातादिभिर्वि-शेषैर्वायु: प्रकोपमापद्यते ।

स शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषत' ।
प्रत्यूषस्यपराह्णे च जीर्णेऽन्ने च प्रकुप्यति ॥

क्रोधशोकभयायासोपवासविदग्धमैथुनोपगमनकट्वम्ल-लवणतीक्ष्णोष्णलघुविदाहितिलतैलपिण्याककुलत्थसर्षपा-तसीहरितकशाकगोधामत्स्याजाविकमांसदधितक्रकूर्चि-कामस्तुसौवीरकसुराविकाराम्लफलकट्वराकप्रभृतिभि: पित्तं प्रकोपमापद्यते ।

तदुष्णैरुष्णकाले च मेघान्ते च विशेषत: ।
मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति ॥

दिवास्वप्न-व्यायामालस-मधुराम्ललवण-शीतस्निग्धगुरु-

पिच्छिलाभिष्यन्दिहायनक-यवकनैषधेकट-माषमहामाष-गोधूमतिलपिष्टविकृति-दधिदुग्धकृशरा-पायसेक्षुविकारा-नूपौदकमांसवसा-बिसमृणाल-कशेरुकशृङ्गाटकमधुरवल्ली-फलसमशनाध्यशनप्रभृतिभि: श्लेष्मा प्रकोपमापद्यते ।

स शीतै: शीतकाले च वसन्ते च विशेषत: ।
पूर्वाह्णे च प्रदोषे च भुक्तमात्रे प्रकुप्यति ॥

पित्तप्रकोपणैरेव चाभीक्ष्णं द्रवस्निग्धगुरुभिश्चाहारै-र्दिवास्वप्न-क्रोधानलातपश्रमाभिघाताजीर्ण-विरुद्धाध्यशन-प्रभृतिभिरसृक् प्रकोपमापद्यते ।

यस्माद्रक्तं विना दोषैर्न कदाचित् प्रकुप्यति ।
तस्मात्तस्य यथादोषं कालं विद्यात् प्रकोपणे ॥

तेषां प्रकोपात् कोष्ठतोदसञ्चरणाम्लिकापिपासा-परिदाहान्नद्वेषहृदयोत्क्लेदाश्च जायन्ते । तत्र द्वितीय: क्रियाकाल: ।

अत ऊर्द्ध्वं प्रसरं वक्ष्याम: । तेषामेभिरातङ्कविशेषै: प्रकुपितानां पर्य्युषितकिण्वोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति तेषां वायुर्गतिमत्त्वात् प्रसरणहेतु: सत्यप्य-चैतन्ये स हि रजोभूयिष्ठो रजश्च प्रवर्त्तकं सर्वभावानाम् । यथा, महानुदकसञ्चयोऽतिवृद्ध: सेतुमवदार्य्यापरेणोदकेन व्यामिश्र: सर्वत: प्रधावत्येवं दोषा: कदाचिदेकशो द्विश: समस्ता: शोणितसहिता वानेकधा प्रसरन्ति । तद्यथा, वात: पित्तं श्लेष्मा शोणितम् । वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणितेपित्तशोणिते श्लेष्मशोणिते । वातपित्तशोणितानि वातश्लेष्मशोणितानि पित्तश्लेष्मशोणि-

लानि। वातपित्तकफा वातपित्तकफशोणितानीत्येवं पञ्चदशधा प्रसरन्ति।

कृत्स्नेऽर्द्धेऽवयवे वापि यत्राङ्गे कुपितो भृशम्।
दोषो विकारं नभसि मेघवत् तत्र वर्षति॥
नात्यर्थं कुपितश्चापि लीनो मार्गेषु तिष्ठति।
निःप्रत्यनीकः कालेन हेतुमासाद्य कुप्यति॥

तत्र वायोः पित्तस्थानगतस्य च पित्तवत् प्रतीकारः पित्तस्य कफस्थानगतस्य कफवत् कफस्य च वातस्थानगतस्य वातवदेष क्रियाविभागः। एवं प्रकुपितानां प्रसरताञ्च वायोर्गमनाटोपौ। ओषाचोषपरिदाहधूमायनानि पित्तस्य। अरोचकाविपाकाङ्गसादाश्छर्दिश्चेति श्लेष्मणो लिङ्गानि भवन्ति। तत्र तृतीयः क्रियाकालः।

अत ऊर्द्ध्वं स्थानसंश्रयं वक्ष्यामः। एवं कुपितास्तांस्तान् शरीरप्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति। ते यदोदरसन्निवेशं कुर्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाहविसूचिकातिसारप्रभृतीन् जनयन्ति। वस्तिगताः प्रमेहाश्मरीमूत्राघातमूत्रदोषप्रभृतीन्। मेढ्रगता निरुद्धप्रकाशोपदंशशूकदोषप्रभृतीन्। गुदगता भगन्दरार्शःप्रभृतीन् वृषणगता वृद्धीः। ऊर्द्ध्वजत्रुगतास्तूर्द्ध्वजान्। त्वङ्मांसशोणितस्थाः क्षुद्ररोगान् कुष्ठानि विसर्पांश्च। मेदोगता ग्रन्थ्यपच्यर्बुदगलगण्डालजीप्रभृतीन्। अस्थिगता विद्रध्यनुशयीप्रभृतीन्। पादगताः श्लीपदवातशोणितवातकण्टकप्रभृतीन्। सर्वाङ्गगता ज्वरसर्वाङ्गरोगप्रभृतीन्।

तेषामेवमभिनिविष्टानां पूर्वरूप प्रादुर्भावस्तमतिरोगं वक्ष्याम । तत्र पूर्वरूपगतेषु चतुर्थः क्रियाकालः ।

अत ऊर्द्धं व्याधिदर्शनं वक्ष्यामः । शोफार्बुदग्रन्थि-विद्रधिविसर्पप्रभृतीनां प्रव्यक्तलक्षणता ज्वरातीसारप्रभृती-नाञ्च । तत्र पञ्चम क्रियाकालः ।

अत ऊर्द्धमेतेषामवदीर्णानां व्रणभावमापन्नानां षष्ठः क्रियाकालः ज्वरातिसारप्रभृतीनाञ्च दीर्घकालानुबन्धः । तत्र ाप्रतिक्रियमाणेऽसाध्यतामुपयान्ति ।

सञ्चयञ्च प्रकोपञ्च प्रसरं स्थानसंश्रयम् ।
व्यक्तिं भेदञ्च यो वेत्ति दोषाणां स भवेद्भिषक् ॥
सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ।
ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ।
सर्वैर्भावैस्त्रिभिर्वापि द्वाभ्यामेकेन वा पुनः ॥
संसर्गे कुपितं क्रुद्धं दोषं दोषोऽनुधावति ।
संसर्गे यो गरीयान् स्यादुपक्रम्यः स वै भवेत् ॥
शेषदोषाविरोधेन सन्निपाते तथैव च ॥

# एकविंशोऽध्यायः ।

---

अथातो व्याधिसमुद्देशीयमध्यायं
व्याख्यास्यामः ।

द्विविधा व्याधयः शस्त्रसाध्याः स्नेहादिक्रियासाध्याश्च। तत्र शस्त्रसाध्येषु स्नेहादिक्रिया न प्रतिषिध्यते। स्नेहादिक्रियासाध्येषु शस्त्रकर्म्म न क्रियते। अस्मिन् पुनः शास्त्रे सर्वतन्त्रसामान्यात् सर्वेषां व्याधीनां यथास्थूलमवरोधः क्रियते। प्रागभिहितं तद्दुःखसंयोगो व्याधिरिति तच्च दुःखं त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकमिति। तत्तु सप्तविधे व्याधावुपनिपतति। ते पुनः सप्तविधा व्याधयः। तद्यथादिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ताः सङ्घातबलप्रवृत्ताः कालबलप्रवृत्ता दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ता इति। तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः तेऽपि द्विविधा मातृजाः पितृजाश्च। जन्मबलप्रवृत्ता ये मातुरपचारात् पङ्ग्वजात्यन्धबधिरमूकमिन्मिणवामनप्रभृतयो जायन्ते तेऽपि द्विविधा रसकृता दौहृदापचारकृताश्च। दोषबलप्रवृत्ता य आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च तेऽपि द्विविधाः आमाशयसमुत्थाः पक्वाशयसमुत्थाश्च पुनश्च द्विविधा शारीरा मानसाश्च त एव आध्यात्मिकाः। सङ्घातबलप्रवृत्ता य

आगन्तवो दुर्बलस्य बलवद्विग्रहात् तेऽपि द्विविधाः शस्त्रकृता व्यालादिकृताश्च। एत आधिभौतिकाः। कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्तास्तेऽपि द्विविधा व्यापन्नर्त्तुकृता अव्यापन्नर्त्तुकृताश्च। दैवबलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्वकृता उपसर्गकृताश्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च द्विविधाः संसर्गजा आकस्मिकाश्च। स्वभावबलप्रवृत्ताः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयस्तेऽपि द्विविधाः कालकृता अकालकृताश्च तत्र परिरक्षणकृताः कालकृता अपरिरक्षणकृता अकालकृता एत आधिदैविका तत्र सर्वव्याध्यवरोधः।

सर्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वाद्दृष्टफलत्वादागमाच्च यथाहि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्वरजस्तमांसि न व्यतिरिच्यन्ते। एवमेव कृत्स्नं विकारजातं विश्वरूपेणावस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्त्तन्ते। दोषधातुमलसंसर्गादायतनविशेषान्निमित्ततश्चैषां विकल्पा भवन्ति। दोषदूषितेष्वत्यर्थं धातुषु संज्ञा क्रियते रसजोऽयं शोणितजोऽयं मांसजोऽयं मेदोजोऽयमस्थिजोऽयं मज्जजोऽयं शुक्रजोऽयं व्याधिरिति। तत्रान्नाश्रद्धारोचकाविपाकाङ्गमर्द्दज्वरहृल्लासतृप्तिगौरवहृत्पाण्डुरोगमार्गोपरोधकार्श्यवैरस्याङ्गसादाकालवलिपलितदर्शनप्रभृतयो रसदोषजा विकाराः। कुष्ठविसर्पपिड़कामशकनीलिकातिलकालकन्यच्छव्यङ्गेन्द्रलुप्तप्लीहविद्रधिगुल्मवातशोणितार्शोऽर्वुदाङ्गमर्द्दासृग्दररक्तपित्तप्रभृतयो रक्तदोषजा गुदमुख-

मेद्रपाकाश्च । अधिमांसार्बुदार्शोऽधिजिह्वोपकुशगलशुण्डिकालजीमांससंघातौष्ठप्रकोप–गलगण्डगण्डमालाप्रभृतयो मांसदोषजाः। ग्रन्थिवृद्धिगलगण्डार्बुदमेदोजौष्ठप्रकोपमधुमेहातिस्थौल्यातिस्वेदप्रभृतयो मेदोदोषजाः। अध्यस्थ्यधिदन्तास्थितोदशूलकुनखप्रभृतयोऽस्थिदोषजाः। तमोदर्शनमूर्च्छाभ्रमपर्वगौरवस्थूलमूलोरुजङ्घानेत्राभिष्यन्दप्रभृतयो मज्जदोषजाः क्लैव्याप्रहर्षशुक्राश्मरीशुक्रमेहशुक्रदोषादयश्च तद्दोषजाः। त्वग्दोषाः सङ्गोऽतिप्रवृत्तिर्वा मलायतनदोषाः। इन्द्रियाणामप्रवृत्तिरयथाप्रवृत्तिर्वेन्द्रियायतनदोषाः। इत्येवं समास उक्तो विस्तरनिमित्तानि चैषां प्रतिरोगं वक्ष्यामः।

कुपितानां हि दोषाणां शरीरे परिधावताम् ।
यत्र सङ्गः स्ववैगुण्याद्व्याधिस्तत्रोपजायते ॥

ते व्याधयः पुनस्त्रिधा विभज्यन्ते । यथा–

साध्या याप्या असाध्याश्च व्याधयस्त्रिविधा स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥
यापनीयन्तु तं विद्यात् क्रिया धारयते हि यम् ।
क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम् ।
प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥

रोगारम्भकदोषस्य प्रकोपादुपजायते ।
योऽन्यो विकारः स बुधैरुपद्रव इहोदितः ॥

# द्वाविंशोऽध्यायः।

---

## लङ्घनबृंहणीयाध्यायः।

तपःस्वाध्यायनिरतानात्रेयः शिष्यसत्तमान्।
षडग्निवेशप्रमुखानुक्तवान् परिचोदयन्॥
लङ्घनं बृंहणं काले रूक्षणं स्नेहनं तथा।
स्वेदनं स्तम्भनञ्चैव जानीते यः स वै भिषक्॥
इति तमेवमुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच।
भगवल्लङ्घनं किंस्विल्लङ्घनीयाश्च कीदृशाः।
बृंहणं बृंहणीयाश्च रूक्षणीयाश्च रूक्षणम्॥
स्नेहनं स्नेहनीयाश्च स्वेदाः स्वेद्याश्च के मताः।
स्तम्भन स्तम्भनीयाश्च वक्तुमर्हसि तद्गुरो॥
लङ्घनप्रभृतीनाञ्च षस्रावेषा समासतः।
कृताकृतातिरिक्तानां लक्षण वक्तुमर्हसि॥
तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत्।
यत्किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम्॥
बृहत्त्वं यच्छरीरस्य जनयेत्तच्च बृंहणम्।
रौक्ष्यं खरत्व वैशद्यं यत् कुर्य्यात्तद्धि रूक्षणम्॥
स्नेहनं स्नेहविष्यन्दमार्द्दवक्लेदकारकम्।
स्तम्भगौरवशीतघ्नं स्वेदनं स्वेदकारकम्॥
स्तम्भनं स्तम्भयति यद्गतिमन्तं चलं द्रवम्॥
लघूष्णतीक्ष्णविशदं रूक्षं सूक्ष्मं खर सरम्।

कठिनञ्चैव यद्द्रव्यं प्रायस्तल्लङ्घनं स्मृतम् ॥
गुरुशीतमृदुस्निग्धं बहुलं स्थूलपिच्छिलम् ।
प्रायोमन्दं स्थिरं श्लक्ष्णं द्रव्यं बृंहणमुच्यते ॥
रूक्षं लघु खरं तीक्ष्णमुष्णं स्थिरमपिच्छिलम् ।
प्रायशः कठिनञ्चैव यद्द्रव्यं तद्धि रूक्षणम् ॥
द्रवं सूक्ष्मं सरं स्निग्धं पिच्छिलं गुरु शीतलम् ।
प्रायोमन्दं मृदु च यद्द्रव्यं तत् स्नेहनं मतम् ॥
उष्णं तीक्ष्णं सरं स्निग्धं रूक्षं सूक्ष्मं द्रवं स्थिरम् ।
द्रव्यं गुरु च यत् प्रायस्तद्धि स्वेदनमुच्यते ॥
शीतं मन्दं मृदु श्लक्ष्णं रूक्षं सूक्ष्मं द्रवं स्थिरम् ।
यद्द्रव्यं लघु चोद्दिष्टं प्रायस्तत् स्तम्भनं स्मृतम् ॥

चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥
प्रभूतश्लेष्मपित्तास्रमलाः संदुष्टमारुताः ।
बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥
येषां मध्यबला रोगाः कफपित्तसमुत्थिताः ।
वम्यतीसारहृद्रोगविसूच्यलसकज्वराः ॥
विबन्धगौरवोद्गारहृल्लासारोचकादयः ।
पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत् ॥
एत एव यथोद्दिष्टा येषामल्पबला गदाः ।
पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत् ॥
रोगान् जयेन्मध्यबलान् व्यायामातपमारुतैः ।
बलिनां किं पुनर्येषां रोगाणामवरं बलम् ॥
त्वग्दोषाणां प्रमूढानां स्निग्धाभिष्यन्दि बृंहिणाम् ।

शिशिरे लङ्घनं शस्तमपि वातविकारिणाम्॥
अदिग्धविद्धमक्लिष्टवयस्थसात्म्यचारिणाम्।
मृगमत्स्यविहङ्गानां मांसं बृंहणमुच्यते॥
क्षीणाः क्षताः कृशा वृद्धा दुर्बला नित्यमध्वगाः।
स्त्रीमद्यनित्या ग्रीष्मे च बृंहणीया नराः स्मृताः॥
शोषार्शोग्रहणीदोषैर्व्याधिभिः कर्शिताश्च ये।
क्रव्यान्मांसरसास्तेषां बृंहणा लघवो मताः॥
स्नानमुत्सादनं स्वप्नो मधुराः स्नेहवस्तयः।
शर्कराक्षीरसर्पींषि सर्वेषां विद्धि बृंहणम्॥
कटुतिक्तकषायाणां सेवनं स्त्रीष्वसंयमः।
खलीपिण्याकतक्राणां मध्वादीनाञ्च रूक्षणम्॥
अभिष्यन्दो महादोषा मर्मस्था व्याधयश्च ये।
ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः॥
स्नेह्याः स्नेहयितव्याश्च स्वेद्याः स्वेद्याश्च ये मताः।
स्नेहाध्याये मयोक्तास्ते स्वेदाख्ये च सविस्तरम्॥
द्रवं तनु सरं यावच्छीतीकरणमौषधम्।
स्वादु तिक्तं कषायञ्च स्तम्भनं सर्वमेव तत्॥
पित्तक्षाराग्निदग्धा ये छर्द्यतीसारपीड़िताः।
विषस्वेदातियोगार्त्ताः स्तम्भनीयास्तथाविधाः॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि॥
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च।

चुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमोहृदि ।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥
बल पुष्ट्युपलम्भश्च कार्श्यदोषविवर्ज्जनम् ।
लक्षणं वृंहिते स्थौल्यमति चात्यर्थवृंहिते ॥
कृतातिकृतचिह्नं यल्लङ्घिते तद्विरूक्षिते ।
स्तम्भितः स्याद्बले लब्धे यथोक्तैश्चामयैर्जितैः ।
श्यावता स्तब्धगात्रत्वमुद्वेगो हनुसंग्रहः ॥
हृद्वर्चोनिग्रहश्च स्यादतिस्तम्भितलक्षणम् ॥
इति षट् सर्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः ।
साध्यानां साधने सिद्धा मात्राकालानुरोधिन ॥
दोषाणां बहुसंसर्गात्सङ्कीर्य्यन्तेऽप्युपक्रमा ।
षट्त्वन्तु नातिवर्त्तन्ते त्रित्व वातादयो यथा ॥
इत्यस्मिन् लङ्घनाध्याये व्याख्याताः षडुपक्रमाः ।
यथाप्रश्न भगवता चिकित्सा यः प्रवर्त्तते ॥

——

# त्रयस्त्रिंशोऽध्यायः।

---

## अथ सन्तर्पणीयाध्यायः।

सन्तर्पयति यः स्निग्धैर्मधुरैर्गुरुपिच्छिलैः।
नवान्नैर्नवमद्यैश्च मांसैश्चानूपवारिजैः॥
गोरसैर्गौड़िकैश्चान्नैः पौष्टिकैश्चातिमात्रशः।
चेष्टाद्वेषी दिवास्वप्न-शय्यासन-सुखे रतः॥
रोगास्तस्योपजायन्ते सन्तर्पणनिमित्तजाः।
प्रमेहकण्डूपिड़काकोठपाण्ड्वामयज्वराः॥
कुष्ठान्यामप्रदोषाश्च मूत्रकृच्छ्रमरोचकः।
तन्द्रा क्लैव्यमतिस्थौल्यमालस्यं गुरुगात्रता॥
इन्द्रियस्रोतसां लेपो बुद्धेर्मोहः प्रमीलकः।
शोथाश्चैवंविधाश्चान्ये शीघ्रमप्रतिकुर्वतः॥
शस्तमुल्लेखनं तत्र विरेको रक्तमोक्षणम्।
व्यायामश्चोपवासश्च धूमाः संस्वेदनानि च॥
सक्षौद्रश्चाभयाप्राशः प्रायोरूक्षान्नसेवनम्।
चूर्णप्रदेहा ये चोक्ताः कण्डूकोठविनाशनाः॥
त्रिफलारग्वधं पाठां सप्तपर्णं सवत्सकम्।
मुस्तं निम्बं समदनं जलेनोत्क्वथितं पिबेत्॥
तेन मेहादयो यान्ति नाशमभ्यस्यतो ध्रुवम्।
मात्राकालप्रयुक्तेन सन्तर्पणसमुत्थिताः॥

मुस्तमारग्वधं पाठा त्रिफला देवदारु च।
श्वदंष्ट्रा खदिरो निम्बो हरिद्रे त्वक् च वत्सकात्॥
रसमेषां यथादोषं प्रातः प्रातः पिबेन्नरः।
सन्तर्पणकृतैः सर्वैर्व्याधिभिर्विप्रमुच्यते॥
एभिश्चोद्वर्त्तनोद्घर्षस्नानयोगोपयोजितैः।
त्वग्दोषाः प्रशमं यान्ति तथा स्नेहोपसंस्कृतैः॥
कुष्ठं गोमेदको हिङ्गु क्रौञ्चास्थि त्र्यूषणं वचा।
वृषकैले श्वदंष्ट्रा च खराह्वा चाश्मभेदकः॥
तक्रेण दधिमण्डेन वदराम्लरसेन वा।
मूत्रकृच्छ्रं प्रमेहञ्च पीतमेतद्व्यपोहति॥
तक्राभयाप्रयोगैश्च त्रिफलायास्तथैव च।
अरिष्टानां प्रयोगैश्च यान्ति मेहादयः क्षयम्॥
उक्तं सन्तर्पणोत्थानामपतर्पणमौषधम्॥
वक्ष्यन्ते सौषधाश्चोर्द्ध्वमपतर्पणजा गदाः।
देहाग्निबलवर्णौजः शुक्रमांसपरिक्षयः॥
ज्वरः कासानुबन्धश्च पार्श्वशूलमरोचकः।
उन्मादः श्रोत्रदौर्बल्यं प्रलापो हृदयव्यथा॥
विण्मूत्रसंग्रहः शूलं जङ्घोरुत्रिकसंश्रयम्।
पर्वास्थिसन्धिभेदश्च ये चान्ये वातजा गदाः॥
ऊर्द्ध्ववातादयः सर्वे जायन्ते तेऽपतर्पणात्।
तेषां सन्तर्पणं तज्ज्ञैः पुनराख्यातमौषधम्॥
सद्यः क्षीणो हि सद्यो वै तर्पणेनोपचीयते।
नर्त्ते सन्तर्पणाभ्यासाच्चिरक्षीणस्तु पुष्यति॥
देहाग्निदोषभेषज्यमात्राकालानुवर्त्तिना।

कार्य्यमत्वरमाणेन भेषजं चिरदुर्बले ॥
हिता मांसरसास्तस्मै पयांसि च घृतानि च ।
स्नानानि वस्तयोऽभ्यङ्गास्तर्पणास्तर्पणाश्च ये ॥
ज्वरकासप्रसक्तानां कृशानां मूत्रकृच्छ्रिणाम् ।
तृष्यतामूर्द्ध्ववातानां वक्ष्यन्ते तर्पणा हिता ॥
शर्करापिप्पलीमूलघृतक्षौद्रसमांशकः ।
शक्तुर्द्विगुणितो वृष्यस्तेषां मन्थ प्रशस्यते ॥
शक्तवो मदिरा क्षौद्रं शर्करा चेति तर्पणम् ।
पिबेन्मारुतविण्मूत्रकफपित्तानुलोमनम् ॥
फाणितं शक्तवः सर्पिर्दधिमण्डाम्लकाञ्जिकम् ।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्त्तहरं पिबेत् ॥
मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥
स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा ।
सद्यः सन्तर्पणो मन्थः स्थैर्य्यवर्णबलप्रदः ॥
सन्तर्पणोत्था ये रोगा रोगा ये चापतर्पणात् ।
सन्तर्पणीयेऽध्यायेऽस्मिन् सौषधाः परिकीर्त्तिताः ॥

——

# चतुस्त्रिंशोऽध्यायः।

---

अथ द्रव्यादिविज्ञानीयोऽध्यायः।

द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः।
द्रव्ये रसो गुणो वीर्य्यं विपाकः शक्तिरेव च॥
पदार्थाः पञ्च तिष्ठन्ति स्वं स्वं कुर्वन्ति कर्म्म च॥

अथ रसाः।

रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः।
षड्द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः॥
तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते॥
ये रसाः वातशमना भवन्ति यदि तेषु वै।
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम्॥
ये रसाः पित्तशमना भवन्ति यदि तेषु वै।
तीक्ष्णोष्णलघुता चैव न ते तत्कर्म्मकारिणः॥
ये रसाः श्लेष्मशमना भवन्ति यदि तेषु वै।
स्नेहगौरवशैत्यानि न ते हन्युः कफं तदा॥

रसलक्षणमत ऊर्द्ध्वं वक्ष्यामः।

तत्र यः परितोषमुत्पादयति प्रह्लादयति तर्पयति जीवयति मुखावलेपं जनयति श्लेष्माणं चाभिवर्द्धयति स मधुरः। यो दन्तहर्षमुत्पादयति मुखास्रावं जनयति श्रद्धाञ्चोत्पादयति सोऽम्लः। यो भक्तरुचिमुत्पादयति कफ-

प्रक्लेदं जनयति मार्दवं चापादयति स लवणः। यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिं चापादयति हर्षञ्च स तिक्तः। यो जिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णीते नासिकाञ्च स्रावयति स कटुकः। यो वक्त्रं परिशोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कर्षति पीडयति च स कषायः।

रसगुणाः।

तत्र मधुररसस्य गुणाः।

मधुरो रसो रसरक्तमांसमेदोऽस्थिमज्जौजःशुक्रस्तन्यवर्द्धनश्चक्षुष्यः केश्यो वर्ण्यो बलकृत्सन्धानः शोणितरसप्रसादनो बालवृद्धक्षतक्षीणहितः षट्पदपिपीलिकानामिष्टतमस्तृष्णामूर्च्छादाहप्रशमनः षड़िन्द्रियप्रसादनः क्रिमिकफकरश्चेति स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानः कासश्वासालसकवमथुवदनमाधुर्य्यस्वरोपघात-क्रिमिगलगण्डानापादयति तथार्वुदश्लीपदवस्तिगुदोपलेपाभिष्यन्दप्रभृतीन् जनयति।

अम्लरसस्य गुणाः।

अम्लो जरणः पाचनः पवननिग्रहणोऽनुलोमनः कोष्ठविदाही वहिःशीतः क्लेदनः प्रायशो हृद्यश्चेति स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्तहर्षनयनसम्मीलनरोमसंवेजनकफविलयन-शरीरशैथिल्यान्यापादयति तथा क्षताभिहतदग्धदष्टभग्नशूलरुग्ण-प्रच्युतावमूत्रित-विसर्पितच्छिन्नभिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयञ्चेति।

लवणरसस्य गुणः।

लवणः संशोधनः पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्व्वरसप्रत्यनीको मार्गविशोधनः सर्व्वशरीरावयवमार्द्दवकरश्चेति स एवंगुणोऽप्येक एवात्यर्थमासेव्यमानो गात्रकण्डूकोठशोफवैवर्ण्यपुंस्त्वोपघातेन्द्रियोपतापान् तथा मुखाक्षिपाकं रक्तपित्तवातशोणिताम्लीकाप्रभृतीनापादयति।

तिक्तरसस्य गुणः।

तिक्तश्छेदनो रोचनो दीपनः शोधनः कण्डूकोठतृष्णामूर्च्छाज्वरप्रशमनः स्तन्यशोधनो विण्मूत्रक्लेदमेदोवसापूयोपशोषणश्चेति स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो गात्रमन्यास्तम्भाक्षेपकार्द्दितशिरःशूलभ्रमतोदभेदच्छेदास्यवैरस्यान्यापादयति।

कटुरसस्य गुणः।

कटुको दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्यकफक्रिमिविषकुष्ठकण्डूप्रशमनः सन्धिबन्धविच्छेदनोऽवसादनः स्तन्यशुक्रमेदसामुपहन्ता चेति स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो भ्रममदगलताल्वोष्ठशोषगात्रसन्तापबलविघातकम्पतोदभेदकृत्करचरणपार्श्वपृष्ठप्रभृतिषु च वातशूलानापादयति।

कषायरसस्य गुणः।

कषायः संग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीड़नः क्लेदोपशोषणश्चेति स एवंगुणोऽप्येक एवात्यर्थमुपसेव्यमानो हृत्पीड़ास्यशोषोदराध्मानवाक्यग्रह-

मन्यास्तम्भ-गात्रस्फुरण-चुमुचुमायनाकुञ्चनाक्षेपण-प्रभृतीन् जनयति।

अथ गुणाः।

गुरुर्लघुः स्निग्धरूक्षौ तीक्ष्णः श्लक्ष्णः स्थिरः सरः।
पिच्छिलो विशदः शीत उष्णश्च मृदुकर्कशौ॥
स्थूलः सूक्ष्मो द्रवः शुष्क आशुर्मन्दः स्मृता गुणाः॥
गुरु वातहरं पुष्टिश्लेष्मकृच्चिरपाकि च।
लघु पथ्यं परं प्रोक्तं कफघ्नं शीघ्रपाकि च॥
स्निग्धं वातहरं श्लेष्मकारि वृष्यं बलावहम्।
रूक्षं समीरणकरं परं कफहरं मतम्॥
तीक्ष्णं पित्तकरं प्रायो लेखनं कफवातहृत्।
भूनभोवारिवातानां वह्नेरेते गुणाः स्मृताः॥
श्लक्ष्णः स्नेहं विनापि स्यात् कठिनोऽपि हि चिक्कणः।
स्थिरो वातमलस्तम्भी सरस्तेषां प्रवर्त्तकः॥
पिच्छिलस्तन्तुलो बल्यः सन्धानः श्लेष्मलो गुरुः।
क्लेदच्छेदकरः ख्यातो विशदो व्रणरोपणः॥
शीतस्तु ह्लादनः स्तम्भी मूर्च्छातृड्स्वेददाहनुत्।
उष्णो भवति शीतस्य विपरीतश्च पाचनः॥
प्रसिद्धौ द्वाविमौ लोके गुणौ च मृदुकर्कशौ।
स्थूलः स्थौल्यकरो देहे स्रोतसामवरोधकृत्।
देहस्य सूक्ष्मच्छिद्रेषु विशेद्यत् सूक्ष्ममुच्यते।
द्रवः क्लेदकरो व्यापी शुष्कस्तद्विपरीतकः॥
आशुराशुकरो देहे धावत्यम्भसि तैलवत्।
मन्दः सकलकार्य्येषु शिथिलोऽल्पोऽपि कथ्यते॥

अथ प्रस्तावाद्दीपनादयो गुणाः
सलक्षणा लिख्यन्ते।

पचेन्नामं वह्निकृच्चद्दीपनं तद्यथा मिषिः।
पचत्यामं न वह्निञ्च कुर्य्याद्यत्तद्धि पाचनम्॥
नागकेशरवद्विद्याच्चित्रो दीपनपाचनः।
न शोधयति यद् दोषान् समान्नोदीरयत्यपि॥
समीकरोति विषमान् शमनं तद्यथामृता।
कृत्वा पाकं मलानाञ्च भित्त्वा बन्धमधो नयेत्॥
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी।
पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम्॥
नयत्यधः स्रंसनं तद्यथा स्यात् कृतमालकम।
मलादिकमबद्धं यद्बद्धं वा पिण्डितं मलैः॥
भित्त्वाधः पातयति यद्भेदन कटुकी यथा।
विपक्वं यदपक्वं वा मलादि द्रवतां नयेत्॥
रेचयत्यपि तज्ज्ञेयं रेचन त्रिवृता यथा।
अपक्वं पित्तश्लेष्माणचयमूर्द्ध्वं नयेत्तु यत्॥
वमनं तद्धि विज्ञेयं मदनस्य फलं यथा।
स्थानाद्बहिर्नयेदूर्द्ध्वमधो वा मलसञ्चयम्॥
देहसंशोधनं तत् स्याद्देवदालीफलं यथा।
दीपनं पाचनं यत् स्यादुष्णत्वाद्द्रवशोषकम्॥
ग्राही तच्च यथा शुण्ठी जीरकं गजपिप्पली।
रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद्भवेत्॥
वातकृत् स्तम्भनं तत् स्याद्यथा वत्सकटुण्टुकौ।
श्लिष्टान् कफादिकान् दोषानुन्मूलयति यद्बलात्॥

छेदनं तद्यथा चारा मरिचानि शिलाजतु।
धातून् मलान् वा देहस्य विशोष्योल्लेखयेच्च यत्॥
लेखन तद्यथा चौद्रं नीरमुष्णं वचा यवाः।
यस्माद्द्रव्याद्भवेत् स्त्रीषु हर्षो वाजीकर हि तत्॥
यथाश्वगन्धा मुषली शर्करा च शतावरी।
यस्माच्छुक्रस्य वृद्धिः स्याच्छुक्रलं हि तदुच्यते॥
यथा नागवलाद्याः स्युर्वीजञ्च कपिकच्छुजम्।
दुग्ध माषाश्च भल्लातफलमज्जामलानि च॥
एतानि जनकानि स्यूरेचकानि च रेतसः।
प्रवर्त्तिनी स्त्री शुक्रस्य रेचनं वृहतीफलम्॥
जातीफलं स्तम्भकं स्यात्कालिङ्ग चयकारि च।
रसायनन्तु तज्ज्ञेयं यज्जराव्याधिनाशनम्॥
यथामृता रुदन्ती च गुग्गुलुश्च शिलाजतु।
पूर्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति॥
व्यवायि तद्यथा भङ्गा फेनञ्चाहिसमुद्भवम्।
सन्धिबन्धांस्तु शिथिलान् यत्करोति विकाशि तत्॥
विशोष्यौजश्च धातुभ्यो यथा क्रमुककोद्रवौ।
बुद्धिं लुम्पति यद्द्रव्यं मदकारि तदुच्यते॥
तमोगुणप्रधानञ्च यथा मद्यं सुरादिकम्।
व्यवायि च विकाशि स्यात् स्न षच्छेदि मदावहम्॥
आग्नेयं जीवितहर योगवाहि स्मृतं विषम्।
निजवीर्य्येण यद्द्रव्यं स्रोतोभ्यो दोषसञ्चयम्॥
निरस्यति प्रमाथि स्यात्तद्यथा मरिचं वचा।
पैच्छिल्याद्गौरवाद्द्रव्यं रुद्ध्वा रसवहाः शिराः॥

धत्ते यद्गौरव तत्स्यादभिष्यन्दि यथा दधि।
विदाहि द्रव्यमुद्गारमम्लं कुर्य्यात्तथा तृषाम्॥
हृदि दाहञ्च जनयेत्पाकं गच्छति तच्चिरात्।
गृह्णाति योगवाहि द्रव्यं संसर्गिवस्तुगुणान्॥
पच्यमानं यथैतन्मधुजलतैलाज्यसूतलोहादि॥

अथ वीर्य्यम्।

उष्णशीतगुणोत्कर्षाद्द्वधैर्वीर्य्यं द्विधा स्मृतम्।
यत्सर्वमग्निसोमीयं दृश्यते भुवनत्रयम्॥
उष्णं वातकफौ हन्याच्छीग्रन्तु तनुते जराम्।
शीतं वातकफातङ्कान् कुरुते पित्तहृत्परम्॥
अन्यच्च। ततोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकता:।
शमञ्च वातकफयो. करोति शिशिरं पुन:॥
ह्लादनं जीवनं स्तम्भं प्रसाद रक्तपित्तयो.॥

अथ विपाक।

जाठरेणाग्निना योगाद्यदुदेति रसान्तरम्।
रसानां परिणामान्ते स विपाक इति स्मृत:॥
मिष्ट: पटुश्च मधुरमम्लोऽम्लं पच्यते रस:।
कटुतिक्तकषायाणां पाक: स्यात्प्रायश: कटु॥
प्राय पदेन व्रीहि: स्यात् स्वादुरम्लो विपाकत:।
शिवा कषाया मधुरा शुण्ठी च कटुकापि च॥

विपाकानां गुणा:।

श्लेष्मकृन्मधुर: पाको वातपित्तहरो मत:।
अम्लस्तु कुरुते पित्तं वातश्लेष्मगदापह॥
कटु: करोति पवनं कफ पित्तञ्च नाशयेत्।

विशेष एष रसतो विपाकानां निदर्शितः॥

अथ प्रभावः।

रसादिसाम्ये यत्कर्म्म विशिष्टं तत्प्रभावजम्।
दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी॥
मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम्।
प्रभावस्तु यथा धात्री लकुचस्य रसादिभिः॥
समापि कुरुते दोषत्रितयस्य विनाशनम्।
क्वचित्तु केवलं द्रव्यं कर्म्म कुर्य्यात्प्रभावतः॥
ज्वरं हन्ति शिरोबद्धा सहदेवीजटा यथा॥
अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावत.।
आगमेनोपयोज्यानि भेषजानि विचक्षणैः॥
प्रत्यक्षलक्षणफलाः प्रसिद्धाश्च स्वभावतः।
नौषधीर्हेतुभिर्विद्वान् परीक्षेत कथञ्चन॥
सहस्रेणापि हेतूनां नाम्बष्ठादिर्विरेचयेत्।
तस्मात्तिष्ठेत्तु मतिमानागमे न तु हेतुभिः॥

---

# पञ्चत्रिंशोऽध्यायः।

---

अथ दिनादिचर्य्या।

मानवो येन विधिना स्वस्थस्तिष्ठति सर्वदा।
तमेव कारयेद्वैद्यो यतः स्वास्थ्यं सदेप्सितम्॥
दिनचर्य्यां निशाचर्य्यामृतुचर्य्यां यथोदिताम्।
आचरन् पुरुषः स्वस्थः सदा तिष्ठति नान्यथा॥
ब्राह्मे मुहूर्त्ते बुध्येत स्वस्थो रक्षार्थमायुषः।
तत्र सर्वाघशान्त्यर्थं स्मरेद्धि मधुसूदनम्॥
आयुष्यमुषसि प्रोक्तं मलादीनां विसर्जनम्।
तदन्त्रकूजनाध्मानोदरगौरववारणम्॥
न वेगितोऽन्यकार्य्यः स्यान्न वेगानीरयेद्बलात्।
कामशोकभयक्रोधमनोवेगान् विधारयेत्॥
गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम्।
पवित्रीकरमाख्यातमलक्ष्मीकलिपापहृत्॥
प्रक्षालनं मतं पाण्योः पादयोः शुद्धिकारकम्।
मलश्रमहरं वृष्यं चक्षुष्यं राक्षसापहम्॥
भक्षयेद्दन्तपवनं द्वादशाङ्गुलमायतम्।
कनिष्ठिकाग्रवत् स्थूलमृज्वग्रन्थि तथाव्रणम्॥
एकैकं घर्षयेद्दन्तं मृदुना कूर्च्चकेन तु।
दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन्॥
क्षौद्रत्रिकटुकाक्तेन तैलसिन्धुभवेन वा।

चूर्णेन तेनैव त्याश्च दन्तान्नित्यं विशोधयेत् ॥
मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा ।
निम्बः स्यात्तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥
समयन्तु समालोक्य दोषञ्च प्रकृतिं तथा ।
यथोचितै रसैर्वीर्य्यैर्युक्तं द्रव्यं प्रयोजयेत् ॥
तेनास्य मुखवैरस्यदन्तजिह्वास्यजा गदाः ।
रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥
न खादेद्गलताल्वोष्ठजिह्वादन्तगदेषु तत् ।
मुखस्य पाके शोथे च श्वासकासवमीषु च ॥
दुर्बलोऽजीर्णभुक्तश्च हिक्कामूर्च्छामदान्वितः ।
शिरोरुजार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥
अर्द्दिती कर्णशूली च नेत्ररोगी नवज्वरी ।
वर्ज्जयेद्दन्तकाष्ठन्तु हृदामययुतोऽपि च ॥
जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा ।
पाटितं मृदु तत्काष्ठं मृदुपत्रमयं तथा ॥
दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत्सुखम् ।
तज्जिह्वामलवैरस्यदुर्गन्धजड़ताहरम् ॥
गण्डूषमपि कुर्वीत शीतेन पयसा मुहुः ।
कफतृष्णामलहरं मुखान्तःशुद्धिकारकम् ॥
सुखोष्णोदकगण्डूषः कफारुचिमलापहः ।
दन्तजाड्यहरश्चापि मुखलाघवकारकः ॥
कटुतैलादिनस्यार्थैं नित्याभ्यासेन योजयेत् ।
प्रातः श्लेष्मणि मध्याह्ने पित्ते सायं समीरणे ॥
सुगन्धवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः ।

निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिन: ॥
पञ्चरात्रान्नखश्मश्रुकेशरोमाणि कर्त्तयेत् ।
केशश्मश्रुनखादीनां कर्त्तनं संप्रसाधनम् ॥
उत्पाटयेत्तु लोमानि नासाया न कदाचन ।
तदुत्पाटनतो दृष्टे दौर्बल्यं त्वरया भवेत् ॥
केशपाशे प्रकुर्वीत प्रसाधन्या तु साधनम् ।
केशप्रसाधनं केश्यं रजोजन्तु मलापहम् ॥
लाघवं कर्मसामर्थ्यं विभक्तघनगात्रता ।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥
व्यायामदृढ़गात्रस्य व्याधिर्नास्ति कदाचन ।
विरुद्धं वा विदग्धं वा भुक्तं शीघ्रं विपच्यते ॥
भवन्ति शीघ्रं नैतस्य देहे शिथिलतादय: ।
न चैनं सहसाक्रम्य जरा समधिरोहति ॥
न चास्ति सदृशं तेन किञ्चित् स्थौल्यापकर्षणम् ।
स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् ॥
वसन्ते शीतसमये सुतरां स हितो मत. ।
अन्यदापि च कर्त्तव्यो बलार्द्धेन यथा बलम् ॥
हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते ।
मुखञ्च शोषं लभते तद्बलार्द्धस्य लक्षणम् ॥
किंवा ललाटे नासायां गात्रसन्धिषु कक्षयो: ।
यदा सञ्जायते स्वेदो बलार्द्धन्तु तदादिशेत् ॥
भुक्तवान् कृतसम्भोग: कासी श्वासी कृश: क्षयी ।
रक्तपित्ती क्षती शोषी न तं कुर्य्यात् कदाचन ॥
अतिव्यायामत: कासो ज्वरश्छर्द्दि: श्रम: क्लम: ।

तृष्णा चय' प्रतमको रक्तपित्तञ्च जायते ॥
अभ्यङ्ग' कारयेन्नित्य' सर्वेष्वङ्गेषु पुष्टिदम् ।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥
सार्षपं गन्धतैलञ्च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुत' तैलं न दुष्यति कदाचन ॥
अभ्यङ्गो वातकफहृच्छ्रमश्रान्तिबलं सुखम् ।
निद्रावर्णमृदुत्वायुः कुरुते देहपुष्टिकृत् ॥
अभ्यङ्गः शीलितो मूर्द्धि सकलेन्द्रियतर्पकः ।
दृष्टिपुष्टिकरो हन्ति शिरोभूमिगतान् गदान् ॥
केशानां बहुतां दार्ढ्य मृदुतां दीर्घतां तथा ।
कृष्णतां कुरुते कुर्य्याच्छिरसः पूर्णतामपि ॥
न कर्णरोगा न मल न च मन्याहनुग्रहः ।
नोच्चैःश्रुतिर्न वाधिर्य्यं स्यान्नित्यं कर्णपूरणात् ॥
रसाद्यैः पूरणं कर्णे भोजनात् प्राक् प्रशस्यते ।
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥
पादाभ्यङ्गश्च तत्स्थैर्य्यनिद्रादृष्टिप्रसादकृत् ।
पादसुप्तिश्रमस्तम्भसङ्कोचस्फुटनप्रणुत् ॥
व्यायामक्षुसवपुषं पद्भ्यां संमर्द्दितं तथा ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥
लोमकूपशिराजालधमनीभिः कलेवरम् ।
तर्पयेद्बलमाधत्ते युक्तः स्नेहोऽनुवासने ॥
अद्भिः ससिक्तमूलानां तरूणां पल्लवादयः ।
वर्द्धन्ते हि तथा नृणां स्नेहससिक्तधातवः ॥
नवज्वरी त्वजीर्णी च नाभ्यक्तव्यः कथञ्चन ।

तथा विरिक्तो वान्तश्च निरूढ़ो यश्च मानवः॥
पूर्व्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा।
शेषाणां वा त्विह प्रोक्ता वह्निसादादयो गदाः॥
उद्वर्त्तनं कफहरं मेदोघ्नं शुक्रदं परम्।
बल्यं शोणितकृच्चापि त्वक्प्रसादमृदुत्वकृत्॥
दीपनं वृष्यमायुष्यं स्नानमोजोबलप्रदम्।
कण्डूमलश्रमस्वेदतन्द्राटड्दाहपाकनुत्॥
वाह्यैश्च सेकैः शीताद्यैरूष्मान्तर्याति पीड़ितः।
नरस्य स्नातमात्रस्य दीप्यते तेन पावकः॥
शीतेन पयसा स्नानं रक्तपित्तप्रशान्तिकृत्।
तदेवोष्णेन तोयेन बल्यं वातकफापहम्॥
शिरःस्नानमचक्षुष्यमत्युष्णेनाम्बुना सदा।
वातश्लेष्मप्रकोपे तु हितं तच्च प्रकीर्त्तितम्॥
स्नानं ज्वरेऽतिसारे च नेत्रकर्णानिलार्त्तिषु।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम्॥
स्नानस्यानन्तरं सम्यग्वस्त्रेणाङ्गस्य मार्जनम्।
कान्तिप्रदं शरीरस्य कण्डूत्वग्दोषनाशनम्॥
कौषेयोर्णिकवस्त्रञ्च रक्तवस्त्रं तथैव च।
शुक्लन्तु शुभदं वस्त्रं शीतातपनिवारणम्॥
न कदापि जनैः सद्भिर्धार्य्यं मलिनमम्बरम्।
तत्तु कण्डूक्रिमिकरं ग्लान्यलक्ष्मीकरं परम्॥
ततो भोजनवेलायां कुर्य्यान्माङ्गल्यदर्शनम्।
तस्य प्रदर्शनं चित्तस्थैर्य्यकृत्तुष्टिवर्द्धनम्॥
शरीरे जायते नित्यं वाञ्छा नृणां चतुर्विधा।

क्षुत्क्षुधा च पिपासा च सुषुप्ता च रतस्पृहा ॥
भोजनेच्छाविघातात्स्यादङ्गमर्द्दोऽरुचिः श्रमः ।
तन्द्रा लोचनदौर्बल्यं धातुदाहो बलक्षयः ॥
विघातेन पिपासायाः शोषः कण्ठास्ययोर्भवेत् ।
श्रवणस्यावरोधश्च रक्तशोषो हृदि व्यथा ॥
निद्राविघाततो जृम्भा शिरोलोचनगौरवम् ॥
अङ्गमर्द्दस्तथा तन्द्रा स्यादन्नापाक एव च ।
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः ॥
बुभुक्षितो न योऽश्नाति तस्याहारेन्धनक्षयात् ।
मन्दीभवति कायाग्निर्यथा चाग्निर्निरिन्धनः ॥
आहारं पचति शिखी दोषानाहारवर्जितः ।
दोषाणाञ्च क्षये धातून् प्राणान् धातुक्षये पचेत् ॥
आहारप्रीणनः सद्यो बलकृद्देहधारणः ।
स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्द्धनः ॥
यथोक्तगुणसम्पन्नं नरः सेवेत भोजनम् ॥
विचार्य्य दोषकालादीन् कालयोरुभयोरपि ।
याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् ॥
याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः ।
तत्सम्भवति पक्वेषु रसदोषमलेषु च ॥
काले वा यदि वाकाले सोऽन्नकाल उदाहृतः ।
आहारन्तु नरः कुर्य्यान्निर्हारमपि सर्वदा ॥
उभाभ्यां लघुरपेतः स्यात्प्रकाशे हीयते श्रिया ।
हैमे वा राजते कांस्ये आयसे काचनिर्म्मिते ॥
पात्रे पत्रमये वापि नरः कुर्वीत भोजनम् ।

सौमनस्यं बलं पुष्टिमुत्साहं वृद्धिमायुषः ॥
स्वादु सञ्जनयत्यन्नमस्वादु च विपर्य्ययम् ।
अत्युष्णान्नं बलं हन्ति शीतं शुष्कञ्च दुर्जरम् ॥
अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं हि भोजनम् ।
अतिद्रुताशिताहारी गुणान् दोषान्न विन्दति ॥
भोज्यं शीतमहृद्यञ्च स्याद्विलम्बितमश्नतः ।
मन्दानलो नरो द्रव्यं मात्रागुरु विवर्जयेत् ॥
स्वभावतश्च गुरु यत्तथा संस्कारतो गुरु ।
मात्रागुरुस्तु मुद्गादिर्माषादिः प्रकृतेर्गुरुः ॥
संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम् ।
गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते ॥
द्रवो द्रवोत्तरश्चापि न मात्रा गुरुरिष्यते ।
आहारं षड्विधं चूष्यं पेयं लेह्यं तथैव च ॥
भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद्यथोत्तरम् ।
नाप्राप्तकालं भुञ्जीत हीनाधिकमथापि वा ॥
अप्राप्तकाले भुञ्जानो ह्यसमर्थतनुर्नरः ।
तांस्तान् व्याधीनवाप्नोति मरणञ्चाधिगच्छति ॥
कालेऽतीतेऽश्नतो जन्तोर्वायुनोपहतेऽनले ।
कृच्छ्राद्विपच्यते भुक्तं न स्याद्भोक्तुं पुनः स्पृहा ॥
हीनमात्रमसन्तोषं करोति च बलक्षयम् ।
आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥
तस्मात् सुसंस्कृतं युक्त्या दोषैरेतैर्विवर्जितम् ।
सुखासक्तो गुणैर्युक्तमुपसेवेत भोजनम् ॥
दौर्मनस्यं भयं क्रोधं भुञ्जानः परिवर्जयेत् ।

प्रक्षालयेदद्भिरास्यं भोजनाग्रे मुहुर्मुहुः ॥
विशुद्धरसनायास्मै रोचतेऽन्नमपूर्ववत्।
तृषितस्तु न चाश्नीयात् क्षुधितो न पिबेज्जलम् ॥
तृषितस्तु भवेद्गुल्मी क्षुधितस्तु जलोदरी।
न चैकरससेवाया प्रसज्येत कदाचन ॥
एकैकशः समस्तान् वा नाप्यश्नीयाद्रसान् सदा।
कुर्य्यात् क्षीरान्तमाहारं न दध्यन्तं कदाचन ॥
लवणाम्लकटूष्णानि विदाहीन्यतियानि तु।
तद्दोषं हर्त्तुमाहारं मधुरेण समापयेत् ॥
एवं भुक्त्वा समाचामेद्वक्त्रग्रहणपूर्वकम्।
भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ॥
दन्तान्तरगतञ्चान्नं शोधनेनाहरेच्छनैः।
कुर्य्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥
दन्तलग्नमनिर्हार्य्यं लेपं मन्येत दन्तवत्।
न तत्र बहुशः कुर्य्याद्यत्नं निर्हरणं प्रति ॥
रतौ सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे।
सभायां विदुषां राज्ञां कुर्य्यात्ताम्बूलचर्वणम् ॥
ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनन्तु वरं सरम्।
मुखवैशद्यसौगन्ध्यकान्तिसौष्टवकारकम् ॥
हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनम्।
मुखप्रसेकशमनं गलामयविनाशनम् ॥
ताम्बूलं नातिसेवेत न विरिक्तो बुभुक्षितः।
देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥
शोषः पित्तानिलास्रं स्यादतिताम्बूलचर्वणात्।

ताम्बूलं न हितं दन्तदुर्बलेक्षणरोगिणाम् ॥
विषमूर्च्छामदार्त्तानां क्षयिणां रक्तपित्तिनाम् ।
भुक्त्वा राजवदासीत यावदन्नक्लमो गतः ॥
ततः पदशतं गत्वा वामपार्श्वे तु संविशेत् ।
शब्दरूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् ॥
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ।
व्यायामञ्च व्यवायञ्च धावनं यानमेव च ॥
युद्धं गीतञ्च पाठञ्च मुहूर्त्तं भुक्तवांस्त्यजेत् ।
शयनञ्चासनञ्चाति न भजेन्न द्रवोत्तरम् ॥
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ।
दिवास्वापं न कुर्वीत यतोऽसौ स्यात् कफावहः ॥
ग्रीष्मवर्ज्जेषु कालेषु दिवास्वापो निषिध्यते ।
उचितो हि दिवास्वप्नो नित्यं येषां शरीरिणाम् ॥
वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ।
व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीड़ितान् ।
क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितान् नरान् निरशनान् कामं दिवा स्वापयेत् ॥
आयुःक्षयभयाद्विद्वान् नाह्नि सेवेत कामिनीम् ।
अवश्यं यदि सेवेत तदा ग्रीष्मवसन्तयोः ॥
मैत्रीं सर्व्वैः समं कुर्य्यात् स्नेहं सत्सु च सर्वथा ।
संसर्गं साधुभिः कुर्य्यादसत्सङ्गं परित्यजेत् ॥
विमुखान्नार्थिनः कुर्य्यान्नावमन्येत कानपि ।
गुरूणां सन्निधौ तिष्ठेत् सदैव विनयान्वितः ॥

पादप्रसारणादीनि तत्र नैव समाचरेत्।
अपकारपरेऽपि स्यादुपकारपरः पुमान्॥
आत्मवत् सकलान् पश्येद्वैरिणो दूरतो वसेत्।
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः॥
काले हितं मितं सत्यं संवादि मधुरं वदेत्॥
जनस्याशयमालक्ष्य यो यथा परितुष्यति।
तं तथैवानुवर्त्तेत पराराधनपण्डितः॥
नैकः सुखी न सर्वत्र विश्वस्तो न च शङ्कितः॥
नोद्यमे विरमेत् क्वापि हेतावीर्षेत् फले नतु।
न पीड़येदिन्द्रियाणि न चैतान्यतिलालयेत्॥
वर्षातपादिषु छत्री दण्डी रात्रौ भयेषु च।
सोपानत्कस्तनुं रक्षेद्विचरेद्युगमात्रदृक्॥
नोपरक्तं न चोद्यन्तं नास्तं यातं दिवाकरम।
सर्वथा न समीक्षेत न जले प्रतिविम्बितम्॥
नेक्षेत सततं सूक्ष्मं दीप्तामेध्याप्रियाणि च।
नेच्छेद्बलवता युद्धं न भारं शिरसा वहेत्॥
एवं दिनानि गमयेत् सदाचारपरः सदा।
ततो रात्रिप्रयुक्तानि कुर्य्यात्कर्म्माणि मानवः॥

---

# षट्त्रिंशोऽध्यायः।

---

## अथ रात्रिचर्य्या।

एतानि पञ्चकर्म्माणि सन्ध्यायां वर्जयेद्बुधः।
आहारं मैथुनं निद्रां संपाठं गतिमध्वनि॥
चिन्तयेत्परमात्मानं चराचरपतिं विभुम्।
भक्तिमान् प्रयतो नित्यं ध्यानयोगपरायणः॥
रात्रौ च भोजनं कुर्य्यात्प्रथमप्रहरान्तरे।
किञ्चिदूनं समश्नीयाद्दुर्जरं तत्र वर्जयेत्॥
शरीरे जायते नित्यं देहिनः सुरतस्पृहा।
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः॥
शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः।
अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः॥
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः॥
विहारं भार्य्यया कुर्य्याद्देशेऽतिशयसंवृते।
रम्ये अव्याङ्गनागाने सुगन्धे सुखमारुते॥
देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे।
श्रूयमाणे व्यथाहेतुवचने न रमेत ना॥
स्नातश्चन्दनलिप्ताङ्गः सुगन्धः सुमनोऽन्वितः।
भुक्तवृष्यः सुवसनः सुवेशः समलङ्कृतः॥
ताम्बूलवदनः पत्नीमनुरक्तोऽधिकस्मरः।

पुत्त्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे ॥
अत्याशितोऽधृतिः क्षुद्वान् सव्यथाङ्गः पिपासितः ।
बालो वृद्धोऽन्यरोगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥
रजस्वलामकामाञ्च मलिनामप्रिया तथा ।
वर्णवृद्धां वयोवृद्धां तथा व्याधिनिपीड़िताम् ॥
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् ।
नाभिगच्छेत् पुमान् नारीं भूरिवैगुण्यशङ्कया ॥
तिर्य्यग्योनावयोनौ वा दुष्टयोनौ च सङ्गमात् ।
उपदंशस्तथा वायोः कोपः शुक्रस्य च क्षयः ॥
उच्चारिते मूर्च्छिते च रेतसश्च विधारणे ।
उत्ताने च भवेच्छीघ्रं शुक्राश्मर्य्यास्तु सम्भवः ॥
स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् ।
वातो मांसरसः स्वप्नः सुरतान्ते हिता अमी ॥
रात्रौ जागरणं रूक्षं कफदोषविषार्त्तिजित् ।
निद्रा तु सेविता काले धातुसाम्यमतन्द्रिताम् ॥
पुष्टिवर्णबलोत्साहं वह्निदीप्तिं करोति च ।
अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत् ॥
वातपित्तकफान् जित्वा जीवेद्वर्षशतं सुखी ॥
अर्शःशोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकारा
मूत्राघातास्रपित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः ।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः ॥
विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति खलु नरो यो घ्राणरन्ध्रेण वारि ।

स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो
वलिपलितविहीनः सर्वरोगैर्विमुक्तः॥
पातव्यं नासया नीरं प्रसृतित्रयमात्रया॥
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासशोथहरम्।
रजनीक्षयेऽम्बु नस्यं रसायनं दृष्टिसञ्जननम्॥
स्नेहे पीते क्षते शुद्धावाध्माने स्तिमितोदरे।
हिक्कायां कफवातोत्थे व्याधौ तद्वारि वारयेत्॥

# सप्तत्रिंशोऽध्यायः।

अथ ऋतुचर्य्या।

ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ।
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत्॥
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः।
गङ्गाया दक्षिणे देशे वृष्टेर्बहुलभावतः।
उभौ मुनिभिराख्यातौ प्रावृड्वर्षाभिधावृतू॥
अन्ये तु। मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः।
शिशिरोऽथ वसन्तश्च ग्रीष्मो वर्षाशरद्धिमाः॥
शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम्।
आदानञ्च तदादत्ते नृणां प्रतिदिनं बलम्॥
तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः।
आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः॥

तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।
तस्मादादानमाग्नेयमृतवो दक्षिणायनम् ॥
वर्षादयो विसर्गश्च यद्बलं विसृजत्ययम् ।
सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ॥
मेघवृष्ट्यनिलैः शीतैः शान्तितापे महीतले ।
स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः ॥
शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यन्तु शेषयोः ॥

हेमन्तशिशिरचर्य्या ।

बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ।
भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ॥
अतो हिमेऽस्मिन् सेवेत स्वाद्वम्ललवणान् रसान् ।
दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ॥
अवश्यकार्य्यं सम्भाव्य यथोक्तं शीलयेदनु ।
वातघ्नतैलैरभ्यङ्गं मूर्ध्नि तैलविमर्दनम् ॥
नियुद्धं कुशलैः सार्द्धं पादाघातञ्च युक्तितः ।
कषायापहृतस्नेहस्ततः स्नातो यथाविधि ॥
कुङ्कुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ।
रसान् स्निग्धान् पलं पुष्टं गौड़मच्छसुरां सुराम् ॥
गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ।
नवमन्नं वसां तैलं शौचकार्य्ये सुखोदकम् ॥
प्रावाराजिनकौषेयप्रवेणीकुथकास्तृतम् ।
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ॥
युक्त्यर्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा ।
पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ॥

हरन्ति शीतमुष्टाङ्गयो धूपकुङ्कुमयौवनैः।
अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः॥
शीतपारुष्यजनितो न दोषो जातु जायते।
अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः॥
तदा हि शीतमधिकं रौक्ष्यञ्चादानकालजम्॥

वसन्तचर्य्या।

कफश्चिता हि शिशिरे वसन्तेऽर्कांशुतापितः।
हत्वाग्निं कुरुते रोगांस्ततस्तं त्वरया जयेत्॥
तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः।
व्यायामोद्वर्त्तनाघातैर्जित्वा श्लेष्माणमुल्वणम्॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः।
पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक्॥
सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान्।
प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान्॥
सौमनस्यकृतो हृद्यान् वयस्यैः सहितः पिबेत्।
निगदानासवारिष्टसीधुमाध्वीकमाधवान्॥
शृङ्गवेराम्बु साराम्बु मध्वम्बु जलदाम्बु च।
दक्षिणानिलशीतेषु परितो जलवाहिषु॥
अदृष्टनष्टसूर्य्येषु मणिकुट्टिमकान्तिषु।
परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु॥
विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु।
गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी॥
गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत्॥

ग्रीष्मचर्य्या ।

तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ।
प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्द्धते ॥
अतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरांस्त्यजेत् ।
भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ॥
सुशीततोयसिक्ताङ्गो लिह्यात् सक्तून् सशर्करान् ।
मद्यं न पेयं पेयं वा स्वल्पं सुबहुवारिणा ॥
अन्यथा शोथशैथिल्यदाहमोहान् करोति तत् ।
कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ॥
पिबेद्रसं नातिघनं रसालां रागषाड़वौ ।
पानकं पञ्चसारं वा नवमृद्भाजनस्थितम् ॥
मोचचोचदलैर्युक्तं साम्लं मृण्मयशुक्तिभिः ।
पाटलावासितञ्चाम्भः सकर्पूरं सुशीतलम् ॥
अभ्रङ्कषमहाशालतालरुद्धोष्णरश्मिषु ।
वनेषु माधवीश्लिष्टद्राक्षास्तवकशालिषु ॥
कदलीदलकह्लारमृणालकमलोत्पलैः ।
कोमलैः कल्पिते तल्पे हसत्कुसुमपल्लवे ॥
मध्यन्दिनेऽर्कतापार्त्तः सुप्याद्धारागृहे सुखम् ।
निशाकरकराकीर्णे सौधपृष्ठे निशासु च ॥
आसना स्वस्थचित्तस्य चन्दनार्द्रस्य मालिनः ।
निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः ॥
जलार्द्रतालवृन्तानि विस्तृताः पद्मिनीपुटाः ।
उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ॥
मृणालवलयाः कान्ताः प्रोत्फुल्लकमलोज्ज्वलाः ।

जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम् ॥

वर्षाचर्य्या ।

आदानग्लानवपुषामग्निः सन्नोऽपि सीदति ।
वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे ॥
सतुषारेण मरुता सहसा शीतलेन च ।
भूवाष्पेनाम्लपाकेन मलिनेन च वारिणा ॥
वह्निनैव च मन्देन तेष्वित्यन्योन्यदूषिषु ।
भजेत् साधारणं सर्वमुष्मणस्तेजनञ्च यत् ॥
आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान् ।
जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम् ॥
मस्तु सौवर्च्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।
दिव्यं कौपं शृतञ्चाम्भो भोजनन्त्वतिदुर्द्दिने ॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।
अपादचारी सुरभिः सततं धूपिताम्बरः ॥
हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ।
नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् ॥

शरच्चर्य्या ।

वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानां सञ्चितं पित्तं प्रायः शरदि कुप्यति ॥
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ॥

---

## अष्टात्रिंशोऽध्यायः ।

---

अथ देशप्रविभागः ।

भूमिदेशस्त्रिधानूपो जाङ्गलो मिश्रलक्षणः ।

आनूपलक्षणम् ।

नदीपल्वलशैलाढ्यः फुल्लोत्पलकुलैर्युतः ।
हंससारसकारण्डचक्रवाकादिसेवितः ॥
शशवाराहमहिषरुरुरोहिकुलाकुलः ।
प्रभूतद्रुमपुष्पाढ्यो नीलशस्यफलान्वितः ॥
अनेकशालिकेदारकदलीक्षुविभूषित. ॥
आनूपदेशो ज्ञातव्यो वातश्लेष्मामयार्त्तिमान् ॥

जाङ्गललक्षणम् ।

आकाशशुभ्र उच्चश्च स्वल्पपानीयपादप. ।
शमीकरीरविल्वाकंपीलुकर्कन्धुसङ्कुलः ॥
हरिणैनर्क्षपृषतगोकर्णखरसङ्कुलः ।
सुस्वादुफलवान् देशो वातलो जाङ्गलः स्मृतः ॥

साधारणलक्षणम् ।

संसृष्टलक्षणो यस्तु देशः साधारणो मतः ।
समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः ॥
समता तेन दोषाणां तस्मात्साधारणो वरः ॥
उचिते वर्त्तमानस्य नास्ति दुर्द्देशजं भयम् ।
आहारस्वप्नचेष्टादौ तद्देशस्य कृते सति ॥

यस्य देशस्य यो जन्तुस्तज्जन्तस्यौषधं हितम्।
देशादन्यत्र वसतस्तत्तुल्यगुणमौषधम्॥
स्वे देशे निचिता दोषा अन्यस्मिन् कोपमागताः।
बलवन्तस्तथा न स्युर्जलजाः स्थलजास्तथा॥

अथ प्रकृत्यादिवर्णनम्।

सप्त प्रकृतयो नृणां वातात्पित्तात्कफात्तथा।
संसर्गात् सन्निपाताच्च भवन्तीति भिषङ्मतम्॥
शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः।
प्रकृतिर्जायते तेन तस्या लक्षणमुच्यते॥
सोऽपि दोषः स्वभावावस्थितो न तु दुष्टः।

तत्र वातप्रकृतिलक्षणम्।

जागरूकः शीतद्वेषी दुर्भगः स्तेनो मत्सर्य्यनार्य्यः स्फुटितकरचरणोऽतिरूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति।

अधृतिरदृढ़सौहृदः कृतघ्नः
कृशपरुषो धमनीततः प्रलापी।
द्रुतगतिरटनोऽनवस्थितात्मा
वियदपि गच्छति सम्भ्रमेण सुप्तः॥
अव्यवस्थितमतिश्चलदृष्टि-
र्मन्दरत्नधनसञ्चयमित्रः।
किञ्चिदेव विलपत्य निबद्धं
मारुतप्रकृतिरेष मनुष्यः॥
वातिकाश्चाजगोमायुशशाखूष्ट्रशुनां तथा।
गृध्रकाकखरादीनां मनूकैः कीर्त्तिता नराः॥

पित्तप्रकृतिलक्षणम् ।

स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयन-तालुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्य-जुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोप-प्रसादो मध्यमबलो मध्य-मायुश्च भवति ।

मेधावी निपुणमतिर्विगृह्य वक्ता
तेजस्वी समितिषु दुर्निवारवीर्य्यः ।
सुप्तः सन् कनकपलाशकर्णिकारान्
सम्पश्येदपि च हुताशविद्युदुल्काः ॥
न भयात् प्रणमेदनतेष्वमृदुः
प्रणतेष्वपि सान्त्वनदानरुचिः ।
भवतीह सदा व्यथितास्य गतिः
स भवेदिह पित्तकप्रकृतिः ॥
भुजङ्गोलूकगन्धर्वयक्षमार्ज्जारवानरैः ।
व्याघ्रर्क्षनकुलानूकैः पैत्तिकास्तु नराः स्मृताः ॥

कफप्रकृतिलक्षणम् ।

प्रियङ्गुदूर्वाशरकाण्डदर्भगोरोचनापद्मानामन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णु-रलोलुपो बलवांश्चिरग्राही दृढ़वैरश्च भवति ।

शुक्लाक्षः स्थिरकुटिलातिनीलकेशो
लक्ष्मीवान् जलदमृदङ्गसिंहघोषः ।
सुप्तः सन् शशकलहंसचक्रवाकान्
सम्पश्येदपि च जलाशयान् मनोज्ञान् ॥
रक्तान्तनेत्रः सुविभक्तगात्रः

स्निग्धच्छविः सत्त्वगुणोपपन्नः।
क्लेशक्षमो मानयिता गुरूणां
ज्ञेयो बलासप्रकृतिर्मनुष्यः॥
दृढ़शास्त्रमतिः स्थिरमित्रधनः
परिगण्य चिरात् प्रददाति बहु।
परिनिश्चितवाक्यपदः सतत
गुरुमानकरश्च भवेत् स सदा॥

ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः।
तार्क्ष्यहंससमानूका: श्लेष्मप्रकृतयो नराः॥
द्वयोर्वा तिसृणां वापि प्रकृतीनान्तु लक्षणैः।
ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिनिर्दिशेत्॥
प्रकोपो वान्यथाभावः क्षयो वा नोपजायते।
प्रकृतीनां स्वभावेन जायते तु गतायुषः॥
विषजातो यथा कीटो न विषेण विपद्यते।
तद्वत्प्रकृतयो मर्त्त्यं शक्नुवन्ति न बाधितुम्॥

अत्र प्रसङ्गाद्वयोविभागः कथ्यते। वयस्तु त्रिविधं बाल्यं मध्यमं वार्द्धकमिति। तत्रोनषोड़शवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति। तेषु संवत्सरपराः क्षीरपाः द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति। षोड़शसप्तत्योरन्तरे मध्य वयस्तस्य विकल्पो वृद्धिर्यौवनं सम्पूर्णता हानिरिति। तत्राविंशतेर्वृद्धिराविंशतो यौवनमाचत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता अत ऊर्द्धमीषत्परिहाणिर्यावत्सप्ततिरिति। सप्ततेरूर्द्धं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वली-

पलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते। तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणिस्तत्राद्यापेक्षया प्रतिकुर्वीत।

बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु।
भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत्॥
अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत्।
तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः॥
पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे।
समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक्॥

अथ सारान् वक्ष्यामः। स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात्। स्निग्धं संहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण। अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा महाशिरःस्कन्धदृढ़दन्तहन्वस्थिनखमस्थिभिः। स्निग्धमूत्रस्वेदस्वरं वृहच्छरीरमायाससहिष्णुं मेदसा। अच्छिद्रगात्रं गूढ़ास्थिसन्धिं मांसोपचितञ्च मांसेन। स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन। सुप्रसन्नं मृदुत्वग्रोमाणं त्वक्सारं विद्यात्। इत्येषां पूर्वं पूर्वं प्रधानमायुःसौभाग्ययोरपि।

सत्त्ववान् सहते सर्वं संस्तम्यात्मानमात्मना।
राजसः स्तम्यमानोऽन्यैः सहते नैव तामसः॥

———

# ऊनत्रिंशोऽध्यायः।

---

अथारिष्टलक्षणवर्णनाध्यायः।

पुष्पं यथा पूर्वरूप फलस्येह भविष्यतः।
तथा लिङ्गमरिष्टाख्यं पूर्वरूपं मरिष्यतः॥
अप्येव तु भवेत् पुष्पं फलेनाननुबन्धि यत्।
फलञ्चापि भवेत् किञ्चिद्यस्य पुष्पं न पूर्वजम्॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते।
मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम्॥
मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता।
अरिष्टञ्चाप्यसम्बुध्यमेतत् प्रज्ञापराधजम्॥
तानि सौक्ष्म्यात् प्रमादाद्वा तथैवाशु व्यतिक्रमात्।
गृह्यन्ते नोद्गतान्येऽज्ञैर्मुमूर्षोर्नत्वसम्भवात्॥
असिद्धिमाप्नुयाल्लोके प्रतिकुर्वन् गतायुषः।
अतोऽरिष्टानि यत्नेन लक्षयेत् कुशलो भिषक्॥

शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत्।
तत्त्वरिष्टं समासेन व्यासतस्तु निबोध मे॥
शृणोति विविधान् शब्दान् यो दिव्यानामभावतः।
समुद्रपुरमेघानामसम्पत्तौ च निःस्वनान्॥
तान् स्वनान् नावगृह्णाति मन्यते चान्यशब्दवत्।
ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोत्यपि॥
द्विषच्छन्देषु रमते सुहृच्छन्देषु कुप्यति।

न शृणोति च योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥
यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतवत्।
सञ्जातशीतपिड़को यश्च दाहेन पीड्यते ॥
उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते।
प्रहारान् नाभिजानाति योऽङ्गच्छेदमथापि वा ॥
पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते।
वर्णान्यभावो राज्यो वा यस्य गात्रे भवन्ति हि ॥
स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः।
सुगन्धिर्वाति योऽकस्मात्तं ब्रुवन्ति गतायुषम् ॥
विपरीतेन गृह्णाति रसान् यश्चोपयोजितान्।
उपयुक्ताः क्रमाद्यस्य रसा दोषाभिवृद्धये ॥
यस्य दोषाग्निसाम्यञ्च कुर्य्युर्मिथ्योपयोजिताः।
यो वा रसान् न संवेत्ति गतासुं तं प्रचक्षते ॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धस्य सुगन्धिताम्।
यो वा गन्धान् न जानाति गतासुं तं विनिर्दिशेत् ॥
द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा।
विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥
दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति।
रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्च्चसम् ॥
अमेघोपप्लवे यश्च शक्रचापतड़िद्गुणान्।
तड़ित्वतोऽसितान् यो वा निर्म्मले गगने घनान् ॥
विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम्।
यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति ॥
धूमनीहारवासोभिरावृतामिव मेदिनीम्।

प्रदीप्तमिव लोकञ्च यो वा प्लुतमिवाम्भसा ॥
भूमिमष्टापदाकारां लेखाभिर्यश्च न पश्यति ।
ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति ॥
पश्यत्येकाङ्गहीनां वा विकृतां वान्यसत्त्वजाम् ।
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम् ॥
पिसाचोरगनागाना भूतानां विकृतामपि ।
यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते ॥
आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात् ॥
श्यावा लोहितिका नीलाः पीतिका वापि मानवम् ।
अभिद्रवन्ति यं छायाः स परासुरसंशयम् ॥
ह्रीश्रियौ नश्यतो यस्य तेज ओज स्मृतिः प्रभा ।
अकस्माद्यं भजन्ते वा स परासुरसंशयम् ॥
यस्याधरौष्ठ पतितः क्षिप्तश्चोर्द्ध्वं तथोत्तरः ।
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥
आरक्ता दशना यस्य श्यावा वा स्यु पतन्ति च ।
खञ्जनप्रतिमा वापि तं गतायुषमादिशेत् ॥
कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै ।
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥
कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका ।
अवस्फुर्जति भग्ना वा न स जीवति मानवः ॥
संक्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने ।
स्यातां वा प्रस्रुते यस्य स गतायुर्नरोध्रुवम् ॥
केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ ।
लुठन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥

नाहरत्यन्नमास्यस्थं न धारयति यः शिरः ।
एकाग्रदृष्टिर्मूढ़ात्मा सद्यः प्राणान् जहाति सः ॥
बलवान् दुर्बलो वापि सम्मोहं योऽधिगच्छति ।
उत्थाप्यमानो बहुशस्तं धीरः परिवर्ज्जयेत् ॥
उत्तानः सर्वदा शेते पादौ विकुरुते च यः ।
विप्रसारणशीलो वा न स जीवति मानवः ॥
शीतपादकरोच्छ्वासश्छिन्नश्वासश्च यो भवेत् ।
काकोच्छ्वासश्च यो मर्त्यस्तं धीरः परिवर्ज्जयेत् ॥
निद्रा न छिद्यते यस्य यो वा जागर्त्ति सर्वदा ।
मुह्येद्वा वक्तुकामस्तु प्रत्याख्येयः स जानता ॥
उत्तरौष्ठञ्च यो लिह्यादुद्गारांश्च करोति यः ।
प्रेतैर्वा भाषते सार्द्धं प्रेतरूपं तमादिशेत् ॥
खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते ।
पुरुषस्याविषार्त्तस्य सद्यो जह्यात्स जीवितम् ॥
वाताष्ठिला तु हृदये यस्योर्द्ध्वमनुयायिनी ।
रुजान्नविद्वेषकरी स परासुरसंशयम् ॥
अनन्योपद्रवकृतः शोथः पादसमुत्थितः ।
पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम् ॥
अतिसारो ज्वरो हिक्काच्छर्द्दिः शूनाण्डमेढ्रता ।
श्वासिनः कासिनो वापि यस्य त परिवर्ज्जयेत् ॥
स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम् ।
बलवन्तमपि प्राणैर्विमुञ्चन्ति न संशयः ॥
श्यावा जिह्वा भवेद्यस्य सव्यं चाक्षि निमज्जति ।
मुखञ्च जायते पूति यस्य तं परिवर्ज्जयेत् ॥

वक्त्रमापूर्य्यतेऽश्रूणां स्विद्यतश्चरणावुभौ।
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यत॥
अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च।
यस्याकस्मात्स विज्ञेयो गन्ता वैवस्वतालयम्॥
पङ्कमत्स्यवसातैलघृतगन्धाश्च ये नरा.।
मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम्॥
येषां वापि रतिर्नास्ति यातारस्ते यमालयम्॥
ज्वरातिसारशोफाः स्युर्यस्यान्योन्यामसादिनः।
प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम्॥
क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः॥
प्रवाहिका शिर.शूलं कोष्ठशूलञ्च दारुणम्।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः॥
विषमेणोपचारेण कर्म्मभिश्च पुराकृतैः।
अनित्यत्वाच्च जन्तूना जीवितं निधनं व्रजेत्॥

स्वभावप्रसिद्धाना शरीरैकदेशानामन्यथाभावित्वं मरणाय। यद्यथा– शुक्लानां कृष्णता कृष्णानां शुक्लता रक्तानामन्यवर्णत्वं स्थिराणामस्थिरत्वं मृदूनां स्थिरता चलानामचलत्वमचलानां चलता पृथूनां सङ्क्षिप्तत्वं सङ्क्षिप्तानां पृथुता दीर्घाणा ह्रस्वत्वं ह्रस्वाना दीर्घताऽपतनधर्म्मिणां पतनधर्म्मित्वं पतनधर्म्मिणामपतनधर्म्मित्वमकस्माच्च शैत्यौष्णग्रस्नैग्धरौक्ष्यप्रस्तम्भवैवर्ण्यावसदनञ्चाङ्गानाम्। स्वेभ्यः स्थानेभ्यः शरीरैकदेशानामवस्रस्तोत्क्षिप्तभ्रान्तावक्षिप्तपतितविमुक्तनिर्गतान्तर्गतगुरुलघुत्वानि। प्रवालवर्णव्यङ्ग-

प्रादुर्भावोऽकस्मात् । शिराणाञ्च दर्शनं ललाटे नासावंशे वा पिड़कोत्पत्तिः । ललाटे प्रभातकाले वा स्वेदः । नेत्ररोगाद्विना वाश्रुप्रवृत्तिः गोमयचूर्णप्रकाशस्य वा रजसो दर्शनं मूत्रपुरीषवृद्धिरभुञ्जानानां तत्प्रणाशो भुञ्जानानाम् । स्तनमूलहृदयोरःसु च शूलोत्पत्तयः । मध्ये शूनत्वमन्तेषु परिम्लायित्वं विपर्य्ययो वा तथार्द्धाङ्गे श्वयथुः । शोषोऽङ्गपक्षयोर्वा नष्टहीनविकलविकृतस्वरता । विवर्णपुष्पप्रादुर्भावो वा दन्तमुखनखशरीरेषु । यस्य वाप्सु कफपुरीषरेतांसि निमज्जन्ति । यस्य वा दृष्टिमण्डले भिन्नविकृतानि रूपाण्यालोकन्ते । स्नेहाभ्यक्तकेशाङ्ग इव यो भाति । यश्च दुर्बलो भक्तद्वेषातिसाराभ्यां पीड्यते । कासमानश्च तृष्णाभिभूतः । क्षीणश्छर्दिभक्तद्वेषयुक्तः । सफेनपूयरुधिरोद्वामो हतस्वरः शूलाभिपन्नश्च मनुष्यः । शूनकरचरणवदनः क्षीणोऽन्नद्वेषी स्रस्तपिण्डिकांसपाणिपादो ज्वरकासाभिभूतः । यस्तु पूर्वाह्णे भुक्तमपराह्णे छर्दयत्यविदग्धमतिसार्य्यते वा ज्वरकासाभिभूतः स श्वासान्म्रियते । वस्तवद्विलपन् यश्च भूमौ पतति स्रस्तमुष्कः स्तब्धमेढ्रो भग्नग्रीवः प्रनष्टमेहनश्च मनुष्यः । प्राग्विशुष्यमाणहृदय आर्द्रशरीरो यश्च लोष्टं लोष्टेणाभिहन्ति काष्ठं काष्ठेन तृणानि वा छिनत्ति । अधरोष्ठं दशत्युत्तरोष्ठं वा लेढ़ि । आलुञ्चति यदि वा कर्णौ केशांश्च ।

चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्द्धते ।
प्रक्षीणबलमासस्य लक्षणं तद्गतायुषः ॥
निवर्त्तन्ते महाव्याधिः सहसा यस्य देहिनः ।

न चाहारफलं यस्य दृश्यते स विनश्यति ॥
एतान्यरिष्टरूपाणि सम्यग् बुध्येत यो भिषक् ।
साध्यासाध्यपरीक्षायां स राज्ञः सम्मतो भवेत् ॥
उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्य्यताम् ।
रसायनादिना वत्स तान् शृणुकमना मम ॥
वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः ।
अश्मरी मूढ़गर्भश्च तथैवोदरमष्टकम् ॥
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः ।
प्राणमांसक्षयश्वासतृष्णाशोषवमिज्वरैः ॥
मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रुताः ।
वर्जनीया विशेषेण भिषजा सिद्धिमिच्छता ॥
शूनं सुप्तत्वचं भग्नं कम्पाध्मानिपीड़ितम् ।
नरं रुजार्त्तिमन्तञ्च वातव्याधिर्विनाशयेत् ॥
यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा ।
पिड़कापीड़ितं गाढ़ं प्रमेहो हन्ति मानवम् ॥
प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम् ।
पञ्चकर्म्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥
तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम् ।
शोफातिसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च ।
भगन्दरात् प्रस्रवन्ति यस्य तं परिवर्जयेत् ॥
प्रशूननाभिवृषणं बद्धमूत्रं रुगन्वितम् ।
अश्मरी क्षपयत्याशु सिकताशर्करान्विता ॥
गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः ।

हन्यात् स्त्रियं मूढगर्भं यथोक्ताश्चाप्युपद्रवाः॥
पार्श्वभङ्गान्नविद्वेषशोफातिसारपीड़ितम्।
विरिक्तं पूर्य्यमाणञ्च वर्जयेदुदरार्दितम्॥
यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः॥
यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान्।
नित्यं वक्त्रेण चोच्छ्वः स्यात् तं ज्वरो हन्ति मानवम्॥
हिक्काश्वासपिपासार्त्तं मूढ़ं विभ्रान्तलोचनम्।
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः॥
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीड़ितम्।
विशेषेण नरं वृद्धमतीसारो विनाशयेत्॥
रक्ताक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीड़ितम्।
कृच्छ्रेण बहुमेहन्तं यक्ष्मा हन्तीह मानवम्॥
श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढ़ताः।
भवन्ति दुर्बलत्वञ्च गुल्मिनो मृत्युमेष्यतः॥
आध्मातं बन्धनिष्यन्दं छर्दिहिक्काढ्ड़न्वितम्।
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम्॥
पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानव।
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति॥
लोहितं छर्दयेद्यश्च बहुशो लोहितेक्षणः।
रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति॥
अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः।
जागरिष्णुरसन्देहमुन्मादेन विनश्यति॥
बहुशोऽपस्मरन्तन्तु प्रक्षीणं चलितभ्रुवम्।

नैताभ्याञ्च विकुर्वाणमपस्मारो विनाशयेत्॥
नानापुष्पोपमो गन्धो यस्य वाति दिवानिशम्।
पुष्पितस्य वनस्येव नानाद्रुमलतावतः॥
तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः।
स वै सम्वत्सरादेहं जहातीति विनिश्चयः॥
एवमेकैकशः पुष्पैर्यस्य गन्धः समो भवेत्।
इष्टैर्वा यदि वानिष्टैः स च पुष्पित उच्यते॥
यद्यथा चन्दनं कुष्ठं तगरागुरुणी मधु।
माल्यं मूत्रपुरीषे वा मृतानि कुणपानि वा॥
ये चान्ये विविधात्मानो गन्धा विविधयोनयः।
तेऽप्यनेनानुमानेन विज्ञेया विकृतिं गते॥
इदञ्चाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम्।
वक्ष्यामो यदभिज्ञाय भिषङ्मरणमादिशेत्॥
त्रियोनिर्विंत्वरो यस्य गन्धो गात्रेषु दृश्यते।
इष्टो वा यदि वानिष्टो न स जीवति तां समाम्॥
एतावद्गन्धविज्ञानं रसज्ञानमतः परम्।
आतुराणां शरीरेषु वक्ष्यामो विधिपूर्वकम्॥
यो रसः प्रकृतिस्थानां नराणां देहसम्भवः।
स एषां चरमे काले विकारान् भजते बहून्॥
कश्चिदेवास्य वैरस्यमत्यर्थमुपपद्यते।
स्वादुत्वमपरस्यापि विपुलं भजते रसः॥
तमनेनानुमानेन विद्याद्विकृतिमागतम्।
मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात्॥
मक्षिकाश्चैव दंशाश्च मशकाश्च पिपीलिकाः।

विरसाद्दपसर्पन्ति जन्तोः कायान्म्रियतः ॥
अत्यर्थरसिकं कायं कालपक्वस्य देहिनः ।
अपिस्नातानुलिप्तस्य भृशमायान्ति मक्षिकाः ॥
यन्त्येतानि मयोक्तानि लिङ्गानि रसगन्धयोः ।
पुष्पितस्य नरस्यैतैः फलं मरणमादिशेत् ॥

कतमानि शरीराणि व्याधिमन्ति महामुने ।
यानि वैद्यः परिहरेद्येषु कर्म्म न सिध्यति ॥
इत्यग्निवेशेन प्रश्नं पृष्टः सुदुर्वचम् ।
आचचक्षे यथा तस्मै भगवांस्तन्निबोधत ॥
यस्य वै भाषमाणस्य रुजत्यूर्द्ध्वमुरो भृशम् ।
अन्नञ्च च्यवते भुक्तं स्थितं चापि न जीर्य्यति ॥
बलञ्च हीयते यस्य तृष्णा चाभिप्रवर्द्धते ।
जायते हृदि शूलञ्च तं भिषक् परिवर्जयेत् ॥
हिक्का गम्भीरजा यस्य शोणितञ्चातिसार्य्यते ।
न तस्मै भेषजं दद्यात् स्मरन्नात्रेयशासनम् ॥
आनाहश्चातिसारश्च यमेतौ दुर्बलं नरम् ।
व्याधितं विशतो रोगौ दुर्लभं तस्य जीवितम् ॥
आनाहश्चैव तृष्णा च यमेतौ दुर्बलं नरम् ।
विशतो विजहत्येनं प्राणा नातिचिरान्नरम् ॥
ज्वरः पौर्वाह्णिको यस्य शुष्कः कासश्च दारुणः ।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥
यस्य मूत्रं पुरीषञ्च ग्रथितं संप्रवर्त्तते ।
निरूष्मिणो जठरिणः श्वसनो न स जीवति ॥
श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति ।

जातिसङ्गं स संक्लिश्य तेन रोगेण हन्यते ॥
श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके ।
सीदतश्चाप्युभे जङ्घे तं भिषक् परिवर्जयेत् ॥
शूनहस्तं शूनपादं शूनगुह्योदरं नरम् ।
हीनवर्णबलाहारमौषधैर्नोपपादयेत् ॥
उरोमुक्तो बहुः श्लेष्मा नीलः पीतः सलोहितः ।
सततं च्यवते यस्य दूरात्तं परिवर्जयेत् ॥
हृष्टरोमा सान्द्रमूत्रः शूनः कासज्वरार्दितः ।
क्षीणमांसो नरो दूराद्वर्ज्यो वैद्येन जानता ॥
त्रयः प्रकुपिता यस्य दोषाः कष्टाभिलक्षिताः ।
कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम् ॥
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।
दुर्बलस्य विशेषेण नरस्यान्ताय कल्पते ॥
हनुमन्याग्रहस्तृष्णा बलह्रासोऽतिमात्रया ।
प्राणाश्चोरसि वर्त्तन्ते यस्य तं परिवर्जयेत् ॥
ताम्यतायच्छते शर्म न किञ्चिदपि विन्दति ।
क्षीणमांसबलाहारो मुमूर्षुरचिरान्नरः ॥
विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम् ।
वर्द्धन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते ॥
बलं विज्ञानमारोग्यं ग्रहणीमांसशोणितम् ।
एतानि यस्य क्षीयन्ते क्षिप्रं क्षिप्रं स हन्यते ॥
विकारा यस्य वर्द्धन्ते प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥
इत्येतानि शरीराणि व्याधिमन्ति विवर्जयेत् ।

न ह्येषु धीराः पश्यन्ति सिद्धिं काञ्चिदुपक्रमात् ॥
यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने ।
आपन्नो व्याधिरन्ताय ज्ञेयस्तस्य विजानता ॥
निःसंज्ञः परिशुष्कास्यः संविद्धो व्याधिभिश्च यः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत् ॥
हरिताश्च शिरा यस्य लोमकूपाश्च संवृताः ।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥
शरीरान्ताश्च शोभन्ते शरीरञ्चोपशुष्यति ।
बलञ्च हीयते यस्य राजयक्ष्मा निहन्ति तम् ॥
अंसाभितापो हिक्का च छर्द्दनं शोणितस्य च ।
आनाहः पार्श्वशूलञ्च भवत्यन्ताय शोषिणः ॥
वातव्याधिरपस्मारी कुष्ठी शोफी तथोदरी ।
गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः ॥
अचिकित्स्या भवन्त्येते बलमांसक्षये सति ।
अन्येष्वपि विकारेषु तान् भिषक् परिवर्जयेत् ॥
विरेचनहृतानाहो यस्तृष्णानुगतो नरः ।
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः ॥
पेयं पातुं न शक्नोति कण्ठस्य च मुखस्य च ।
उरसश्च विशुष्कत्वाद्यो नरो न स जीवति ॥
स्वरस्य दुर्बलीभावं हानिञ्च बलवर्णयोः ।
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ॥
ऊर्द्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम् ।
शर्म्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ।

संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥
निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक् ।
तच्च सीदत्यपः प्राप्य न स जीवितुमर्हति ॥
पित्तमुष्मानुगं यस्य शङ्खौ प्राप्य विमूर्च्छति ।
सरोगः शङ्खको नाम्ना चिरात्वाहन्ति जीवितम् ॥
सफेनं रुधिरं यस्य मुहुरास्यात्प्रमुच्यते ।
शूलैश्च तुद्यते कुक्षिः प्रत्याख्येयः स तादृशः ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ।
यस्यातुरस्य लक्ष्यन्ते त्रीणिहानि न जीवति ॥
सद्यस्त्विति क्षतः प्राणान् लक्षणानि पृथक् पृथक् ।
अग्निवेश प्रवक्ष्यामि संसृष्टो येन जीवति ॥
वाताष्ठीला तु संवृत्ता तिष्ठन्ती दारुणा हृदि ।
तृष्णयाभि परीतस्य सद्यो मुष्णाति जीवितम् ॥
पिण्डिके शिथिलीकृत्य जिह्मीकृत्य च नासिकाम् ।
वायुः शरीरे विचरन् सद्यो मुष्णाति जीवितम् ॥
भ्रुवौ यस्य च्युते स्थानादन्तर्दाहश्च दारुणः ।
तस्य हिक्काकरो रोगः सद्यो मुष्णाति जीवितम् ॥
क्षीणशोणितमांसस्य वायुरूर्द्ध्वं गतिश्चरन् ।
उभे मन्ये समायस्य सद्यो मुष्णाति जीवितम् ॥
अन्तरेण गुदं गच्छन् नाभिञ्च सहसानिलः ।
कृशस्य वङ्क्षणौ गृह्णन् सद्यो मुष्णाति जीवितम् ॥
हृदयञ्च गुदञ्चोभे गृहीत्वा मारुतो बली ।
दुर्बलस्य विशेषेण सद्यो मुष्णाति जीवितम् ॥
वङ्क्षणौ च गुदञ्चोभे गृहीत्वा मारुतो बली ।

श्वासं सञ्जनयन् जन्तोः सद्यो मुष्णाति जीवितम् ॥
नाभिं वस्तिं शिरो मूत्रं पुरीषञ्चापि मारुतः ।
विबध्य जनयन् शूलं सद्यो मुष्णाति जीवितम् ॥
भिद्येते वङ्क्षणौ यस्य वातशूलैः समन्ततः ।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥
शरीरं शोफिनं यस्य वातशोफेन देहिनः ।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात्स जीवितम् ॥
आमाशयसमुत्थाना यस्य स्यात्परिकर्त्तिका ।
तृष्णा गुदग्रहश्चोग्रः सद्यो जह्यात् स जीवितम् ॥
पक्वाशयमधिष्ठाय हत्वा संज्ञाञ्च मारुतः ।
कण्ठे घुर्घुरकं कृत्वा सद्यो हरति जीवितम् ॥
दन्ताः कर्द्दमचूर्णाभाः मुखं चूर्णकसन्निभम् ।
सिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः ॥
तृष्णाश्वासशिरोरोगमोहदौर्बल्यकूजनैः ।
स्पृष्टः प्राणान् जहात्याशु शकृद्भेदेन चातुरः ॥
ललाटे मूर्द्ध्नि वा वस्तौ नीला यस्य प्रकाशते ।
राजी बालेन्दुकुटिला न स जीवितुमर्हति ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः ।
उत्पद्याशु विनश्यन्ति न चिरात् स विनश्यति ॥
ग्रीवावमर्द्दो बलवान् जिह्वाश्वयथुरेव च ।
ब्रध्नास्यगलपाकश्च यस्य पक्षं तमादिशेत् ॥
सम्भ्रमोऽतिप्रलापोऽतिभेदोऽस्थ्नामतिदारुणः ।
कालपाशपरीतस्य त्रयमेतत् प्रवर्त्तते ॥
अहास्यहसनो मुह्यन् प्रलेढ़ि दशनच्छदौ ।

शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥
आह्वयन्तं समीपस्थं स्वजनं जनमेव वा ।
महामोहावृतमनाः पश्यन्नपि न पश्यति ॥
अतिप्रवृद्ध्या रोगाणां मनसश्च बलक्षयात् ।
वासमुत्सृजति क्षिप्रं शरीरी देहसञ्ज्ञकम् ॥
वर्णस्वरावग्निबलं वागिन्द्रियमनोबलम् ।
हीयतेऽसुक्षये निद्रा नित्या भवति वा न वा ॥

अथ प्रसङ्गात् साध्यलक्षणानि कथ्यन्ते ।

सौम्या दृष्टिर्भवेद्यस्य श्रोत्रं वक्त्रं तथैव च ।
स्वादं गन्धं विजानाति स साध्यो नात्र संशयः ॥
पाणिपादौ च यस्योष्णौ दाहश्चाल्पतरो भवेत् ।
जिह्वा च कोमला यस्य स रोगी न विनश्यति ॥
स्वेदहीनो ज्वरो यस्य श्वासो नासिकया चरेत् ।
कण्ठश्च कफहीनः स्यात् स रोगी जीवति ध्रुवम् ॥
यस्य निद्रा सुखेन स्यात् शरीरं द्युतिमद्भवेत् ।
इन्द्रियाणि प्रसन्नानि स रोगी नैव नश्यति ॥
शरीरं यस्य शीतञ्च प्रकृत्या नैव हीयते ।
तस्य रोगा ध्रुवं साध्यो विद्धि वत्स समासतः ॥

---

# चत्वारिंशोऽध्यायः ।

---

अथातो जनपदोद्ध्वंसनीयमध्यायं
व्याख्यास्यामः ।

जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्यराजधान्यां भगवान् पुनर्वसुरात्रेयोऽन्तेवासिगणपरिवृतः पश्चिमे घर्ममासे गङ्गातीरे वनविचारमनुविचारन् शिष्यमग्निवेशमब्रवीत्। दृश्यन्ते हि खलु सौम्य। नक्षत्रग्रहचन्द्रसूर्य्यानिलानलानां दिशाञ्च प्रकृतिभूता ऋतुविकारिका भावा अचिरादितो भूरपि च न यथावद्रसवीर्य्यविपाकप्रभावमोषधीनां प्रतिविधास्यति। यद्वियोगाच्चातङ्कप्रायता नियता तस्मात् प्रागुद्ध्वंसात् प्राक् च भूमेर्विरसीभावादुद्धर सौम्य। भैषज्यानि। यावन्नोपहतरसवीर्य्यविपाकप्रभावाणि। वयञ्चैषां रसवीर्य्यविपाकप्रभावानुपयोक्ष्यामहे। ये चास्माननुकाङ्क्षन्ति यांश्च वयमनुकाङ्क्षामो न हि सम्यगुद्धृतेषु भैषज्येषु सम्यगुद्धृतेषु सम्यग्विहितेषु सम्यग्विचारचारितेषु जनपदोद्ध्वंसकराणां विकाराणां किञ्चित्प्रतीकारगौरवं भवति। एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच। उद्धृतानि खलु भगवान् भैषज्यानि सम्यग्विहितानि च सम्यग्विचारितानि। अपि तु खलु जनपदोद्ध्वंसनमेकेन व्याधिना युगपदसमानप्रकृ-

त्याहारदेहबलसात्म्यसत्त्ववयसां मनुष्याणां कस्माद्भवतीति। तमुवाच भगवानात्रेयः। एवमसामान्यानामेभिरप्यग्निवेश। प्रकृत्यादिभिर्भावैर्मनुष्याणां येऽन्यो भावाः सामान्यास्तद्वैगुण्यात् समानकालाः समानलिङ्गाश्च व्याधयोऽभिनिवर्त्तमाना जनपदमुद्ध्वंसयन्ति। ते तु खल्विमे भावाः सामान्या जनपदेषु भवन्ति। तद्यथा, वायुरुदकं देशः काल इति। तत्र वातमेवंविधमनारोग्यकरं विद्यात्। तद्यथा, ऋतुविषममतिस्तिमितमतीचलमतिपरुषमतिशीतमत्युष्णमतिरूक्षमत्यभिष्यन्दिनमतिभैरवारावमतिप्रतिहतपरस्पर-गतिमतिकुण्डलिनमसात्म्यगन्धवाष्पसिकता-पांशुधूमोपहतमिति। उदकन्तु खलु अत्यर्थविकृतगन्धवर्णरसस्पर्शवत् क्लेदबहुलमपक्रान्तजलचरविहङ्गमुपक्षीणजलाशयमप्रीतिकरमपगतगुणं विद्यात्। देशं पुनः प्रकृतिविकृतिवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं सरीसृपव्यालमशकशलभमक्षिका-मूषकोलूकश्मशानिकशकुनिजम्बुकादिभिस्तृणोलुपोपवनवन्तं प्रतानादिबहुलमपूर्ववदवपतितं शुष्कनष्टशस्यं धूम्रपवनं प्रध्मातपतत्त्रिगणमुत्क्रुष्टश्वगणमुद्भ्रान्तव्यथितविविधमृगपक्षिसङ्घमुत्सृष्टनष्टधर्मसत्यलज्जाचारगुणजनपदं शश्वत्क्षुभितोदीर्णसलिलाशयं प्रततोल्कापातनिर्घातभूमिकम्पमतिभयारावरूपं रूक्षताम्रारुणसिताभ्रजालसंवृतार्कचन्द्रतारकमभीक्ष्णं ससम्भ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितमिवाक्रन्दितशब्दबहुलञ्चाहितं विद्यात्। कालन्तु खलु यथार्त्तुलिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीनलिङ्गञ्चाहितं व्यवस्येत्।

इमानेवंयुक्तांश्चतुरो भावान् जनपदोद्ध्वंसकरान् वदन्ति कुशला'। अतोऽन्यथाभूतांस्तु हितानाचक्षते।

वैगुण्यमुपपन्ने च देशे कालेऽनिलेऽम्भसि।
रसायनानां विधिवदुपयोगः प्रशस्यते॥
शस्यते देहवृत्तिश्च भेषजैः पूर्वमुद्धृतैः।
हितं पथ्याशनं नित्यं चित्ताशीते विसर्जनम्॥
सत्यं भूते दया दानं वलयो देवतार्चनम्।
सद्वृत्तस्यानुवृत्तिश्च प्रशमो गुप्तिरात्मनः॥
हितं जनपदानाञ्च शिवानामुपसेवनम्।
सेवन ब्रह्मचर्य्यस्य तथैव ब्रह्मचारिणाम्॥
सङ्कथा धर्म्मशास्त्राणां महर्षीणां जितात्मनाम्
धार्म्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसम्मतैः॥
इत्येतद्भेषजं प्रोक्तमायुषः परिपालनम्।
येषामनियतो मृत्युस्तस्मिन् काले सुदारुणे॥

इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच किन्नु खलु भगवन्। नियतकालप्रमाणमायुः सर्वं न वेति? भगवानुवाच, इहाग्निवेश। भूतानामायुर्युक्तिमपेक्षते।

दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम्।
दैवमात्मकृतं विद्यात् कर्म्म यत् पौर्वदैहिकम्॥
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम्।
बलाबलविशेषोऽस्ति तयोरपि च कर्म्मणोः॥
दृष्टं हि त्रिविधं कर्म्म हीनं मध्यममुत्तमम्।
तयोरुदारयोर्युक्तिर्दीर्घस्य स्वसुखस्य च॥
नियतस्यायुषो हेतुर्विपरीतस्य चेतरा।

मध्यमा मध्यमस्येष्टा कारणं शृणु चापरम्॥
दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते।
दैवेन चेतरत् कर्म्म विशिष्टेनोपहन्यते॥
दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः।
कर्म्म किञ्चित् क्वचित् काले विपाके नियतं महत्॥
किञ्चित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते॥

तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधु। निदर्शनमपि चात्रोदाहरिष्यामः। यदि हि नियतकालप्रमाणमायुः सर्वं स्यादायुष्कामानां न मन्त्रौषधिमणिमङ्गलबल्युपहार-होमनियम-प्रायश्चित्तोपवास-स्वस्त्ययन-प्रणिपातगमनाद्याः क्रिया इष्टयश्च प्रयोज्येरन्। नोद्भ्रान्तचण्डचपलगोगजोष्ट्र-खरतुरगमहिषादयः पवनादयश्च दुष्टाः परिहार्य्याः स्युः। न प्रपातगिरिविषमदुर्गाम्बुवेगाः। तथा न प्रमत्तोन्मत्तो-द्भ्रान्तचण्डचपलमोहलोभाकुलमतयो नारयो न प्रवृद्धोऽग्नि-र्न च विविधविषाश्रयाः सरीसृपोरगादयः। न साहसं न देशकालचर्य्या न नरेन्द्रप्रकोप इत्येवमादयो भावा नाभावकराः स्युरायुषः सर्वस्य नियतकालप्रमाणत्वात्। न चानभ्यस्ताकालमरणभयनिवारकाणामकाल-मरणभय-मागच्छेत् प्राणिनाम्। व्यर्थाश्चारम्भकथाप्रयोगबुद्धयः स्यु-र्महर्षीणां रसायनाधिकारे। नापीन्द्रो नियतायुषं शत्रुं वज्रेणाभिहन्यात्। नाश्विनावार्त्तं भेषजेनोपपादयेतां नर्षयो यथेष्टमायुस्तपसा प्राप्नुयुर्न च विदितवेदितव्या महर्षयः ससुरेशाः सम्यक् पश्येयुरुपदिशेयुराचरेयुर्वा तस्माद्धितोपचारमूलं जीवितम्। अतो विपर्य्ययान्मृत्यु-

रिति। इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। एवं सति अनियतकालप्रमाणायुषां भगवन्! कथं कालमृत्युरकालमृत्युर्भवतीति। तमुवाच भगवानात्रेयः श्रूयतामग्निवेश! यथा यानसमायुक्तोऽचः प्रकृत्यैवाचगुणैरुपेतः सर्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छेत् तथायुः शरीरोपगतं प्रकृत्या यथावदुपचर्य्यमाणं स्वप्रमाणक्षयादेव अवसानं गच्छति। स मृत्युः काले। यथा च स एवाचोऽतिभाराधिष्ठितत्वाद्विषमपथादपथाच्चचक्रभङ्गाद्वाह्यवाहक-दोषादनिर्मोचात् पर्य्यसनादनुपाङ्गाच्चान्तरा व्यसनमापद्यते। तथायुरप्ययथाबलमारम्भादयथाग्न्यभ्यवहरणाद्विषमाभ्यवहरणाद्विषमशरीरन्यासादतिमैथुनादसत्संश्रयादुदीर्णवेगविनिग्रहाद्विधार्य्यवेगाविधारणाद्भूतविषाग्न्युपतापादभिघातादाहारविवर्जनाच्चान्तरा व्यसनमापद्यते। स मृत्युरकाल इति।

---

## एकचत्वारिंशोऽध्यायः।

---

चिकित्साविधिः।

जातमात्रश्चिकित्स्यः स्यान्नोपेक्ष्योऽल्पतया गदः।
वह्निशस्त्रविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्॥

भिषजं केवलं कर्त्तुं यो जानाति न चामयम्।
वैद्यकर्म्म स चेत् कुर्य्याद्वधमर्हति राजतः॥
यस्तु केवलशास्त्रज्ञो भेषजेष्वविचक्षणः।
तं वैद्यं प्राप्य रोगी स्याद्यथा नौर्नाविकं विना॥
यस्तु केवलशास्त्रज्ञः क्रियास्वकुशलो भिषक्।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम्॥
यस्तु कर्म्मसु निष्णातो धार्ष्ट्याच्छास्त्रबहिष्कृतः।
स सत्सु पूजां नाप्नोति बधं चार्हति राजतः॥
छेद्यादिष्वनभिज्ञो यः स्नेहादिषु च कर्म्मसु।
स निहन्ति जनं लोभात् कुवैद्यो नृपदोषतः॥
यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने।
आहवे कर्म्म निर्वोढुं द्विचक्रः स्यन्दनो यथा॥
यस्तु रोगविशेषज्ञः सर्व्वभैषज्यकोविदः।
देशकालविभागज्ञस्तस्य सिद्धिर्न संशयः॥
आदावतो रुजा ज्ञाने प्रयतेत चिकित्सकः।
भेषजानां विधानेन ततः कुर्य्याच्चिकित्सितम्॥
विकाराणामकुशलो न जिह्रीयात् कदाचन।
न हि सर्व्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः॥
न चैकान्ते न निर्दिष्टे शास्त्रे निविशते बुधः।
स्वयमप्यत्र भिषजा तर्कणीयं चिकित्सितम्॥
उत्पद्यते च सावस्था देशकालबलं प्रति।
यस्यां कार्य्यमकार्य्यं स्यात्कर्म्म कार्य्यं विवर्जितम्॥
क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्म्मः क्वचिद्यशः।
कर्म्माभ्यासः क्वचिच्चापि चिकित्सा नास्ति निष्फला॥

नैव कुर्वीत लोभेन चिकित्सापुण्यविक्रयम्।
ईश्वराणां वसुमतां लिप्सेतार्थन्तु वृत्तये॥
नास्ति रोगो विना दोषैर्यस्मात्तस्माच्चिकित्सकः।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्॥
ये न कुर्वन्त्यसाध्यानां चिकित्सां ते भिषग्वराः।
अतो वैद्यैः श्रमः कार्य्यः साध्यासाध्यपरीक्षणे॥
शीते शीतप्रतीकारमुष्णे तृष्णानिवारणम्।
कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्॥
अप्राप्ते वा क्रियाकाले प्राप्ते वा न क्रिया कृता।
क्रिया हीनातिरिक्ता च साध्येष्वपि न सिध्यति॥
विकारेऽल्पे महत्कर्म्म क्रिया लघ्वी गरीयसी।
द्वयमेतदकौशल्यं कौशल्यं युक्तकर्म्मता॥
क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्।
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः॥

चिकित्साया अङ्गानि।

भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।
गुणवत्कारणं ज्ञेयं विकारस्योपशान्तये॥
अपरञ्च। रोगी दूतो भिषग्दीर्घमायुर्द्रव्यं सुसेवकः।
सदौषधं चिकित्सायामित्यङ्गानि जगुर्बुधाः॥

तत्रादौ रोगिणो लक्षणम्।

रोगो यस्यास्ति रोगी स स चिकित्स्यस्तु यादृशः।
यादृशश्चाचिकित्स्योऽपि वक्ष्यमाणो निशाम्यताम्॥
निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन चक्षुषा।
चिकित्स्यो भिषजा रोगी वैद्यभक्तो जितेन्द्रियः॥

आयुष्मान् सत्त्ववान् साध्यो द्रव्यवान् मित्रवानपि ।
चिकित्स्यो भिषजा रोगी वैद्यवाक्यकृदास्तिकः ॥
चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च ।
शोकाकुलो मुमूर्षुश्च विहीनः करणैश्च यः ॥
वैरी वैद्यविदग्धश्च श्रद्धाहीनश्च शङ्कितः ।
भिषजामविधेयाश्च नोपक्रम्या भिषग्विधा: ॥
स न सिध्यति वैद्यस्तु गृहे यस्य न पूज्यते ।
एतानुपाचरन् वैद्यो बहून् दोषानवाप्नुयात् ॥

दूतस्य लक्षणम् ।

यश्चिकित्सकमानेतुं याति दूतः स कथ्यते ।
स च यादृक् समुचितस्तादृगत्र निगद्यते ॥
दूताः सुजातयोऽव्यग्राः पटवो निर्म्मलाम्बराः ।
सुखिनः शीलवन्तश्च बलिनो धर्म्मसयुताः ॥
नम्रप्रकृतयो वश्याः प्रभुकल्याणकाङ्क्षिणः ।
दूताः सत्त्वगुणैर्युक्ताः प्रशस्ता दौत्यकर्म्मणि ॥

वैद्यस्य लक्षणम् ।

चिकित्सां कुरुते यस्तु स चिकित्सक उच्यते ।
स च यादृक्समीचीनस्तादृशोऽपि निगद्यते ॥
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्म्मा स्वयंकृती ।
लघुहस्तः शुचिः शूरः सद्योऽपस्करभेषजः ॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः ।
सत्यधर्म्मपरो यश्च वैद्य ईदृक् प्रशस्यते ॥
कुचेलः कर्कशः स्तब्धो ग्रामीणः स्वयमागतः ।
पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा यदि ॥

दीर्घायुषो लक्षणानि अरिष्टलक्षणवर्णनाध्याये वर्णि-
तानि तानि सम्यग्विचार्य्य भिषजा रोगी चिकित्स्यः ।

द्रव्यम् ।

सर्वं द्रव्यमपेक्षन्ते रोगिप्रभृतयो यतः ।
विना वित्तं न भैषज्यं चिकित्साङ्गं ततो धनम् ॥

परिचारकस्य लक्षणम् ।

स्निग्धोऽजुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे ।
वैद्यवाक्यकृदश्रान्तो युज्यते परिचारकः ॥

भेषजस्य लक्षणम् ।

वयो व्याधिं हरेद्येन तद्द्रव्यं प्रोक्तमौषधम् ।
तद्याद्दशमवश्यं स्याद्रोगघ्नं तादृशं ब्रुवे ॥
प्रशस्तदेशे सञ्जातं प्रशस्तेऽहनि चोद्धृतम् ।
अल्पमात्रं बहुगुणं गन्धवर्णरसान्वितम् ॥
दोषघ्नमग्लानिकरमविकं न विकारि यत् ।
समीक्ष्य काले दत्तञ्च भेषजं स्याद्गुणावहम् ॥
यथा विषं यथा शस्त्रं यथाग्निरशनिर्यथा ।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥
योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत् ।
भेषजं वापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम् ॥
तस्मान्नाभिषजायुक्तं युक्तिवाह्येन भेषजम् ।
धीमता किञ्चिदादेयं जीवितारोग्यकाङ्क्षिणा ॥
दुःखिताय शयानाय श्रद्दधानाय रोगिणे ।
यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ॥
मृत्युभूतस्य पापस्य दुर्म्मतेस्त्यक्तधर्म्मणः ।

नरो नरकपाती स्यात्तस्य सम्भाषणादपि ॥
वरमाशीविषविषं क्वथितं ताम्रमेव वा।
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुडाः ॥
न तु श्रुतवतां वेश विभ्रता शरणागतात्।
गृहीतमन्नपानं वा वित्तं वा रोगपीड़ितात् ॥
वरं दस्यौ वरं व्याले वरं यादोविभीषणे।
सागरे जीवनोत्सर्गः सुघोरे वापि धन्वनि ॥
नाधीतशास्त्रे नाभ्यस्तकर्मण्यखिलवैरिणि।
न कार्य्यं दुर्म्मतौ पापे भिषज्यात्मसमर्पणम् ॥

भिषजा सर्वथा सर्वप्राणभृतां शर्म्माशासितव्यम्। अहरहरुत्तिष्ठा चोपविशता च सर्वात्मना चातुराणामारोग्ये प्रयतितव्यम्। जीवितहेतोरपि चातुरा न द्रोग्धव्याः। मनसापि च परस्त्रियो नाभिधर्षयितव्याः। तथा सर्वमेव परस्वम्। निभृतवेशपरिच्छदेन भवितव्यम्। श्लक्ष्णशुक्लधर्म्यशर्म्यधन्यसत्यहितमितवचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरणसम्पत्सु नित्यं यत्नवता न कदाचिद्राजद्विष्टानां महाजनद्विष्टानां वाप्यौषधमनुविधातव्यम्। एवं सर्वेषामत्यर्थविकृतदुष्टदुःखशीलाचारोपचाराणां मुमूर्षतां तथैवासन्निहितेश्वराणां स्त्रीणामनध्यक्षाणां वा विशेषतस्तु युवतीनां न प्रतिकर्त्तव्यम्। आतुरकुलं चानुप्रविशता विदितेनानुमतप्रवेशिना सार्द्धं पुरुषेण सुसंवीतेनावाक्शिरसा स्मृतिमता स्तिमितेनावेक्ष्यावेक्ष्यबुद्ध्या सम्यगनुप्रवेष्टव्यम् अनुप्रविश्य च वाङ्मनो बुद्धीन्द्रियाणि न क्वचित् प्रणिधातव्यानि अन्यत्रातुरोप-

कारार्थादातुरगतेष्वन्येषु वा भावेषु न चातुरकुलप्रवृत्तयो बहिर्निश्चारयितव्याः ह्रसितं चायुषः प्रमाणं न वर्णयितव्यं जानतापि तत्र यत्रोच्यमानमातुरस्यान्यस्य वाप्युपघाताय सम्पद्यते तेनैतदप्यवश्यं चिन्तनीयं यज्जीवनाशाच्छेदात् प्राणिनो धैर्य्यगाम्भीर्य्यादिप्रभ्रष्टाः परं शोचनीयतां यान्ति अपिच न कश्चिज्जगत्यप्रमत्तो विद्यते कदाचिद्व्याधेः साध्यत्वेऽप्यसाध्यता भ्रान्तिस्तद्व्याख्यानात्तद्वचनप्रतीतो ह्यातुर आयुष्मानपि विपद्यते अतो नानिवार्य्यहेतुं विनारिष्टलक्षणं प्रकटनीयम्। ज्ञानवतापि च नात्यर्थमात्मनो ज्ञाने कत्थितव्यम्।

आप्तादपि कत्थमानादत्यर्थमुद्विजन्त्येके।
स्त्रीभिः सहास्यां संवादं परिहासञ्च वर्जयेत्॥
दत्तञ्च ताभ्यो नादेयमन्नादन्यद्भिषग्वरैः॥

मातरं पितरं पुत्रान् बान्धवानपि चातुरः।
अथैतानभिशङ्केत वैद्ये विश्वासमेति च॥
विसृजत्यात्मनात्मान न चैनं परिशङ्कते।
तस्मात् पुत्रवदेवैनं पालयेदातुरं भिषक्॥
धर्म्मार्थौ कीर्त्तिमत्यर्थं सतां ग्रहणमुत्तमम्।
प्राप्नुयात् स्वर्गवासञ्च हितमारभ्य कर्म्मणा॥

———

# त्रिंशोऽध्यायः।

---

अथ वैद्यविचारः।

द्विविधास्तु खलु भिषजो भवन्त्यग्निवेश। प्राणानामेकेऽभिसरा हन्तारो रोगाणामेकेऽभिसरा रोगाणां हन्तारः प्राणिनामिति। एववादिन भगवन्तमात्रेयमग्निवेश उवाच भगवस्ते कथमस्माभिर्वेदितव्या भवेयुरिति। भगवानुवाच य इमे कुलीना पर्य्यवदातश्रुता परिदृष्टकर्म्माणो दक्षा शुचयो जितहस्ताजितात्मानः सर्वोपकरणवन्त. सर्वेन्द्रियोपपन्ना. प्रकृतिज्ञाः प्रतिपत्तिज्ञास्ते प्राणिनामभिसरा हन्तारो रोगाणाम्। तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशया सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानाञ्च रोगाणां समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषविज्ञाने व्यपगतसन्देहाः त्रिविधस्यायुर्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः सर्वेषां मूलफलानां चतुर्णां महास्नेहानां पञ्चानां लवणानामष्टानाञ्च मूत्राणामष्टानाञ्च क्षीराणां पञ्चकर्म्माश्रयस्यौषधगणस्य सर्वेषां चूर्णप्रदेहानां विरेचनानां कषायाणामिति स्वस्थवृत्तौ च भोजनपाननियमस्थानचंक्रमणशय्याशनमात्राद्रव्याञ्जनधूमनावनाभ्यञ्जन-परिमार्जनवेगविधारणाविधारणव्यायामसात्म्येन्द्रियपरीक्षोपक्रमसद्वृत्तकुशलाः बहु-

विधविधानयुक्तानाञ्च स्नेहस्वेदवम्यविरेचौषधोपचाराणां कुशलाः शिरोरोगादेश्च दोषांशविकल्पजस्य व्याधिसंग्रहस्य संचयपिड़काविद्रधेः सर्व्वेषाञ्च शोफानां बहुविधशोफानुबन्धानां पश्चाच्च लङ्घनादीनामुपक्रमाणां सन्तर्पणापतर्पणजानां रोगाणां सरूपप्रशमनानां शोणितजानाञ्च व्याधीनां मदमूर्च्छासन्न्यासानाञ्च सकारणरूपौषधानां कुशलाः कुशलाश्च धात्वाश्रयाणाञ्च रोगाणामौषधसंग्रहाणाञ्च कृत्स्नस्य च तन्त्रोद्देशलक्षणस्य तन्त्रस्य च ग्रहणधारणविज्ञानप्रयोगकर्म्मकार्य्यकालकर्तृकरणकुशलाः कुशलाश्च स्मृतिमतिशास्त्रयुक्तिज्ञानस्य सर्व्वप्राणिषु च परं कृपालव इत्येवंबहुविधगुणयुक्ता भवन्त्यग्निवेश। अतो विपरीता रोगाणामभिसरा हन्तारः प्राणिनामिति। ते भिषक्छद्मप्रतिच्छन्ना राज्ञां प्रसादाच्चरन्ति राष्ट्राणि तेषामिदं विशेषविज्ञानमत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति कर्म्मलोभात् श्रुत्वा च कस्यचिदातुर्य्यमभितः परिपतन्ति गृध्रा इव मांसलोभात् सश्रवणे चास्यात्मनो वैद्यगुणानुच्चैर्व्वदन्ति यश्चास्य वैद्यः प्रतिकर्म्म करोति तस्य च दोषान् मुहुर्म्मुहुरुदाहरन्त्यातुरमित्राणि च प्रहर्षणोपजापोपसेवाभिरिच्छन्त्यात्मीकर्तुं मल्पेच्छताञ्चात्मनः ख्यापयन्ति। कर्म्म चासाद्य मुहुर्मुहुरवलोकयन्ति दाच्येणाज्ञानमात्मनश्छादयितुकामा व्याधितञ्चापवर्त्तयितुमशक्नुवन्तो व्याधितमेवानुपकरणमपचारिकमनात्मवन्तमुद्दिशन्ति अन्तगतञ्चाभिसमीच्यान्यमाश्रयन्ति देशमपदेशमात्मनः कृत्वा प्राकृतजनसन्निपाते चात्मनः कौशलमकुशलवद्वर्ण-

यन्ति अधीरवच्च धैर्य्यमपवदन्ते विद्वज्जनसन्निपातञ्चाभिसमीक्ष्य प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति। न चैषामाचार्य्यः शिष्यो वा सब्रह्मचारी वैवादिको वा कश्चित् प्रज्ञायते इति।

भिषक्छद्मप्रतिच्छन्ना व्याधितांस्तर्कयन्ति ये।
वीतंसमिव संश्रित्य वने शाकुन्तिको द्विजान्॥
श्रुतदृष्टक्रियाकालमात्राज्ञानबहिष्कृताः।
वर्जनीया हि ते मृत्योश्चरन्त्यनुचरा भुवि॥
वृत्तिहेतोर्भिषङ्मानपूर्णान् मूर्खविशारदान्।
वर्जयेदातुरो विद्वान् सर्पांस्ते पीतमारुताः॥
ये तु शास्त्रविदो दक्षाः शुचयः कर्म्मकोविदाः।
जितहस्ता जितात्मानस्तेभ्यो नित्यकृतं नमः॥

---

## त्रिचत्वारिंशोऽध्यायः।

---

### अथायुर्वेदाध्ययनविधिः।

शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थितायाध्ययन काले शिष्याय यथाशक्ति गुरुरुपदिशेत् पदं पादं श्लोकं वा ते च पदपादश्लोका भूयःक्रमेणानुसन्धेया एवमेकैकशो घटयेदात्मना चानुपठेत्। अद्रुतमविलम्बितमविशङ्कितमननुनासिकं व्यक्ताक्षरमपीड़ितवर्णमक्षिभ्रुवौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेन्नचान्तरेण कश्चिद्व्रजेत् तयोरधीयानयोः। एतदवश्यमध्येयमधीत्य

च कर्म्माप्यवश्यमुपासितव्यमुभयज्ञो हि भिषग्राजार्हो भवति ।

शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्जितः ।
पठेदेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात् ॥
वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्म्मनैपुणे ।
तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः ॥
इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम् ।
विधिनाधीत्य युञ्जाना भवन्ति प्राणदा भुवि ॥
अधिगतमप्यध्ययनमप्रभाषितमर्थतः ।
खरस्य चन्दनभार इव केवलं परिश्रमकरं भवति ॥
यथा खरश्चन्दनभारवाही
भारस्य वेत्ता न तु चन्दनस्य ।
एवं हि शास्त्राणि बहून्यधीत्य
चार्थेषु मूढाः खरवद्वहन्ति ॥

तस्मात् समग्रमायुर्वेदशास्त्रमनुपदपादश्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यञ्च । कस्मात् सूक्ष्मा हि द्रव्यरसगुणवीर्य्यविपाकदोषधातुमलाशयमर्म्मशिरास्नायुसन्ध्यस्थिगर्भसम्भवद्रव्यसमूहविभागास्तथा प्रनष्टशल्योद्धरणव्रणविनिश्चयभग्नविकल्पाः साध्यायाप्यप्रत्याख्येयता च विकाराणामेवमादयश्चान्ये विशेषाः सहस्रशो ये विचिन्त्यमाना विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः । तस्मादवश्यमनुपदपादश्लोकार्द्धश्लोकमनुवर्णयितव्यमनुश्रोतव्यञ्च । अन्यशास्त्रविषयोपपन्नानाञ्चार्थानामिहोपनिपतितानामर्थवशात् तेषां तद्विद्येभ्य एव व्याख्यान-

मनुश्रोतव्य कस्मान्न ह्येकस्मिन् शास्त्रे शक्यः सर्व्वशास्त्राणा-मवरोधः कर्त्तुम्।

अध्ययनविधिवत् सम्भाषाविधिमत ऊर्द्ध्वं व्याख्या-स्यामः। भिषक् भिषजा सह सम्भाष्यते। तद्विद्यसम्भाषा हि ज्ञानाभियोगसंघर्षकरी भवति वैशारद्यमपि चाभिनिर्व्वर्त्तयति वचनशक्तिमपि चाधत्ते यशश्चाभि-दीपयति पूर्व्वश्रुते च सन्देहवतः पुनः श्रवणात् श्रुतसंशय-मपकर्षति श्रुतेश्चासन्देहवतो भूयोऽध्यवसायमभिनिर्व्वर्त्त-यति अश्रुतमपि कञ्चिदर्थं श्रोत्रविषयमापादयति।

शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चासकृत्।
यः कर्म्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः॥

---

# चतुश्चत्वारिंशोऽध्यायः।

---

## योग्यासूत्रीयोऽध्यायः।

अधिगतसर्व्वशास्त्रार्थमपि शिष्यं योग्याङ्कारयेत्। छेद्या-दिषु स्नेहादिषु च कर्म्मपथमुपदिशेत्। सुबहुश्रुतोऽप्य-कृतयोग्यः कर्म्मस्वयोग्यो भवति। तत्र पुष्पफलालाबू-कालिन्दकत्रपुषैर्व्वारुककर्कारुकप्रभृतिषु छेद्यविशेषान् दर्श-येदुत्कर्त्तनपरिकर्त्तनानि चोपदिशेत्। दृतिवस्तिप्रसे-वकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्याम्। सरोम्णि चर्म्मण्या-तते लेख्यस्य। मृतपशुशिरासूत्पलनालेषु च वेध्यस्य।

घुणोपहतकाष्ठवेणुनलनालीशुष्कालावुमुखेष्वेष्यस्य। पनस-विम्बीविल्वफलमज्जमृतपशुदन्तेष्वाहार्य्यस्य। मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य। सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्मान्तयोश्च सीव्यस्य। पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धनयोग्याम्। मृदुमांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धनयोग्याम्। उदकपूर्णघटपार्श्वस्रोतस्यलावूमुखादिषु च नेत्रप्रणिधानवस्तिव्रणवस्तिपीड़नयोग्यामिति।

एवमादिषु मेधावी योग्यार्हेषु यथाविधि।
द्रव्येषु योग्यां कुर्वाणो न प्रमुह्यति कर्मसु॥
तस्मात् कौशलमन्विच्छन् शस्त्रक्षाराग्निकर्मसु।
यस्य यत्रेह साधर्म्यं तत्र योग्यां समाचरेत्॥
व्याधितानामभावाद्धि न्त्वणामेष विधिर्मतः।
तत्रापि गुरुणा कर्म कृतं पश्येत् समाहितः॥
अभ्यस्येच्च स्वयं कर्म सद्गुरोरुपदेशतः।
नाभ्यस्तकर्मा कार्य्येषु मुह्येद्भीरुरिवाहवे॥

अथातो द्विज्ञानार्जनीयमध्यायं व्याख्यास्यामः।

द्विविधं खलु ज्ञानं भवति आनुमानिकमैन्द्रियञ्च। शास्त्राध्ययनाद्गुरूपदेशात् सदृशदर्शनादेश्चोपायादनुमित्या वस्तुस्वारूप्योपलब्धिर्नामानुमानिकम्। ऐन्द्रियं नाम यद्यत् साक्षादिन्द्रियदर्शकव्यापारादाविर्भवति। द्वे अप्येते भिषग्भिरर्जनीये ज्ञाने धर्मार्थयशःप्रेप्सुभिः। न खलु सर्वत्र तत्त्वावबोधार्थमिन्द्रियप्रयोगः सर्वेषां सुकरो भवति।

न च केवलेनानुमानिकज्ञानेन कश्चित् कर्मसु पाटवं लभेत। विशेषतस्तु देहविज्ञाने शस्त्रादिकर्मणि च ऐन्द्रिय-ज्ञानस्यैकान्तत एव प्रयोजनं तदृते न कथमपि तत्त्वाव-बोधो जायते। भिषगनर्जितेन्द्रियज्ञानः शस्त्रावचारणो-द्यतः शस्त्रपाणिराततायी साक्षात् कृतान्तानुचर इव वा ज्ञेयः। देहस्यास्थिपेशीकोष्ठशिराधमनीस्नायुत्वगसृरक्तमे-दोमज्जादीनां प्रकृत्याकृतिसंस्थित्यादीन् विशेषान् विज्ञातु-कामेन वैद्येनावश्यं शवश्छेद्यः। छित्त्वा शारीरस्थाने यद्यदुपदेच्यते तत्तदवश्यं प्रत्यक्षं करणीयम्। अकृतव्यव-च्छेदो हि भिषक् शस्त्रादिकर्मणि सर्वथैवासमर्थः स्नेहा-दिष्वपि क्रियासु न सम्यक् क्षमो भवति। औपधेनवौर-भ्रसौश्रुतपौष्कलावताद्येषु शल्यतन्त्रेषु व्यवच्छेदं विना न च तत्तच्छास्त्राध्ययनाधिकारित्वमपि जायते कस्यापीति। अतः शवं व्यवच्छिद्य वर्ष्मविषयकमैन्द्रियज्ञानमवश्यमर्जनीयं भिषजा इति।

ज्ञानं यद्विविधं प्रोक्तमानुमानिकमैन्द्रियम्।
प्रयतेत तयोः प्राप्तौ वीततन्द्रो भिषक् सदा॥
अनुमानमसम्यक् स्यादैन्द्रियं सम्यगेव हि।
तत् तत्त्वे निखिले शक्त्या योगमैन्द्रियमाचरेत्॥
ऐन्द्रियं संशयच्छेदि तेन तत्त्वं प्रकाशते।
एकस्यैन्द्रियमन्येन चिन्त्यं स्यादानुमानिकम्॥
वर्णनं चेन्द्रियाणां यद्विविधाख्यादिसंयुतम्।
तदेव कीर्त्तितं शास्त्रमाप्तैः संग्रथितं शुभम्॥
अध्येतव्यमवश्यं तद्वस्तुतत्त्वबुभुत्सुभिः।

कथमप्यन्यथा न स्याद्वालिशत्वविनाशनम् ॥
आयुष्मद्भिश्च विद्वद्भिरार्तैर्लोकहिते रतैः ।
स्वार्थलेशमनिच्छद्भिर्ब्रह्मचिन्तापरायणैः ॥
शास्त्रेषु ग्रथितेष्वेषु विचिकित्सां प्रकुर्वताम् ।
नरके नियतो वासो नास्ति तेषां गतिः शुभा ॥
सर्वमिन्द्रियबोधेन तत्त्वं केनोपलभ्यते ।
प्रत्यक्षं जगति स्वल्पमनुमेयं मतं बहु ॥

---

## पञ्चचत्वारिंशोऽध्यायः ।

---

अथ नाड़ीपरीक्षा ।

कल्याणमपिवारिष्टं स्फुटं नाड़ी प्रकाशयेत् ।
रुजां कालिकवैशिष्ट्याद्भवेत् सापि विलक्षणा ॥
यल्लक्षणा तु नैरुज्ये नोदितायां तथा रुजि ।
वयःकालरुजां भेदैर्भिन्नभावं बिभर्ति सा ॥
तदवस्थामतः प्राज्ञः सर्वथा सार्वकालिकीम् ।
ज्ञातुं यतेत मतिमान् लक्षणैः सुसमाहितः ॥
परिव्याप्याखिल काय धमन्यो हृदयाश्रयाः ।
वहन्तःशोणितस्रोतः शरीर पोषयन्ति ताः ॥
हृदयाकुञ्चनाद्रक्तं कियदुत्प्लुत्य धामनीम् ।
तत्सञ्चितं तदुत्थाञ्च प्रविश्य चापरास्वपि ॥

व्रजित्वा निखिलं देहं ततो विशति फुप्फुसम्।
फुप्फुसाद्धृदयं याति क्रियैव स्यात्पुनः पुनः॥
शोणितोत्प्लववेगेन धमनी स्पन्दते मुहुः।
उत्प्लवप्रकृतेर्भेदाद्भेदः स्यात् स्पन्दनस्य च॥
स्थौल्यादिकं धमन्याश्च तत्प्रकृत्यैव जायते।
तत्प्रकारान् समासेन ब्रुवे वत्स निशामय॥
स्नायुर्नाड़ी रसा हिंस्रा धमनी धामनी धरा।
तन्तुकी जीवितज्ञा च शिरापर्य्यायवाचकाः॥

नाड़ीस्पन्दनसंख्या।

षष्ट्या स्पन्दास्तु मात्राभिः षट्पञ्चाशद्भवन्ति हि।
शिशोः सद्यः प्रसूतस्य पञ्चाशत्तदनन्तरम्॥
चत्वारिंशत्ततः स्पन्दाः षट्त्रिंशद्यौवने ततः।
प्रौढ़स्यैकोनत्रिंशत्स्युर्वार्द्धकेऽष्टौ च विंशतिः॥
पुंसोऽतिस्थविरस्य स्युरेकत्रिंशदतः परम्।
योषितां पुरुषाणाञ्च स्पन्दास्तुल्याः प्रकीर्त्तिताः॥
प्रौढ़ानां रमणीनान्तु द्व्यधिकाः सम्मता बुधैः।
दशगुर्वक्षरोच्चारकालः प्राणः षडात्मकैः॥
तैः पलं स्यात्तु तत्षष्ट्या दण्ड इत्यभिधीयते॥

जलस्थलनभश्चारिजीवानां गतिभिः सह।
गतयो ह्युपमीयन्ते नाड़ीनां भिन्नलक्षणाः॥
कस्य कीदृग्गतिस्तत्र विज्ञातव्या विचक्षणैः।
अध्येतव्यञ्च तच्छास्त्रं सद्गुरोर्ज्ञानशालिनः॥
परीक्षणीयाः सततं नाडीनां गतयः पृथक्।
न चाध्ययनमात्रेण नाड़ीज्ञानं भवेदिह॥

सव्येन सा विधृतकूर्परभागभाजा
पीड्याथ दक्षिणकराङ्गुलिकात्रयेण।
अङ्गुष्ठमूलमधिपश्चिमवामभागे
नाड़ीप्रभञ्जनगतिः सततं परीक्ष्या॥

अङ्गुष्ठस्य तु मूले या धमनी जीवसाक्षिणी।
तस्या गतिवशाद्विद्यात् सुखं दुःखञ्च देहिनाम्॥
प्रातःकृत्यसमाचार कृताचारपरिग्रहम्।
सुखासीनः सुखासीनं परीक्षार्थमुपाचरेत्॥
सद्यः स्नातस्य सुप्तस्य क्षुत्तृष्णातपशालिनः।
व्यायामश्रान्तदेहस्य सम्यङ्नाड़ी न बुध्यते॥
तैलाभ्यङ्गे रतेरन्ते भोजनान्ते तथैव च।
उद्वेगादिषु नाड़ी च न सम्यगवबुध्यते।
भूलताभुजगप्राया स्वस्था स्वास्थ्यमयी शिरा।
प्रातः स्निग्धमयी नाड़ी मध्याह्नेऽप्युष्णतान्विता॥
सायाह्ने धावमाना च रात्रौ वेगविवर्जिता।

वाताद्वक्रगता नाड़ी चपला पित्तवाहिनी।
स्थिरा श्लेष्मवती ज्ञेया मिश्रिते मिश्रिता भवेत्॥
सर्पजलौकादिगतिं वदन्ति विबुधाः प्रभञ्जने नाडीम्।
पित्ते च काकलावकभेकादिगतिं विदुः सुधियः॥
राजहंसमयूराणां पारावतकपोतयोः।
कुक्कुटादेर्गतिं धत्ते धमनी कफसङ्गता॥

मुहुः सर्पगतिं नाडीं मुहुर्भेकगतिं तथा।
वातपित्तद्वयोद्भूतां भाषन्ते तद्विदो जनाः॥
भुजगादिगतिस्थानां राजहंसगतिं तथा।

वातश्लेष्मसमुद्भूता प्रवदन्ति महाधियः ॥
मण्डूकादिगतिं नाडीं मयूरादिगतिं धराम् ।
पित्तश्लेष्मसमुद्भूतां प्रवदन्ति मनीषिणः ॥
कदाचिन्मन्दगा नड़ी कदाचिच्छीघ्रगा भवेत् ।
त्रिदोषप्रभवे रोगे विज्ञेया च भिषग्वरैः ॥
यदा यं धातुमाप्नोति तदा नड़ी तथागतिः ।
तदा हि सुखसाध्यत्वं नाडीज्ञानेन बुध्यते ॥
भुक्तस्य वान्तस्य च मेदुरस्य
निद्रारतस्याति तथा रिरंसोः ।
कफाकुलस्यातिसुखे रतस्य
स्थौल्यं दधाना शिथिलं प्रयाति ॥
मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलं वा
स्थित्वा स्थित्वा वहति धमनी याति नाशञ्च सूक्ष्मा ।
नित्यस्थानात् स्खलति पुनरप्यङ्गुलिं संस्पृशेद्या
भावैरेवंविधबहुविधैः सन्निपातादसाध्या ॥
महादाहेऽपि शीतत्वं शीतत्वे तापिता शिरा ।
नानाविधगतिर्यस्य तस्य मृत्युर्न संशयः ॥
भारप्रवाहमूर्च्छाभयशोकप्रमुखकारणान्नाड़ी ।
संमूर्च्छितापि गाढ़ं पुनरपि सा जीवितं धत्ते ॥
पतितः सन्धितो भेदी नष्टशुक्रश्च यः पुमान् ।
शाम्यति विस्मयस्तस्य न किञ्चिन्मृत्युकारणम् ॥
स्वस्थानहीने शोके च हिमाक्रान्ते च निर्गदाः ।
भवन्ति निश्चला नाड्यो न किञ्चित्तत्र दूषणम् ॥
भूलताभुजगाकारा नाड़ी देहस्य संक्रमात् ।

विशीर्णे क्षीणतां याति मासान्ते मरणं ध्रुवम् ॥
क्षणाद्गच्छति वेगेन शान्ततां लभते क्षणात्।
सप्ताहान्मरणं तस्य यद्यङ्गे शोथवर्जितः ॥
हिमवद्विशदा नाड़ी ज्वरदाहेऽपि तापिनाम्।
त्रिदोषस्पर्शं भजतां तदा मृत्युर्दिनत्रयात्॥
निरीक्ष्य दक्षिणे पादे नाड़ीमेकां विशेषतः।
मुखे नाडी वहेन्नित्यं ततो दिनचतुष्टयम् ॥
जहाति यस्य स्वस्थानं यवार्द्धमपि नाडिका।
न स जीवितमाप्नोति त्रिदिनाभ्यन्तरे मृतिम् ॥
गतिं भ्रमरकस्येव वहेदेकदिनेन तु ॥
स्कन्धे न स्पन्दते नित्यं पुनर्गलति नाङ्गुली।
मध्ये द्वादशयामानां मृत्युर्भवति निश्चितम् ॥
स्थित्वा नाड़ी मुखे यस्य विद्युज्ज्योतिरिवेक्ष्यते।
दिनैकं जीवितं तस्य द्वितीये मरणं भवेत् ॥
स्वस्थानविच्युता नाड़ी यदा वहति वा न वा।
ज्वाला च हृदये तीव्रा तदा ज्वालावधिस्थितिः ॥
अङ्गुष्ठमूलतो वाह्ये द्वाङ्गुले यदि नाडिका।
प्रहरार्द्धाद्बहिर्मृत्युं जानीयाच्च विचक्षण. ॥
सार्द्धद्वयाङ्गुलाद्वाह्ये यदि तिष्ठति नाड़िका।
प्रहरैकाद्बहिर्मृत्युं जानीयाच्च विचक्षण ॥
पादाङ्गुलगता नाड़ी चञ्चला यदि गच्छति।
त्रिभिस्तु दिवसैस्तस्य मृत्युरेव न संशयः ॥
पादाङ्गुलगता नाडी कोष्णा वेगवती भवेत्।
चतुर्भिर्दिवसैस्तस्य मृत्युरेव न संशयः ॥

पादाङ्गुलगता नाडी मन्दमन्दा यदा भवेत्।
पञ्चभिर्दिवसैस्तस्य मृत्युर्भवति नान्यथा॥
स्वस्थानच्यवनं यावद्धमन्या नोपजायते।
तत्स्थचिह्नस्य सत्त्वेऽपि नासाध्यत्वमिति स्थितिः॥
पुष्टिस्तैलगुड़ाहारे मांसे च लगुड़ाकृतिः।
क्षीरे च स्तिमिता वेगा मधुरे भेकवद्गतिः॥
रम्भागुड़वटाहारे रूक्षशुष्कादिभोजने।
वातपित्तार्त्तिरूपेण नाड़ी वहति निष्क्रमम्॥
मधुरे वर्हिगमना तिक्ते स्यात् स्थूलता गतेः।
अम्ले कोष्णा प्लवगतिः कटुकैर्भृङ्गसन्निभा॥
कषाये कठिना म्लाना लवणे सरला द्रुता।
एवं द्वित्रिचतुर्योगे नानाधर्मवती धरा॥
अम्लैश्च मधुराम्लैश्च नाड़ी शीता विशेषतः।
चिपिटैर्भृष्टद्रव्यैश्च स्थिरा मन्दतरा भवेत्॥
कुष्माण्डमूलकैश्चैव मन्दमन्दा च नाड़िका।
शाकैश्च कदलैश्चैव रक्तपूर्णेव नाड़िका॥
मासात् स्थिरवहा नाड़ी दुग्धे शीता बलीयसी।
गुड़े क्षीरैश्च पिष्टैश्च स्थिरा मन्दवहा भवेत्॥
रमणान्ते निशि प्रातस्तप्ता दीपशिखोपमा।
कामात् क्रोधाद्वेगवती क्षीणा चिन्ताभयप्लुता॥
मध्ये करे वहेन्नाड़ी यदि सन्तापिता ध्रुवम्।
तदा नूनं मनुष्याणां रुधिरापूरिता मलाः॥
व्यायामे भ्रमणे चैव चिन्तायां धनशोकतः।
नानाप्रभावगमना नाड़ी भवति निश्चितम्॥

असृक्पूर्णा भवेत् कोष्णा गुर्वी सामा गरीयसी।
सुखितस्य स्थिता ज्ञेया चपला क्षुधितस्य सा॥
अङ्गग्रहेण नाड़ीनां जायन्ते मन्थराः प्लवाः।
प्लवप्लवलतां याति ज्वरदाहाभिभूतये॥
सान्निपातिकरूपेण भवन्ति सर्ववेदना॥
ज्वरप्रकोपे धमनी सोष्णा वेगवती भवेत्॥
सौम्या सूक्ष्मा स्थिरा मन्दा नाड़ी सहजवातजा।
स्थूला च कठिना शीघ्रा स्पन्दते तीव्रमारुते॥
द्रुता च सरला दीर्घा शीघ्रा पित्तज्वरे भवेत्।
शीघ्रमाहनन नाड्याः काठिन्याच्चलते तथा॥
नाडी तन्तुसमा मन्दा शीतला श्लेष्मकोपतः॥
चञ्चला तरला स्थूला कठिना वातपित्तजा।
ईषच्च दृश्यते तूष्णा मन्दा स्यात् श्लेष्मवातजा॥
निरन्तर खरं रूक्षं मन्दश्लेष्मातिवातला।
रूक्षवातभवे तस्य नाड़ी स्यात् पिण्डसन्निभा॥
सूक्ष्मा शीता स्थिरा नाड़ी पित्तश्लेष्मसमुद्भवा॥
ऐकाहिकेन क्वचन प्रदूरे
क्षणान्तगामा विषमज्वरेण।
द्वितीयके वाथ तृतीयतूर्य्यें
गच्छन्ति तप्ता भ्रमिवत् क्रमेण॥
ज्वरे च रमणे नाडी क्षीणाङ्गा मन्दगामिनी।
ज्वरे कामार्त्तिरूपेण भवन्ति विकलाः शिराः॥
व्यायामे भ्रमणे चैव चिन्तायां धनशोकतः।
नानाप्रभावगमना शिरा गच्छति विज्वरे॥

अजीर्णे तु भवेन्नाडी कठिना परितो जड़ा ।
प्रसन्ना तु द्रुता शुद्धा त्वरिता च प्रवर्त्तते ॥
पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं वहेत्तु या ।
लघ्वी भवति दीप्ताग्नेस्तथा वेगवती मता ॥
मन्दाग्नेः क्षीणधातोश्च नाड़ी मन्दतरा भवेत् ।
मग्नेऽग्नौ क्षीणत याति नाड़ी हंसाकृतिस्तथा ॥
पादे च हंसगमना करे मण्डूकसंप्लवा ।
तस्याग्नेर्मन्दता देहे त्वथवा ग्रहणीगदः ॥

भेदेन भ्रान्ता ग्रहणीगदेन
निर्वीर्य्यरूपा त्वतिसारभेदे ।
विलम्बिकायां प्लवगा कदाचि-
दामातिसारे पृथुला जड़ा च ॥

निरोधे मूत्रशकृतोर्विड्ग्रहे त्वितराश्रिते ।
विसूचिकाभिभूते च भवन्ति भेकवत् क्रमा ॥
आनाहे मूत्रकृच्छ्रे च भवेन्नाड़ीगरिष्ठता ॥

वातेन शूलेन मरुत्प्लवेन
सदातिवक्रा हि शिरा वहन्ती ।
ज्वालामयी पित्तविचेष्टितेन
सामेन शूलेन च पुष्टिरूपा ॥

प्रमेहे ग्रन्थिरूपा च सुतप्ता,चामदूषिता ॥

उत्पित्सुरूपा विषारिष्टकाले
विष्टम्भगुल्मेन च वक्ररूपा ।
अत्यर्थवातेन अधःस्फुरन्ती
उत्तानभेदिन्यसमाप्तिकाले ॥

गुल्मेन कम्पोऽथ पराक्रमेण
पारावतस्येव गतिं करोति ॥
व्रणेऽतिकठिने देहे प्रयाति पैत्तिकं क्रमम्।
भगन्दरानुरूपेण नाड़ी व्रणनिवेदने ॥
प्रयाति वातिकं रूपं नाडी पावकरूपिणी।
वान्तस्य शल्याभिहतस्य जन्तो-
र्वेगावरोधाकुलितस्य भूयः।
गतीर्विधत्ते धमनी गजेन्द्र-
मरालमालेव कफोल्वणा च ॥
दोषसाम्याच्च सादृश्यादनुक्तासु रुजास्वपि।
ज्ञातव्या धमनीधर्म्मा युक्तिभिश्चानुमानतः ॥

## षट्चत्वारिंशोऽध्यायः।

### नेत्रपरीक्षा।

नेत्रं स्यात् पवनाद्रूक्षं धूम्रवर्णं तथारुणम्।
कोणं गतं प्रविष्टञ्च तथा स्तब्धविलोकनम् ॥
हरिद्राखण्डवर्णं वा रक्तं वा हरितं तथा।
दीपद्वेषि सदाहञ्च नेत्रं स्यात् पित्तकोपतः ॥
चक्षुर्वलासबाहुल्यात् स्निग्धं स्यात् सलिलप्लुतम्।
तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम् ॥
नेत्रं द्विदोषबाहुल्यात् स्याद्दोषद्वयलक्षणम्।
त्रिदोषलिङ्गसङ्गेन तन्मारयति रोगिणम् ॥

त्रिदोषदूषितं नेत्रमन्तर्मग्नं भृशं भवेत् ।
त्रिलिङ्गं सलिलस्रावि प्रान्तेनोन्मीलयत्यपि ॥
हृत्प्लीहपिण्डयोर्बाधाद्विषमे ह्युदरे गदे ।
उत्पद्यमाने नेत्रस्य जायते शूनवर्त्मता ॥
न वर्त्मोन्मीलने शक्तिं स्रमरोगे लभेत ना ।
वेपतेऽपस्मृतौ वर्त्म मुहुर्मुहुरपूर्ववत् ॥
फुप्फुसे मस्तुलुङ्गे च हृदि रुद्धे च शोणिते ।
तद्गुरुवेगान्नयनं सम्पद्येत सुविस्तृतम् ॥
अतिशोणितसंस्रावात् तथा चातिविरेचनात् ।
क्षयादनशनान्नेत्रमन्तर्मग्नं भृशं भवेत् ॥
यद्येकं कोटरं गच्छेदन्यत् प्रकृतिमावहेत् ।
दृक्स्नायोः पक्षाघात वा जानीयाद्वा शिरोरुजम् ॥
संरुद्धासृजि मस्तिष्के नयनं लोहित भवेत् ।
पाण्डौ पीत प्रतीश्यायादृश्यते शुक्लमण्डलम् ॥
मस्तुलुङ्गे समुद्विग्ने तत्र रुद्धे च शोणिते ।
अपस्मारे च सन्न्यासे तथाहिफेनसेवनात् ॥
सङ्कोचं तारका याति विवृता सा स्रुतेऽसृजि ।
मस्तिष्के त्वथ सन्न्याससमूर्च्छाद्ये दृष्टरिष्टके ॥
धुस्तूरभक्षणात्तेन समन्ताच्च प्रलेपनात् ।
वैपुल्यं त्वरया याति नयनस्य कनीनिका ॥
ज्योतिस्त्रनयन नृणामुन्मादाद्दलिनो भवेत् ।
स्नायूनामवसादेन हीयते नयनप्रभा ॥

जिह्वापरीक्षा ।

शाकपत्रप्रभा रूक्षा स्फुटना रसनानिलात् ।

रक्ता श्यावा भवेत्पित्तात्लिप्तार्द्रा धवला कफात् ॥
परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके ।
सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणम् ॥
आधिक्यादसृजां दाहाज्जिह्वोष्णा लोहिता भवेत ।
विसूचिकायां मूर्च्छायां रुद्धे श्वासे च शीतला ॥
खर्वाकृतिस्तु दौर्बल्ये याति वृद्धिं प्रदाहतः ।
विरूक्षणात् समुद्विग्ना तीक्ष्णाग्रा च कनीयसी ॥
अवसादात् प्रशस्ता सा तथा मृदुतरा मता ।
म्लानिना शोणितस्रावाद्विकृत्या शोणितस्य च ॥
आमाशयान्त्रयोर्दाहात् पार्श्वयोरथवाग्रतः ।
सर्वतो वापि लौहित्यं विपुलं भजते च सा ॥
कण्ठाभ्यन्तरदाहेन कृष्णतां यात्यसंशयम् ।
शुष्का सार्द्रा सदा ज्ञेया नीरसा ज्वरदाहयोः ॥
शुष्का चेदार्द्रतां याति कुर्य्यादुपशमं रुजाम् ।
ज्वरिणामवसादेन स्नायूनां वा शिरोरुजा ॥
न वहिर्निःसरेज्जिह्वा निःसरेच्चेत् सवेपना ।
अन्तर्यन्त्ररुजा राजरोगान्ते व्रणपीड़िता ॥
यकृद्दोषात् पित्तरोधात् तथा मलनिरोधतः ।
युज्यते पाण्डुभिर्लेपैर्विदीर्णो मद्यपायिनाम् ॥
आमवाते नवे सामे ज्वरे दाहे च दारुणे ।
आमाजीर्णे च धवलैर्लेपैर्युज्येत सा भृशम् ॥
पृथुभिर्मेचकैः शुष्कैर्ज्वरे दोषत्रयोद्भवे ।
लेपैर्लिप्ता खरस्पर्शा निर्वाणालातवद्भवेत् ॥

# सप्तचत्वारिंशोऽध्यायः।

---

## अथ मूत्रपरीक्षा।

वातेन पाण्डुरं मूत्रं रक्तं नीलञ्च पित्ततः।
रक्तमेव भवेद्रक्ताद्धवलं फेनिलं कफात्॥

अहोरात्रेण विसृजेत् स्वस्थो मूत्रमनाविलम्।
आपाण्डुरञ्च तरलं पलानामष्टसम्मितम्॥
बाहुल्येन जलं तत्र कठिनं स्वल्पमेव हि।
दृश्यते पलमूत्रे तु चतुर्गुण्याऽद्रवस्थितिः॥
वस्तिदेशे समुद्भिन्ने मलेष्वन्त्रे चितेषु च।
तस्मिन् क्रिमिगणाकीर्णे दाहैर्वापि सुदारुणैः॥
नार्य्याश्चापन्नसत्त्वाया अश्मर्य्यां वापि निःस्रवेत्।
सुकृच्छ्रं विन्दुशस्तद्वा न स्रवेद्वापि किञ्चन॥
वस्तौ विस्तीर्णतां याते तन्त्रीवा कुञ्चनात्तथा।
मस्तुलुङ्गरुजा मूत्रं सञ्चितञ्चापि न स्रवेत्॥
विद्रधिमूंत्रपिण्डे चेद्विसूची वापि दारुणा।
नोत्पद्यते ततो मूत्रं तद्भ्यावपि किञ्चन॥
वस्तेः प्रदाहतो मूत्रं विन्दुशस्तु स्रवेत् सदा।
द्रवातियोगाच्छैत्येन सयोगाच्चातिवर्द्धते॥
व्याधिक्षीणशरीरस्य नष्टसञ्ज्ञस्य देहिनः।
तस्य स्वेदस्य बात्यर्थं वृद्धिः स्यान्मृत्यवे मता॥
विरत्या द्रवपानाच्च स्वेदाधिक्यात् सुतेऽसृजि।

जलोदरेऽतिसारे च मूत्रं स्तोकं स्रवेन्नृणाम् ॥

आर्त्तवपरीक्षा ।

द्वादशाद्वत्सरादूर्द्ध्वमापञ्चाशत् समाः स्त्रियः ।
मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत् ॥
शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम् ।
तदार्त्तवं प्रशंसन्ति यच्चाप्सु च विरज्यते ॥
मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥
तस्यायथाप्रवृत्त्या हि शारीरा मानसास्तथा ।
व्याधयो बहवः स्त्रीणां जायन्ते कृच्छ्रसाधनाः ॥
स्नायूनां रक्तयन्त्राणां पाचकाग्नेश्च जायते ।
व्याहतिर्व्याहते तस्मिन् सुस्थितिर्नियते भवेत् ॥
ऋतौ कण्डूयनं योनौ क्वचिदङ्गे च वेदना ॥
बाहुल्यं स्वल्पता वापि चानुबन्धित्वमस्य वा ॥
सरोधः सर्वथा वापि वेद्यान्येतानि यत्नतः ।
आमयेष्वखिलेष्वेव भिषग्भिर्योषितां सदा ॥

———

# अष्टचत्वारिंशोऽध्यायः।

---

## अथ बालानां रोगपरीक्षाविधिः।

न किञ्चिदस्ति कर्म्म दुरूहतरं यथा शिशूनां रोगपरीक्षणम् परं धैर्य्यशीलगाम्भीर्य्यसान्त्वादिभिस्तेषां प्रियप्रदर्शनप्रदानाभ्यां तथान्यैस्तोषणकर्म्मभिश्च तदपि सुकरं भवति। बाला ह्यात्मवेदनानिवेदने सर्व्वथैवासमर्था रोदनमात्रसहाया आत्मशुभाशुभबुद्धिपरिहीनाः सर्व्वथान्येषु समर्पितप्राणा भृशं परावलम्बिनः परं दयाभाजनानि। जगति न तस्मात्कश्चिदपरः पापीयान्न यः सर्व्वथा सर्व्वप्रयत्नेन समाहितचेताः सम्यग्विचार्य्य तान् भेषजैरुपपादयेत्। भिषजा सर्व्व एवातुरा अविशेषेण पुत्त्रवद्द्रष्टव्या विशेषतः शिशवः। तेनात्यर्थमवधानपरेणावश्यं भवितव्यं यथा ते न तस्माद्भीतिमापद्येरन्।

भिषजा परीक्षार्थं गृहं प्रविश्य प्रथमं शिशोर्धात्रीतः एतान्यवश्यं वेद्यानि। यथा वर्त्तमानरोगोत्पत्तेः प्राक् तस्य दैहिकोऽवस्थाविशेषः, अतीता पूर्व्वरूपप्रकृतिर्जातरोगसपृक्ता विविधाश्चपरा विकृतयः, शिशुः पुमान् स्त्री वा त्यक्तस्तनो वा न वा स यदाहारप्रियस्तस्य वयःपरिमाणं मलमूत्रादीनां प्रकृतिरित्याद्यानि। शिशुर्यदि स्वपिति न तं प्रबोधयेत् सुप्तस्यैव तस्याकृत्यङ्गसंस्थितिप्रभृतीनि विशेषेणेक्षणीयानि स उत्तानशायी पार्श्वशायी

वा विस्तीर्णजङ्घः कुञ्चितजङ्घो वा इत्यादिभिस्तस्याङ्गसंस्थितिविशेषैर्व्याधेः कृच्छ्रत्वमकृच्छ्रत्वं वावगम्येत। ज्वरे सान्निपातिके फुप्फुसे च व्यथाकुले गण्डौ लोहितौ स्याताम्। कूजनात् सहसा निद्राच्छेदादकस्मादाक्षेपादिक्रोशनाद्धस्तग्रहाच्च तस्य मस्तिष्कविकृतिरनुमेया। आमाशये उग्रतामापन्नेऽकस्मान्मुखविवरमाक्षिप्यते। नयनयोरसम्यङ्निमीलनान्मस्तिष्कविक्रियारोगस्य कृच्छ्रसाध्यत्वञ्चावगम्यम्।

---

## ऊनचत्वारिंशोऽध्यायः।

---

### हृदयपरीक्षा।

हृदयपरीक्षाशब्देनात्र फुप्फुसो हृदयञ्चेत्युभयोरेव शोणितयन्त्रयोरुरःस्थितयोः परीक्षणमवगन्तव्यम्। पवनः प्रतिनियत प्रविश्य फुप्फुसं तत्रस्थं शोणित विशोधयति अयमेव वायुः प्राणनाम्ना व्याख्यात ततस्तस्माद्विषांशमाकृष्य बहिर्निःसरत्युदानः। असौ श्वासक्रिया। एकस्मिन् श्वासक्रियाकाले नाडीनां चत्वारि स्पन्दनानि भवन्ति। जाग्रतः स्वपतस्तिष्ठतश्चासीनस्यासीमाच्छ्यानस्योपलभ्यते संख्याह्रासः श्वासस्य।

अतःपरमभिघातपरीक्षाविधिः कथ्यते। फुप्फुसमभितो वक्षसि वामहस्तस्य प्रदेशिनीं मध्यमां वा स्थापयि-

त्वेतरकराङ्गुल्यग्रैरेकत्र योजितैरभिहत्याभिघातशब्देन जानीयादुरोऽभ्यन्तरावस्थां विशेषेणावधानपरः। न च सकृदेव परीचया मीमांस्यं किञ्चित् पुनः पुनरेव तु परीचा कर्त्तव्या। असंन्यस्ताङ्गुलिकं केवलमेवोरोऽप्यभिहत्य परीच्यते। आमयपरिरहितात् फुपफुसादुद्भवति शब्दोऽतिपरिस्फुटोऽभिताच्छून्यगर्भपात्रादिवेति वेद्यम्। दृढ़ीभूते वायुपरिशून्ये वा फुपफुसस्य क्वचिदंशे तत्राभिघाताज्जड़ो मन्दोऽतीच्णश्चोद्भवति शब्दो विवृद्धहृदयेऽभिघाताच्च। चयकासादिर्विकृतिमापन्ने सम्यङ्मन्दीभवति सः।

अभिघातेनैव वचसि केवलकर्णसंयोगेनापि निरन्तरं प्रकृत्यैवोत्पद्यमानशोणितयन्त्राभ्यन्तरीणविविधशब्दोपलब्ध्या तद्यन्त्रयोरवस्थाविशेषः प्रतीयते। स्वस्थानां पञ्जरे प्रहिते कर्णे फुपफुसे वायोः प्रवेशात् ततो वहिर्निःसरणाच्च निरन्तरं श्रूयते शब्दविशेषः स एवोपलभ्यते गम्भीरतरश्चोग्रतरश्च कण्ठे। विक्रियां याते फुपफुसे सर्पश्वासवद्वंशीध्वनिवच्च शब्दः प्रादुर्भवति। श्लेष्मणि शोणिते पूये वा तत्र सञ्चिते पङ्कमयक्लिन्नोद्भिज्जनिकरपल्वलसंघट्टनाद्बुद्बुदोत्पादशब्द इवोत्पद्यते शब्दः।

हृदयाकुञ्चनप्रसाराभ्यां द्विविधौ प्रादुर्भवतः शब्दौ। वामस्तनवृन्तान्निम्ने वचस्याकुञ्चनशब्दो व्यक्ततरः श्रूयते। प्रसारजस्तु तत ऊर्द्ध्वं हृदस्थिसन्निहिते। अयमद्यात्तीच्णतरोऽगम्भीरः स्वल्पकालावस्थायी च। आद्यस्तु दीर्घोऽतीच्णश्च। हृदये विवृद्धिं गते स एव मन्दतरो भवति, नियतस्पन्दनस्थानान्निम्नतरे प्रदेशे स्पन्दनं लच्यते च: उरः-

क्षतार्थैः क्षयरोगैर्हृदयपरिपचनात् ततो बुद्बुदस्येव जायते शब्दः ।

अथौदरयन्त्राणां परीक्षा ।

कारुण्याम्भोधिमात्रेयं सर्व्वशास्त्रविशारदम् ।
पादयोरुपसंगृह्य हारीतः परिपृच्छति ॥
तातास्माभिः श्रुतं पूर्वं नेत्रादीनां परीक्षणम् ।
अधुनौदरयन्त्राणां परीक्षां वक्तुमर्हसि ॥
तस्य तद्वचनं श्रुत्वा प्रियशिष्यस्य धीमतः ।
आत्रेयो वक्तुमारेभे तत्सर्वं शिष्यवत्सलः ॥
यकृदामाशयः प्लीहा ग्रहण्यन्त्राणि वृक्कौ ।
मलमूत्राशयो यन्त्राण्यौदराण्यपराणि च ॥
तेषां विकृतितो यानि लक्षणानि भवन्ति हि ।
शृणुतावहिता वत्सा वच्मि सोऽहं समासतः ॥
उदरे सर्वहस्तस्य स्थापयेन्मध्यमाङ्गुलीम् ।
तामन्यस्य करस्याग्रैरङ्गुलीनां विधानतः ॥
अभिहत्याभिघातोत्थैर्ध्वनिभिर्विविधैर्भिषक् ।
क्रियाविशेषान् यन्त्राणां विद्यादुदरवर्त्तिनाम् ॥
यकृद्देशाभ्यन्तरः शब्दः प्रकृतितो भवेत् ।
शून्यामाशयतः शब्दो जायते शौन्यगर्भिकः ॥
वातैर्वा यदि वा वाष्पैः पूर्णश्चामाशयो भवेत् ।
ततः प्रादुर्भवेच्छब्दो वाताध्माताहतेर्यथा ॥
वायुना स्फीतिमापन्ने प्रहते च मलाशये ।
प्रतिध्वनिर्भवेच्छब्दो मन्दः स्यान्मलपूरिते ॥
उदरोदरिणं ज्ञात्वा सर्वथा पार्श्वशायिनम् ।

तस्योर्द्ध्वपार्श्वं विधिना परीक्षेताभिघाततः॥
स्वभावात् सञ्चितं तोयमधो व्रजति निश्चितम्।
तदूर्द्ध्वमुपतिष्ठन्ते क्षिप्रमन्त्राणि वल्लकाः॥
ऊर्द्ध्वं गतेभ्यस्तेभ्यः शब्दस्तायानिको भवेत्।
अभिघातपरीक्षेयं मया प्रोक्ता समासतः॥
भोजनादुदरस्योर्द्ध्वं गौरवं जायते महत्।
शिरोरुग्वक्त्रवैरस्यं हृद्दाहो वमथुस्तथा॥
रसना मलसंपूर्णा क्लान्तिर्हृदयवेपनम्।
निद्रानाशोऽग्निमान्द्ये स्याज्जाड्यं दुःस्वप्नदर्शनम्॥
आमाशयव्रणे नृणां जायते परिकर्त्तिका।
वान्त्या तदाशये शून्ये वेदना सा प्रशाम्यति॥
भोजनाद्वान्तिरेव स्याच्छ्लेष्मशोणितसंयुता।
रुधिरस्यापि वमनं रक्तपिण्डस्य वा भवेत्॥
पुरीषैर्मलिनं रक्तं निर्य्यायाद्गुदतोऽपि च।
प्रायशो योषितामेव व्याधिः स्यादृतुरोधतः॥
पर्शुकाधो यकृत् प्लीहा नाविकृतोऽनुभूयते।
दक्षिणाच्चुचुकान्निम्ने द्व्यङ्गुलाद्यकृतः स्थितिः॥
अतीत्यैकाङ्गुलिस्थानं पर्शुकाभ्यश्च निश्चितम्।
उरःप्राचीरसङ्कोचाद्विवृद्धा हृदयस्य च॥
वायुना फुप्फुसस्फीत्या क्षोभणैरपरैरपि।
यकृत्स्थानात् प्रच्यवेत न तद्वृद्धं विधारयेत्॥
दक्षिणे शकले प्रायो विद्रधिर्यकृतो भवेत्।
हिक्का श्वासो वमिः कासो जायते तीव्रवेदना॥
न शक्तिः शयने तस्य सव्ये पार्श्वे भवेच्च नु।

इति प्रोक्तं समासेन यकृद्वृद्धिलक्षणम् ॥
अनुभूयेत हस्तेन प्लीहा च यदि कस्यचित् ।
तदा तं व्याधितं विद्यात्तेन रक्तक्षयो भवेत् ॥
पश्चान्मलाशयाद्वृक्कौ वर्त्तेते चोदरान्तरे ।
तत्र रक्तावरोधेन मूत्रं स्तोकं त्यजेन्नरः ॥
मूत्रं सशोणितं वापि वेदना तत्र दारुणा ।
तथा स्पर्शासहत्वञ्च वृक्कविकृतिलक्षणम् ॥
विकृते तिलके नृणां मलं मेदोयुतं भवेत् ।
वह्निमान्द्यं भवेच्चापि दौर्बल्यं चाप्यजीर्णता ॥
अन्त्रावरोधाद्दाहः स्यादवसादश्च चेतसः ।
विट्सङ्गो वेदनात्युग्रा पुरीषवमनं तथा ॥
रोगस्थानादधश्चान्त्रे शून्यतोपरिपूर्णता ।
रोगेणानेन चाक्रान्तो नरः प्रायस्त्यजत्यसून् ॥
मलमूत्राशयौ दुष्टौ मेहानाहादिकान् बहून् ।
व्याधीन् जनयतो दुष्टा ग्रहणी वह्निमन्दताम् ॥
इत्यौदराणां यन्त्राणां विक्रियायां समासतः ।
यान्युद्भवन्ति चिह्नानि मया प्रोक्तानि वत्सकाः ॥
प्रतिरोगं प्रवक्ष्यामि तत्तद्विशेषपराणि च ।
तानि सर्वाणि वेद्यानि भिषजा सिद्धिमिच्छता ॥

## वाह्याकृतिपरीक्षा ।

अथावधीयतां वत्सा वहिराकृतिवेदने ।
तद्विज्ञानाद्भिषङ्नूनं भवेद्रोगविशेषवित् ॥
शयानो भजते दुःखमासीनः सुखमश्नुते ।
श्वासाद्यैरुपसृष्टस्तु हृत्कोष्ठार्त्तियुतो नरः ॥

आमयं सुचिरं भुक्त्वा क्षीणेन्द्रियबलो नरः ।
उत्तानः सततं शेते सादं परमसृच्छति ॥
औदरं शिथिलीकृत्य चर्म्म सङ्कोच्य सक्थिनी ।
उत्तानशायी भवति विकृतोदरकोष्ठकः ॥
क्षणमुत्तानशयनं भजते क्षणमन्यथा ।
न शर्म्म कथमप्येष लभते शूलपीडितः ॥
संज्ञा सम्यक्शयानस्य बल धैर्य्यं रतिः स्मृतिः ।
प्रवर्त्तनञ्च दोषाणां गद्यते शुभलक्षणम् ॥
आमाशये फुप्फुसे च विकृते हृदये तथा ।
सहसा वर्द्धते कार्श्यं नातिकल्याणदं हि तत् ॥
शोणितादिस्रुतेः स्तन्यदायिनीनाञ्च योषिताम् ।
कृशः कायो भवेत्तत्र प्रतिकुर्य्याद्यथाविधि ॥
सहसा चेदतिस्थूल' कश्चित्तद्भीतिकारणम् ।
उत्पद्यमाने सन्यासे प्रायेणैवं प्रदृश्यते ॥
विक्रियां फुप्फुसे याते हृदये वृक्कके तथा ।
प्रायोनृणां मुखे शोफो बाह्लोश्चापि प्रजायते ॥
व्याधिते यकृति प्लीह्नि हृदि वृक्के च पादयोः ।
प्रायः शोथो भवेन्नृणामादितोऽपि दकोदरे ॥
शीतदेहस्य चेत् स्वेद शैत्य याति च देहिनः ।
संज्ञानाशो भवेत्तर्हि स शीघ्रं विजहात्यसून् ॥
अवसादो हिमः स्वेदो जाड्यं वेपथुरेव च ।
तूर्णं कायो न चेदुष्णो भवेत्तन्न शुभावहम् ॥
प्रायः शुभावहः स्वेदो यद्यनौषधजो भवेत् ।
पर स्वास्थ्यं भवेत्तस्मिन् जाते बहु ज्वरादिषु ॥

वह्निमान्द्यं निशास्वेदो व्याधेश्च पुनरागमः।
क्लिश्नाति रोगिणं भूयस्तत्र पथ्याशनं हितम्॥
धमनीस्पन्दन तापो दैहिको रसना तथा।
दोषप्रवृत्तिः प्रकृतिं भवेत् कल्याणहेतवे॥
इति संक्षेपतो यानि लक्षणानि रुजां मया।
कीर्त्तितान्यवधानेन तानि धर्य्याणि चेतसा॥

नाड़ीमेकां भिषग्भिः सुविदितनिगमैर्नेत्रमेकञ्च मूत्रं
जिह्वां वैकां परीक्ष्य प्रचुरमतिधरैर्वर्णनीया न रोगाः।
कोष्ठाद्यञ्चापि सर्वं हृदुदरपिहितं देहसंस्थानमन्य-
न्निर्णेया वीक्ष्य कृत्स्नं निगदितविधिभिः सर्वथा सर्वभावैः॥

## साधारणो रोगपरीक्षाविधिः।

समासतः षड्विधो हि रोगाणां विज्ञानोपायः। तद्यथा, पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति। तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादयः प्राणेरिता अभिघातोत्थशब्दविशेषाश्च। स्पर्शनेन्द्रियविज्ञेयाः शीतोष्णश्लक्ष्णकर्कशमृदुकठिनत्वादयो ज्वरशोफादिषु। चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबलवर्णविकारादयः। रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषाः। घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः। प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलं दीप्ताग्नितां वातमूत्रपुरीषरजसां प्रवृत्त्यप्रवृत्ती कालप्रकर्षादींश्च विशेषान्।

दर्शनस्पर्शनप्रश्नैस्तं परीक्षेत रोगिणम्।
आयुरादि दृष्टा स्पर्शाच्छीतादि प्रश्नतः परम्॥
मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च।
तथा दुष्परिमृष्टाश्च मोहयेयुश्चिकित्सकान्॥

एवमभिसमीक्ष्य साध्यान् साधयेद्याप्यान् यापयेद-साध्यान्नोपक्रमेत् परिसंवत्सरोत्थितांश्च विकारान् प्रायशो वर्जयेत्। तत्र साध्या अपि व्याधयः प्रायेणैषां दुश्चिकित्स्यतमा भवन्ति। तद्यथा—श्रोत्रियनृपतिस्त्रीबालवृद्धभीरु-राजसेवककितवदुर्बलवैद्यविदग्धव्याधिगोपकदरिद्रकृपण-क्रोधवतामनात्मवतामनाथानाञ्चैवं निरूप्य चिकित्सां कुर्वन् धर्मार्थकामयशांसि प्राप्नोति।

---

## पञ्चाशत्तमोऽध्यायः।

---

अथ यन्त्रविधिः।

नानाविधानां शल्यानां नानादेशप्रबाधिनाम्।
आहर्त्तुमभ्युपायो यस्तद्यन्त्रं यच्च दर्शने॥
अर्शोभगन्दरादीनां शस्त्रक्षाराग्नियोजने।
शेषाङ्गपरिरक्षायां तथा वस्त्यादिकर्म्मणि।
घटिकालाबुशृङ्गञ्च जाम्बवौष्ठादिकानि च।
अनेकरूपकार्य्याणि यन्त्राणि विविधान्यतः॥
विकल्पयाकल्पयेद्बुद्धया यथास्थूलन्तु वक्ष्यते॥

स्वस्तिकयन्त्रम् ।

तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ।
मुखैर्मुखानि यन्त्राणां कुर्य्यात्तत्संज्ञकानि च ॥
अष्टादशाङ्गुलायामान्यायसानि च सूरिभिः ।
मसूराकारपर्य्यन्ते. कण्ठे बद्धानि कीलकैः ॥
विद्यात् स्वस्तिकयन्त्राणि मूलेऽङ्कुशयुतानि च ।
तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ॥

कङ्कमुखम् ।



सिंहास्यम् ।



ऋक्षमुखम् ।



काकमुखम् ।



तरक्षास्यम्।



सन्दंशयन्त्रम्।

कीलबद्धवियुक्ताग्रौ सन्दंशौ षोडशाङ्गुलौ।
त्वक्शिरास्नायुपिशितलग्नशल्यापकर्षणौ॥
षड़ङ्गुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम्॥



मुचुटीयन्त्रम्।

मुचुटी सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा।
गम्भीरव्रणमांसार्त्तौ श्मश्रुणः शेषितस्य च॥

तालयन्त्रम्।

द्वे तालयन्त्रे द्वादशाङ्गुले मत्स्यतालुवदेकतालद्वितालके कर्णनासानाड़ीशल्यानामाहरणार्थम्।




नाड़ीयन्त्रम्।

नाड़ीयन्त्राण्यनेकप्रकाराण्यनेकप्रयोजनान्येकतोमुखान्युभयतोमुखानि च तानि स्रोतोगतशल्योद्धरणार्थं रोग-

दर्शनार्थमाचूषणार्थं क्रियासौकर्य्यार्थञ्चेति । तानि स्रोतोद्वारपरिणाहानि यथायोगपरिणाहदीर्घाणि च ।



अन्तःकण्ठशल्यावलोकिनी नाड़ी ।

दशाङ्गुलार्द्धनाहान्तःकण्ठशल्यावलोकिनी ।

स्नुहीपत्रम् ।

स्नुहीपत्रं प्रयोज्यं स्याज्जिह्वारचणकर्मणि ॥



शल्यनिर्घातिनी ।

पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशाङ्गुला ।

चतुर्थशुषिरा नाड़ी शल्यनिर्घातिनी मता ॥

अर्शोयन्त्रम् ।

अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ।

नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षड़ङ्गुलम् ॥

द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रन्तु कर्मणि ।

शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीड़नम् ॥



शमीयन्त्रम् ।



भगन्दरयन्त्रम्।

तद्भगन्दरयन्त्रं स्याद्गोयन्त्रं निरोष्ठकम्।

नासायन्त्रम्।

घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया।
प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत्॥

अङ्गुलित्राणकयन्त्रम्।

अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम्।
द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम्॥



योनिव्रणेक्षणम्।

योनिव्रणेक्षणं मध्ये सुषिरं षोडशाङ्गुलम्।
मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम्॥
चतुःशलाकमाक्रान्तं मूले तद्विकसेन्मुखे॥

अन्यच्च। योनिव्रणेक्षणं चान्यद्दैर्घ्यतो यद्विधाकृतम्।
विपर्य्यासेन सन्यस्तं विषाणं नाहिषं यथा॥



यन्त्रे नाडीव्रणाभ्यङ्गक्षालनाय षडङ्गुले।
वस्तियन्त्राकृती मूलमुखेऽङ्गुष्ठकलायखे॥
अग्रतःकर्णिके मूले निबद्धमृदुचर्मणी॥

वस्तियन्त्रम्। 

द्विद्वारा नलिका पिच्छनलिका वा दकोदरे ।



धमवस्त्यादियन्त्राणि निर्दिष्टानि यथायथम् ।



त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम् ।
अग्रे सिद्धार्थकच्छिद्रं सुनद्धचुचुकाकृति ॥
स्याद्द्वादशाङ्गुलोऽलावुर्नाहे त्वष्टादशाङ्गुलः ।
चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्तहृत् ॥
तद्वद्घटी हिता गुल्मविलयोन्नमने च सा ।

शलाकायन्त्रम् ।

शलाकाख्यानि यन्त्राणि नानाकर्म्माकृतीनि च ।
यथायोगप्रमाणानि तेषामेषणकर्म्मणी ॥
उभे गण्डूपदमुखे स्रोतोभ्यः शल्यहारिणी ।
मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले ॥





शङ्कुयन्त्रम् ।

शङ्कवः षड्भौ तेषां षोडशद्वादशाङ्गुलौ ।
व्यूहनेऽहिफणावक्त्रौ द्वौ दशदशाङ्गुलौ ॥

चालने शरपुङ्खास्यावाहार्य्ये बड़िशाकृती॥

गर्भशङ्कुः।

नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः।
वष्टाङ्गुलायतस्तेन मूढ़गर्भं हरेत् स्त्रियाः॥



यौग्मशङ्कुः।

संबद्धशङ्कुयुगलो यौग्मशङ्कुः प्रकीर्त्तितः।
मूढ़गर्भाहृतौ सोऽपि प्रयोज्यो गर्भशङ्कुकः॥



अश्मर्य्याहरणं सर्पफणावद्वक्रमग्रतः।



शरपुङ्खमुखं दन्तपातनं चतुरङ्गुलम्॥

चीणपराणि शलाकायन्त्राणि दर्व्याहृतीनि खल्लमुखानि क्षारौषधप्रणिधानार्थम्। नासार्बुदहरणार्थमेकं कोलास्थिदलमात्रमुखम्। अञ्जनार्थमेकं कलायपरिमण्डलमुभयतोमुकुलाग्रम्। मूत्रमार्गविशोधनार्थमेकं मालतीपुष्पवृन्ताग्रप्रमाणपरिमण्डलमिति।







उपयन्त्राण्यपि अयस्कान्तरज्जुवस्त्राश्मबालप्रभृतीनि ।
एतानि देहे सर्वस्मिन् देहस्यावयवे तथा ।
सन्धौ कोष्ठे धमन्याञ्च यथायोगं प्रयोजयेत् ॥

निर्घातनोन्मथनपूरणमार्गशुद्धि-
सव्यूहनाहरणबन्धनपीड़नानि ।
आचूषणोन्नमननामनचालभङ्ग-
व्यावर्त्तनर्जुकरणानि च यन्त्रकर्म्म ॥

स्वबुद्ध्या चापि विभजेद्यन्त्रकर्म्माणि बुद्धिमान् ।
असंख्येयविकल्पत्वाच्छल्यानामिति निश्चयः ॥

तत्रातिस्थूलमसारमतिदीर्घमतिह्रस्वमग्राहि-विषमग्राहि वक्रं शिथिलमत्युन्नतं मृदुकीलं मृदुमुखं मृदुपाशमिति द्वादश यन्त्रदोषाः ।

विवर्त्तते साध्ववगाहते च
शल्यं गृहीत्वोद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्वेष्वधिकारि यच्च ॥

———

# एकपञ्चाशत्तमोऽध्यायः।

---

शस्त्रविधिः।

शस्त्राणि बहुविधानि तत्र प्रधानानि मण्डलाग्रकरपत्रवृद्धिपत्रमुद्रिकोत्पलपत्रप्रभृतीनि सलक्षणप्रयोजनानि वर्ण्यन्ते। तानि सुग्रहाणि सुलोहानि सुधाराणि सुरूपाणि सुसमाहितमुखाग्राण्यकरालानि चेति शस्त्रसम्पत्। तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमत्यल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः अतो विपरीतगुणमाददीतान्यत्र करपत्रात् तद्धि खरधारमस्थिच्छेदनार्थम्। तेषां पायना त्रिविधा क्षारोदकतैलेषु तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु उदकपायित मांसच्छेदनभेदनपाटनेषु तैलपायितं शिराव्यधनस्नायुच्छेदनेषु। तेषां निशानार्थं श्लक्ष्णशिला माषवर्णा धारासंस्थापनार्थं शाल्मलीफलकमिति।

यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम्।
सुगृहीतं प्रमाणेन तदा कर्म्मसु योजयेत्॥

मण्डलाग्रं शस्त्रम्।

मण्डलाग्रं फले तेषां तर्ज्जन्यन्तर्नखाकृति।
लेखने छेदने योज्यं पोथकीशुण्डिकादिषु॥



वृद्धिपत्रम् ।

वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।
ऋज्वग्रमुन्नते शोफे गम्भीरे तु तदन्यथा ॥
नताग्रं पृष्ठतो दीर्घह्रस्ववक्त्रं यथायथम् ॥





उत्पलपत्रमध्यर्द्धधारञ्च ।

उत्पलाध्यर्द्धधाराख्ये भेदने छेदने तथा ।





सर्पास्यम् ।

सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्द्धाङ्गुलं फले ॥



एषणी ।

गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषणी ।
भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ॥









वेतसपत्रं शरारीमुखं त्रिकूर्चकञ्च ।
वेतसं व्यधने स्याच्छे शरार्य्यास्यत्रिकूर्चके ।







कुशपत्रमाटीमुखञ्च ।
कुशाटीवदने स्याच्छे द्व्यङ्गुलं स्यात्तयोः फलम् ।





अन्तर्मुखमर्द्धचन्द्राननञ्च ।
तद्वदन्तर्मुखं तस्य फलमध्यर्द्धमङ्गुलम् ।
अर्द्धचन्द्राननं चैतत् तथाध्यर्द्धाङ्गुलं फले ॥

व्रीहिवक्त्रम् ।
व्रीहिवक्त्रं प्रयोज्यञ्च तच्छिरोदरयोर्व्यधे ।



कुठारी।

पृथुः कुठारी गोदन्तसदृशार्द्धाङ्गुलानना।
तयोर्द्ध्वदण्डया विध्येदुपर्य्यस्थ्नां शिरां स्थिताम्॥



शलाकाशस्त्रम्।

ताम्री शलाका द्विमुखा मुखे कुरकाकृतिः।
नेत्रनाड़ीं तया विध्येत् कफदोषसमुद्भवाम्॥



मुद्रिका।

प्रदेशिन्यग्रपर्व्वप्रमाणा फलेऽर्द्धाङ्गुलायता मुद्रिका।



वड़िशः।

ग्रहणे शुण्डिकार्म्मादेर्वड़िशः सुनताननः।



करपत्रम्।

भेदेऽस्थ्नां करपत्रन्तु खरधारं दशाङ्गुलम्।
विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सत्सरबन्धनम्॥



कर्त्तरी ।

स्नायुसूत्रगर्भशल्यानां केशादीनाञ्च कर्त्तने ।
विविधाकृतयो योज्याः कर्त्तर्यः कर्त्तरीनिभाः ॥











नखशस्त्रम् ।

वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् ।
सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने ॥



दन्तलेखनम् ।

एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः ।
दन्तलेखनकं तेन शोधयेद्दन्तशर्करान् ॥



## सूची ।

वृत्ता गूढ़दृढ़ाः पाशे तिस्रः सूच्योऽत्र सीवने ।
मांसलानां प्रदेशानां त्र्यस्रा त्र्यङ्गुलमायता ॥
अल्पमांसास्थिसन्धिस्थव्रणानां द्व्यङ्गुलायता ।
व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्म्मसु ॥
सा सार्द्धद्व्यङ्गुला सर्व्वा वृत्तास्ताः सूचयः स्मृताः ॥



## कूर्च्चः ।

कूर्च्चौ वृत्तैकपीठस्थाः सूचयस्ताः सुबन्धनाः ।
संयोज्यो नीलिकाव्यङ्गकेशशातेषु कुट्टने ॥



## कर्णवेधनशस्त्राणि ।

व्यधने कर्णपालीनां यूथिका मुकुलानना ।
आरार्द्धाङ्गुलवृत्तास्या तत्प्रवेशा तथोर्द्ध्वतः ॥
चतुरस्रा तया विध्येच्छोथं पक्वामसंशये ।
कर्णपालीश्च बहलां बहलायाश्च शस्यते ॥

सूची त्रिभागशुषिरा त्र्यङ्गुला कर्णवेधनी ॥



शस्त्राख्येतानि चान्यानि बाहुल्येनाङ्गुलानि षट् ।
जलौकःक्षारदहनकचोपलनखादयः ॥
अलोहान्यनुशस्त्राणि तान्येवञ्च विकल्पयेत् ।
अपराण्यपि यन्त्रादीन्युपयोगञ्च यौगिकम् ॥
छेदभेदनलेखार्थं शस्त्रं वृन्तफलान्तरे ।
तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात् सुसमाहितः ॥
विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च ।
तलप्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे ॥
मूलेष्वाहरणार्थानि क्रियासौकर्य्यतोऽपरम् ॥
स्यान्नवाङ्गुलिविस्तारः सुघनो द्वादशाङ्गुल. ।
क्षौमपट्टोर्णकौषेयदुकूलमृदुचर्म्मजः ॥
विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः ।
शलाकापिहितास्यश्च शस्त्रकोषः सुसञ्चयः ॥



# द्विपञ्चाशत्तमोऽध्यायः ।

---

## शस्त्रचिकित्साविधिः ।

### तत्रादावग्रोपहरणीयमध्यायं व्याख्यास्यामः ।

त्रिविधं कर्म्म । पूर्वकर्म्म प्रधानकर्म्म पश्चात्कर्मेति तद्व्याधिं प्रति प्रत्युपदेक्ष्यामः । शस्त्रकर्म्मविधिमिदानीं समासत उपदेक्ष्यामस्तत्सम्भारांश्च । तच्च शस्त्रकर्म्माष्टविधम् । तद्यथा, छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति ।

अतोऽन्यतमं कर्म्म चिकीर्षता वैद्येन पूर्वमेवोपकल्पयितव्यानि । तद्यथा, यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबूजाम्बवौष्ठपिचुप्लोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः । ततो निर्दिष्टदिवसे लघुभुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्म्मशिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्यादापूयदर्शनात् सकृदेवापहरेच्छस्त्रमाशु च । महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्रपदमुक्तम् । तत्रायतो विशालः समः सुविभक्त इति व्रणगुणाः ।

आयतश्च विशालश्च सुविभक्तो निराश्रयः ।

प्राप्तकालतश्चापि व्रणः कर्म्मणि शस्यते ॥
शौर्य्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू ।
असंमोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते ॥

एकेन वा व्रणेनाशुध्यमानेनान्तराबुद्ध्यावेक्ष्यापरान् व्रणान् कुर्य्यात् ।

यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्य्याद्यथा दोषो न तिष्ठति ॥

तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टककक्षाकुक्षिवङ्क्षणेषु तिर्य्यक् छेद उक्तः ।

चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत् ।
अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान् ॥

अन्यथा तु शिरास्नायुच्छेदनादतिमात्रं वेदना चिराद्व्रणसंरोहो मांसकन्दप्रादुर्भावश्चेति । मूढगर्भोदरार्शोऽश्मरीभगन्दरमुखरोगेष्वभुक्तवतः कर्म्म कुर्वीत । ततः शस्त्रमवचार्य्य शीताभिरद्भिरातुरमाश्वास्य समन्तात् परिपीड्याङ्गुल्या व्रणमभिमृज्य प्रक्षाल्य कषायेण प्लोतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढ़ामौषधयुक्तां वर्त्तिं प्रणिदध्यात् । ततः कल्केनाच्छाद्य वस्त्रपट्टेन बध्नीयाद्गुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्यामिश्रैराज्ययुक्तैर्धूपैर्धूपयेत् ।

तत आतुरमागारं प्रवेश्याचारिकमादिशेत् । ततस्तृतीयेऽहनि विमुच्यैवं बध्नीयाद्वस्त्रपट्टेन नचैवं त्वरमाणोऽपरेद्युर्मोक्षयेत् । द्वितीयदिवसे परिमोक्षणाद्विग्रथितो व्रणश्चिरादुपसंरोहति तीव्ररुजश्च भवति । अत ऊर्द्ध्वं

दोषकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान् विदध्यात्। न चैव त्वरमाणः सान्तर्दोषं रोपयेत्। स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति।

तस्मादन्तर्बहिश्चैव सुशुद्धं रोपयेद्व्रणम्।
रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत्॥
हर्षं क्रोधं भयञ्चापि यावदास्थैर्य्यसम्भवात्।
हेमन्ते शिशिरे चैव वसन्ते चापि मोचयेत्॥
त्र्यहाद्व्यहाच्छरद्ग्रीष्मवर्षास्वपि च बुद्धिमान्।
अतिपातिषु रोगेषु नेच्छेद्विधिमिमं भिषक्॥
प्रदीप्तागारवच्छीघ्रं तत्र कुर्य्यात् प्रतिक्रियाम्॥

या वेदना शस्त्रनिपातजाता
तीव्रा शरीरं प्रदुनोति जन्तोः।
घृतेन सा शान्तिमुपैति सिक्ता
कोष्णेन यष्टीमधुकान्वितेन॥

———

## त्रिपञ्चाशत्तमोऽध्यायः।

अथातोऽष्टविधशस्त्रकर्म्मीयमध्यायं
व्याख्यास्यामः।

छेद्या भगन्दरा ग्रन्थिः श्लैष्मिकस्तिलकालकः।
व्रणवर्त्मार्बुदान्यर्शश्चर्म्मकीलोऽस्थिमांसगम्॥
शल्यं जतुमणिर्मांससंघातो गलशुण्डिका।
स्नायुमांसशिराकोथो वल्मीकं शतपोनकः॥
अध्रुषश्चोपदंशाश्च मासकन्यधिमांसकः॥
भेद्या विद्रधयोऽन्यत्र सर्वजान्ग्रन्थयस्त्रयः।
आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः।
प्रमेहपिड़काशोफस्तनरोगावमन्थकाः॥
वल्मीकानुशयीनाड्यो वृन्दौ पुष्करिकालजौ।
प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ॥
तुण्डिकेरी गिलायुश्च पूर्वं ये च प्रपाकिणः।
वस्तिस्तथाश्मरीहेतोर्मेदोजा ये च केचन॥
लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्विका।
मेदोजो दन्तवैदर्भौ ग्रन्थिर्वर्त्माधिजिह्विका॥
अर्शांसि मण्डलं मासकन्दी मांसोन्नतिस्तथा।
वेध्याः शिरा बहुविधा मूत्रवृद्धिर्दकोदरम्॥
एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये।
आहार्य्याः शर्करास्तिस्रो दन्तकर्णमलाश्मरी॥

शल्यानि मूढ़गर्भाश्च वर्चश्च निचितं गुदे ।
स्राव्या विद्रधय पञ्च भवेयुः सर्वजाश्च ते ॥
कुष्ठानि वायु सरुज शोफो यश्चैकदेशज ।
पल्यामयाः श्लीपदानि विषजुष्टाश्च शोणितम् ॥
अर्बुदानि विसर्पाश्च ग्रन्थयश्चादितश्च ये ।
त्रयस्त्रयश्चोपदंशाः स्तनरोगा विदारिका ॥
शौषिरो गलशालूकं कण्टका क्रमिदन्तकः ।
दन्तवेष्ट सोपकुशः शीतादो दन्तपुप्पुटः ॥
पित्तासृक्कफजाश्चौष्ठयाः क्षुद्ररोगाश्च भूयसा ।
सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदा ॥
सद्योव्रणाश्च ये चैव चलसन्धिव्यपाश्रयाः ।
न चाराग्निविषैर्जुष्टा न वा मारुतवाहिन ॥
नान्तर्लोहितशल्याश्च तेषु सम्यग्विशोधनम् ।
पांशुरोमनखादीनि चलमस्थि भजेच्च यत् ॥
अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् ।
रुजश्च विविधा कुर्य्युस्तस्मादेतान् विशोधयेत् ॥
ततो व्रण समुन्नम्य स्थापयित्वा यथास्थितम् ।
सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा ॥
शणजक्षौमसूत्राभ्यां स्नायुा बालेन वा पुनः ।
मुर्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥
सीव्येद्गोफणिकां वापि सीव्येद्वा तुन्नसेवनीम् ।
ऋजुग्रन्थिमथो वापि यथायोगमथापि वा ॥
देशेऽल्पमांसे सन्धौ च सूची वृत्ताङ्गुलद्वयम् ।
आयता त्र्यङ्गुला त्र्यस्रा मांसले वापि पूजिता ॥

धनुर्वक्रा हिता मर्म्मफलकोषोदरोपरि।
इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः॥
कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः।
नातिदूरे निकृष्टे वा सूचीं कर्म्मणि पातयेत्॥
दूराद्रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलुञ्चनम्।
अथ क्षौमप्रतिच्छन्नं सुस्यूत प्रतिसारयेत्॥
प्रियङ्ग्वञ्जनयष्ट्याह्वरोध्रचूर्णैः समन्ततः।
शल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः॥
ततो व्रणं यथायोगं बद्धाचारिकमादिशेत्।
एतदष्टविधं कर्म्म समासेन प्रकीर्त्तितम्॥
चिकित्सितेषु कार्त्स्न्येन विस्तरस्तस्य वक्ष्यते।
हीनातिरिक्तं तिर्य्यक् च गात्रच्छेदनमात्मन.॥
एतास्वतस्रोऽष्टविधे कर्म्मणि व्यापदः स्मृताः।

अज्ञानलोभाहितवाक्ययोग-
भयप्रमोहैरपरैश्च भावैः।
यदा प्रयुञ्जीत भिषक् कुशस्त्रं
तदा सशेषान् कुरुते विकारान्॥
तं क्षारशस्त्राग्निभिरौषधैश्च
भूयोऽभियुञ्जानमयुक्तियुक्तम्।
जिजीविषुर्दूरत एव वैद्यं
विवर्ज्जयेदुग्रविषाग्नितुल्यम्॥
तदेव युक्तान्त्वतिमर्म्मसन्धीन्
हिंस्यात् शिरास्नायुमथास्थि चैव।
मूर्खप्रयुक्तं पुरुषं क्षणेन

प्राणैर्विंयुज्ज्यादथवा कथञ्चित् ॥
भ्रम. प्रलापः पतनं प्रमोहो
विचेष्टनं सलपनोष्णता च ।
स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववात-
स्तीव्रा रुजो वातकृताश्च तास्ताः ॥
मांसोदकाभं रुधिरञ्च गच्छेत्
सर्व्वेन्द्रियार्थोपरमस्तथैव ।
दशार्द्धसंख्येष्वपि हि चतेषु
सामान्यतो मर्म्मसु लिङ्गमुक्तम् ॥
सुरेन्द्रगोपप्रतिम प्रभूतं
रक्तं स्रवेद्दै चततश्च वायु' ।
करोति रोगान् विविधान् यथोक्तान्
छिन्नासु भिन्नास्वथवा शिरासु ॥
कौब्जं शरीरावयवाङ्गसाद.
क्रियास्वशक्तिस्तुमुला रुजश्च ।
चिराद्व्रणो रोहति यस्य चापि
तं स्नायुविद्धं मनुजं व्यवस्येत् ॥
शोफातिवृद्धिस्तुमुला रुजश्च
बलचयः पर्व्वसु भेदशोफौ ।
चतेषु सन्धिष्वचलाचलेषु
स्यात् सन्धिकर्म्मोपरतिश्च लिङ्गम् ॥
घोरा रुजो यस्य निशादिनेषु
सर्व्वास्ववस्थासु न शान्तिरस्ति ।
तृष्णाङ्गसादौ श्वयथुश्च रुक् च

तमस्थिविद्धं मनुजं व्यवस्येत्॥
यथाक्रमेतानि विभावयेयु-
र्लिङ्गानि मर्म्मस्वभिताड़ितेषु।
स्पर्शं न जानाति वियाच्छुवर्णो
यो मांसमर्म्मस्वभिताड़ितः स्यात्॥
आत्मानमेवाथ जघन्यकारी
शस्त्रेण यो हन्ति हि कर्म्म कुर्वन्।
तमात्मवानात्महनं कुवैद्यं
विवर्ज्जयेदायुरभीप्समानः॥
तिर्य्यक् प्रणिहिते शस्त्रे दोषाः पूर्वमुदाहृताः।
तस्मात् परिहरन् दोषान् कुर्य्याच्छस्त्रनिपातनम्॥

——

## चतुःपञ्चाशत्तमोऽध्यायः।

——

अथात आमपक्वैषणीयमध्यायं
व्याख्यास्यामः।

शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिधास्यन्ते ऽनेकाकृतयस्तैर्विलक्षणः पृथुर्ग्रथितः समो विषमो वा त्वङ्मांसस्थायी दोषसंघातः शरीरैकदेशोत्थितः शोफ इत्युच्यते। स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः।

तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः। तत्र वातशोफोऽरुणः कृष्णो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति। पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसारी चोषादयश्चात्र वेदनाविशेषा भवन्ति। शोफः पाण्डुः शुक्लो वा कठिनः शीतः स्निग्धो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति। सर्ववर्णवेदनः सन्निपातजः। पित्तवच्छोणितजोऽतिकृष्णश्च। पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च।

स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रशमयितुं क्रियाविपर्य्ययाद्बहुत्वाद्वा दोषाणां तदा पाकाभिमुखो भवति। तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय। तत्र मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्य्यं मन्दवेदनताल्पशोफता चामलक्षणमुद्दिष्टम्। सूचीभिरिव निस्तुद्यते दंश्यत इव पिपीलिकाभिस्ताभिश्च संसृप्यत इव छिद्यत इव शस्त्रेण भिद्यत इव शक्तिभिस्ताड्यत इव दण्डेन पीड्यत एव पाणिना घट्टत इव चाङ्गुल्या दह्यते पच्यत इव चाग्निक्षाराभ्यामोषचोषपरीदाहाश्च भवन्ति वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति। आध्मातवस्तिरिवाततश्च शोफो भवति त्वग्वैवर्ण्यं शोफाभिवृद्धिज्वरदाहपिपासा भक्तारुचिश्च पच्यमानलिङ्गम्। वेदनोपशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्यावपीडिते प्रत्युन्नमनं वस्ताविवोदकसञ्चरणं पूयस्य पीड़यत्येकमन्तमन्ते वावपीड़िते मुहुर्मुहुस्तोदः कण्डूरनुन्नतता च व्याधेरुपद्र-

त्वग्भ्रान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम्। कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषङ्मोहमुपैति यत्र हि त्वक्सवर्णता शीतशोफता स्थौल्यमल्परुजताश्मवद्घनता न तत्र मोहमुपेयादिति।

आमं विपच्यमानञ्च सम्यक् पक्वञ्च यो भिषक्।
जानीयात्स भवेद्वैद्यः शेषास्तस्करवृत्तयः॥

वातादृते नास्ति रुजा न पाकः
पित्तादृते नास्ति कफाच्च पूयः।
तस्मात्समस्ताः परिपाककाले
पचन्ति शोफांस्त्रय एव दोषाः॥

कालान्तरेणाभ्युदितन्तु पित्तं
कृत्वा वशे वातकफौ प्रसह्य।
पचत्यतः शोणितमेष पाको
मतोऽपरेषां विदुषां द्वितीय॥

तत्रामच्छेदे मांसशिरास्नायुस्थिसन्धिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिर्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शनं क्षतविद्रधिर्वा भवति। स यदा भयमोहाभ्यां पक्वमप्यपक्वमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः स्वमाश्रयमवदीर्य्योत्सङ्गं महान्तमवकाशं कृत्वा नाड़ीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति।

यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते।
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ॥

प्राक् शस्त्रकर्म्मणश्चेष्टं भोजयेदातुरं भिषक्।
मद्यपं पाययेन्मद्यं तीक्ष्णं योऽवेदनासहः॥
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते।
तस्मादवश्यं भोक्तव्य रोगिषूक्तेषु कर्म्मणि॥
प्राणो ह्याभ्यन्तरो नॄणा वाह्यप्राणगुणान्वितः।
धारयत्यविरोधेन शरीरं पाञ्चभौतिकम्॥

अल्पो महान् वा क्रियया विना यः
समुच्छ्रितः पाकमुपैति शोफः।
विशालमूलो विषमो विदग्धः
स कृच्छ्रता यात्यवगाढ़दोषः॥
आलेपविस्रावणशोधनैश्च
सम्यक् प्रयुक्तैर्यदि नोपशाम्येत्।
पच्येत शोघ्रं सममल्पमूलः
स पिण्डितश्चोपरि चोन्नतः स्यात्॥
कक्ष समासाद्य यथैव वह्नि-
र्वाय्वीरितः सन्दहति प्रसह्य।
तथैव पूयोऽप्यविनिःसृतो हि
मांसं शिरास्नायु च खादतीह॥

आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम्।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम्॥
पञ्चम शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते।
एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम्॥

———

# पञ्चपञ्चाशत्तमोऽध्यायः ।

---

व्रणालेपनबन्धनविधिः ।

प्रलेप आद्य उपक्रम एष सर्वशोफानां सामान्यः प्रधानतमश्च तञ्च प्रति रोगं वक्ष्यामि । ततो बन्धः प्रधानं तेन शुद्धिर्व्रणरोपणमस्थिसन्धिस्थैर्य्यञ्च तत्र प्रतिलोममालिम्पेन्नानुलोमं प्रतिलोमे हि सम्यगौषधमवतिष्ठतेऽनुप्रविशति रोमकूपान् स्वेदवाहिभिः शिरामुखैश्च वीर्य्यं प्राप्नोति । न च शुष्यमाणमुपेक्षेतान्यत्र पीडयितव्यात् । शुष्को ह्यपार्थकोऽरुष्करश्च । स त्रिविधः प्रलेपः प्रदेह आलेपश्च तेषामन्तरं प्रलेपः शीतस्तनुरविशोषी विशोषी च । मध्यमोऽत्रालेपः । तत्र रक्तपित्तप्रसादकृदालेपः प्रदेहो वातश्लेष्मप्रशमनः सन्धानः शोधनो रोपणः शोफवेदनापहश्च तस्योपयोगः क्षताक्षतेषु । यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति सञ्ज्ञां लभते निरुद्धालेपनसञ्ज्ञस्तेनास्रावसन्निरोधो मृदुता पूतिमांसापकर्षणमन्तर्निर्दोषता व्रणशुद्धिश्च भवति ।

अविदग्धेषु शोफेषु हितमालेपनं भवेत् ।
यथास्वं दोषशमनं दाहकण्डूरुजापहम् ॥
त्वक्प्रसादनमेवाग्र्यं मांसरक्तप्रसादनम् ।
दाहप्रशमनं श्रेष्ठं तोदकण्डूविनाशनम् ॥
मर्म्मदेशेषु ये रोगा गुह्येष्वपि तथा नृणाम् ।
संशोधनाय तेषां हि कुर्य्यादालेपनं भिषक् ॥
षड्भागं पैत्तिके स्नेहं चतुर्भागन्तु वातिके ।

अष्टभागन्तु कफजे स्नेहमात्रां प्रदापयेत् ॥

तस्य प्रमाणमार्द्रमाहिषचर्म्मोत्सेधमुपदिशन्ति। न चालेप रात्रौ प्रयुञ्जीत माभूच्छैत्यपिहितोष्मणस्तदनिर्गमाद्विकारप्रवृत्तिरिति॰।

प्रदेहसाध्ये व्याधौ तु हितमालेपनं दिवा ।
पित्तरक्ताभिघातोत्थे सविषे च विशेषतः ॥
न च पर्य्युषित लेप कदाचिदवचारयेत् ।
उपर्य्युपरि लेपन्तु न कदाचित् प्रदापयेत् ॥
उष्माणं वेदना दाहं घनत्वाज्जनयेत् स हि ।
न च तेनैव लेपेन प्रदेह दापयेत् पुन. ॥
शुष्कभावात् स निर्वीर्य्यो युक्तोऽपि स्यादपार्थक' ।

अत ऊर्द्ध्वं व्रणबन्धनद्रव्याख्युपदेक्ष्यामः। तद्यथा, चौमकार्पासाविकदुकूल-कौशेयपत्रोर्णचीनपट्टचर्म्मान्तर्वल्कलालाबूशकललताविदलरज्जुतूलफलसन्तानिकालौहानीति तेषा व्याधि काल चावेक्ष्योपयोग. प्रकरणतश्चैषामादेश. ।

तत्र कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिकायमकखट्टाचीनविबन्धवितानगोफणाः पञ्चाङ्गी चेति चतुर्द्दश बन्धविशेषाः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। तत्र कोशमङ्गुष्ठाङ्गुलिपर्वसु विदध्यात्। दामसम्बाधेऽङ्गे। सन्धिकूर्चकभ्रूस्तनान्तरतलकर्णेषु स्वस्तिकम्। अनुवेल्लितन्तु शाखासु। ग्रीवामेढ्रयोः प्रतोलीम्। वृत्तेऽङ्गे मण्डलम्। अङ्गुष्ठाङ्गुलिमेढ्राग्रेषु स्थगिकाम्। यमलव्रणयोर्यमकम्। हनुशङ्खगण्डेषु खट्टाम्। अपाङ्गयोश्चीनम्। पृष्ठोदरोरःसु विबन्धम्। मूर्द्ध्नि वितानम्।

चिबुकनासौष्ठांसबस्तिषु गोफणाम्। जत्रुण ऊर्द्धं पञ्चाङ्गीमिति। यो वा यस्मिन् शरीरप्रदेशे सुनिविष्टो भवति त तस्मिन् विदध्यात्। यन्त्रणमत ऊर्द्धमधस्तिर्य्यक् च।

तत्र घनां कवलिकां दत्त्वा वामहस्तपरिक्षिप्तमृजुमनाविद्धमसङ्कुचित मृदु पट्टं निवेश्य बध्नीयात्। न च व्रणस्योपरि कुर्य्याद्ग्रन्थिमाबाधकरं वा।

न च विकेशिकौषधे अतिस्निग्धे अतिरूक्षे विषमे वा कुर्वीत यस्मादतिस्नेहात् क्लेदो रौक्ष्याच्छेदो दुर्न्यासाद्व्रणवर्त्मावघर्षणमिति। तत्र व्रणायतनविशेषाद्बन्धविशेषस्त्रिविधो भवति गाढ़ः समः शिथिल इति।

पीड़यन्नरुजो गाढ़ः सोच्छ्वासः शिथिलः स्मृतः।
नैव गाढ़ो न शिथिलः समो बन्धः प्रकीर्त्तितः॥

तत्र स्फिक्कुक्षिकक्षावङ्क्षणोरःशिरःसु गाढ़ः। शाखावदनकर्णकण्ठमेढ्रमुष्कपृष्ठपार्श्वोदरोरःसु समः। अक्ष्णोः सन्धिषु च शिथिल इति। तत्र पैत्तिकं गाढ़स्थाने समं बध्नीयात् समस्थाने शिथिलं शिथिलस्थाने नैवं शोणितदुष्टञ्च। श्लैष्मिकं शिथिलस्थाने सम समस्थाने गाढ़ं गाढ़स्थाने गाढ़तरमेव वातदुष्टञ्च। तत्र तैत्तिकं शरदि ग्रीष्मे हिरत्रो बध्नीयाद्रक्तोपद्रुतमप्येवं श्लैष्मिकं हेमन्तवसन्तयोस्त्र्यहाद्वातोपद्रुतमप्येवम्। एवमभ्यूह्य बन्धविपर्य्ययञ्च कुर्वीत। तत्र समशिथिलस्थानेषु गाढ़बन्धे विकेशिकौषधनैरर्थक्यं शोफवेदनाप्रादुर्भावश्च। गाढ़समस्थानेषु शिथिलबन्धे विकेशिकौषधपतनं पट्टसञ्चाराद्व्रणबर्त्मावघर्षणमिति। गाढ़शिथिलस्थानेषु समबन्धे च गुणाभाव इति।

अविपरीतबन्धे वेदनोपशान्तिरसृक्प्रसादो मार्दवञ्च। अबध्यमानो दंशमशकतृणकाष्ठोपलपांशुशीतवातातपप्रभृतिभिर्विशेषैरभिहन्यते व्रणो विविधवेदनोपद्रुतश्च दुष्टतामुपैत्यालेपनादीनि चास्य विशोषमुपयान्ति।

चूर्णितं मथितं भग्नं विश्लिष्टमतिपातितम्।
अस्थिस्नायुशिराच्छिन्नमाशु बन्धेन रोहति॥
सुखमेवं व्रणी शेते सुखं गच्छति तिष्ठति।
सुखशय्यासनस्थस्य क्षिप्रं संरोहति व्रणः॥

अबन्ध्याः पित्तरक्ताभिघातविषनिमित्ता यदा च शोफदाहपाकरागवेदनाभिभूता क्षाराग्निदग्धाः पाकात् प्रकुपिताः प्रविशीर्णमांसाश्च भवन्ति।

कुष्ठिनामग्निदग्धाना पिडका मधुमेहिनाम्।
कर्णिकाश्चान्दुरुविषे विषजुष्टव्रणाश्च ये॥
मांसपाके न बध्यन्ते गुदपाके च दारुणे।
स्वबुद्ध्या चापि विभजेत् कृत्याकृत्यांश्च बुद्धिमान्॥
देशं दोषञ्च विज्ञाय व्रणञ्च व्रणकोविदः।
ऋतूंश्च परिसंख्याय ततो बन्धान्निवेशयेत्॥

---

# षट्पञ्चाशत्तमोऽध्यायः।

---

अथातो व्रणितोपासनीयमध्यायं
व्याख्यास्यामः।

व्रणिनः प्रथममेवागारमन्विच्छेत्तच्चागारं प्रशस्तवास्त्वादिकं कार्य्यम्।

प्रशस्तवास्तुनि गृहे शुचावातपवर्जिते।
निवाते न च रोगाः स्युः शारीरागन्तुमानसाः॥

तस्मिन् शयनं स्वास्तीर्णमसम्बाधं मनोज्ञं कुर्वीत।
सुखचेष्टाप्रचारः स्यात् स्वास्तीर्णे शयने व्रणी॥

तस्मिन् सुहृद्भिरनुकूलैः प्रियंवदैरुपास्यमानो यथेष्टमासीत।

सुहृदो विक्षिपन्त्याशु कथाभिर्व्रणवेदनाः।
आश्वासयन्तो बहुशस्त्वनुकूलाः प्रियंवदाः॥

न च दिवानिद्रावशगः स्यात्।

दिवास्वप्नाद्व्रणे कण्डूर्गात्राणां गौरवं तथा।
श्वयथुर्वेदना रागः स्रावश्चैव भृशं भवेत्॥

उत्थानसंवेशनपरिवर्त्तनचङ्क्रमणोच्चैर्भाषणादिषु चात्मचेष्टास्वप्रमत्तो व्रणं संरक्षेत्।

स्थानासनं चंक्रमणं यानयानातिभाषणम्।
व्रणवान् न निषेवेत शक्तिमानपि मानवः॥

उत्थानाद्यासनं स्थानं शय्यां चातिनिषेविता।

प्राप्नुयान्मारुतादङ्गे रुजस्तस्माद्विवर्जयेत् ॥

गम्यानाञ्च स्त्रीणां सन्दर्शनसम्भाषणसंस्पर्शनानि दूरतः परिहरेत्।

स्त्रीदर्शनादिभिः शुक्रं कदाचिच्चलित स्रवेत्।

ग्राम्यधर्म्मकृतान् दोषान् सोऽससर्गेऽथवाप्नुयात् ॥

नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ललवणकटुकगुड़पिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदककृशरापायसदधिदुग्धतक्रप्रभृतीन् परिहरेत्।

तक्रान्तो नवधान्यादिर्योऽयं वर्गः प्रकीर्त्तितः।

दोषसञ्जननो ह्येष विज्ञेयः पूयवर्द्धनः ॥

मद्यपश्च मैरेयारिष्टासवसीधुसुराविकारान् परिहरेत्।

मद्यमम्लं तथा रूक्षं तीक्ष्णमुष्णञ्च वीर्य्यतः।

आशुकारि च तत्पीतं क्षिप्रं व्यापादयेद्व्रणम् ॥

वातातपरजोधूमावश्यायातिसेवनातिभोजनानिष्टश्रवणदर्शनेर्ष्यामर्षभयक्रोधशोकध्यानरात्रिजागरणविषमाशनानशनशयनोपवासवाग्व्यायामस्थानचंक्रमणशीतवातविरुद्धाशनाजीर्णमक्षिकाद्या बाधाः परिहरेत्।

व्रणिनः संप्रतप्तस्य कारणैरेवमादिभिः।

क्षीणशोणितमांसस्य भुक्तं सम्यक् न जीर्य्यति ॥

अजीर्णात्पवनादीनां विभ्रमो बलवान् भवेत्।

ततः शोफरुजास्रावदाहपाकानवाप्नुयात् ॥

सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च।

द्विरह्नः कारयेद्रूपं दशरात्रमतन्द्रितः ॥
व्यजेत बालव्यजनैर्व्रणं न च विघट्टयेत् ।
न तुदेन्न च कण्डूयेच्छयानः परिपालयेत् ॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥
तण्डुलीयकजीवन्तीसुनिषण्णकवास्तुकैः ।
बालमूलकवार्त्ताकपटोलैः कारवेल्लकैः ॥
सदाडिमैः सामलकैर्घृतभृष्टैः ससैन्धवैः ।
अन्यैरेवंगुणैर्वापि मुद्गादीनां रसेन वा ॥
सक्तून् विलेपीं कुल्माषं जलञ्चापि शृतं पिबेत् ॥
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वापात् ताश्च मृत्युश्च मैथुनात् ॥
दिवा न निद्रावशगो निवातगृहगोचरः ।
व्रणी वैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥
एवं वृत्तसमाचारो व्रणी सम्पद्यते सुखी ।
आयुश्च दीर्घमाप्नोति धन्वन्तरिवचो यथा ॥

———

# सप्तपञ्चाशत्तमोऽध्यायः ।

---

अथातो व्रणास्रावविज्ञानीयमध्यायं
व्याख्यास्यामः ।

त्वङ्मांसशिरास्नाय्वस्थिसन्धिकोष्ठमर्म्माणीत्यष्टौ व्रण-वस्तूनि । अत्र सर्वव्रणसन्निवेशः । तत्राद्यैकवस्तुसन्निवेशा त्वग्भेदी व्रण. सूपचरः शेषाः स्वयमवदीर्य्यमाणा दुरुप-चराः । तत्रायतश्चतुरस्रो वृत्तस्त्रिपुटक इति व्रणाकृति-समास. । शेषास्तु विकृताकृतयो दुरुपक्रमा भवन्ति । सर्वं एव व्रणाः क्षिप्रं संरोहन्त्यात्मवतां सुभिषग्भिश्चोपक्रान्ताः । अनात्मवतामज्ञैश्चोपक्रान्ताः प्रदुष्यन्ति प्रवृद्धत्वाद्दोषाणाम् । तत्रातिसंवृतोऽतिविवृतोऽतिकठिनोऽतिमृदुरुत्सन्नोऽवसन्नो-ऽतिशीतोऽत्युष्ण. कृष्णरक्तपीतशुक्लादीनां वर्णानामन्य-तमवर्णो भैरव पूतिपूयस्राव्य ्मार्ग्युत्सङ्गमनोज्ञदर्शन-गन्धोऽत्यर्थं वेदनावान् दाहपाकरागकण्डूशोफपिडकोप-द्रुतोऽत्यर्थं दुष्टशोणितास्रावी दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि । तस्य दोषोच्छ्रायेण षट्त्वं विभज्य यथास्वं प्रतीकारे प्रयतेत ।

अत ऊर्द्ध्वं सर्वस्रावान् वक्ष्यामः । तत्र घृष्टासु छिन्नासु वा त्वक्षु स्फोटेषु भिन्नेषु सलिलप्रकाशो भवत्यास्रावः किञ्चि-द्विस्रः पीतावभासश्च । मांसगतः सर्पि.प्रकाशः सान्द्रः श्वेतः पिच्छिलश्च । शिरागतः सद्यश्छिन्नासु शिरासु रक्तातिप्रवृत्तिः

पक्वासु च तोयनाड़ीभिरिव तोयागमनं पूयस्यास्र।वश्चात्र तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावोऽवश्यायप्रतिमश्च । स्नायुगतः स्निग्धो घनः सिंहाणकप्रतिमः सरक्तश्च । अस्थिगतोऽस्थन्यभिहते स्फुटिते भिन्ने दोषावदारिते वा दोषभक्षितत्वादस्थि निःसारं शुक्तिधौतमिवाभाति । आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च । सन्धिगतः पीड्यमानो न प्रवर्त्तत आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च स्रवति । आस्रावश्चात्र पिच्छिलोऽवलम्बी सफेनपूयरुधिरोन्मथितश्च कोष्ठगतोऽसृङ्मूत्रपुरीषपूयोदकानि स्रवति । मर्म्मगतस्त्वगादिष्ववरुद्धत्वान्नोच्यते । तत्र त्वगादिगतानामास्रावाणां यथाक्रमं पारुष्यश्यावावश्यायदधिमस्तुक्षारोदकमांसधावनपुलाकोदकसन्निभत्वानि मरुताद्भवन्ति । पित्तान्गोमेदगोमूत्रभस्मशङ्खकषायोदकमाध्वीकतैलसन्निभत्वानि । पित्तवद्रक्तादतिविस्रत्वञ्च । कफान्नवनीतकासीसमज्जपिष्टतिलनारिकेलोदकवराहवसासन्निभत्वानि सन्निपातात् तिलनारिकेलोदकेर्वारुकरसकाञ्जिकप्रसादारुकोदकप्रियङ्गुफलयकृन्मुद्गयूषसवर्णत्वानीति ।

पक्वाशयादसाध्यस्तु पुलाकोदकसन्निभः ।
क्षारोदकनिभः स्रावो वर्ज्यो रक्ताशयात स्रवन् ॥
आमाशयात् कलायाम्भोनिभश्च त्रिकसन्धिजः ।
स्रावानेतान् परीक्ष्यादौ ततः कर्म्माचरेद्भिषक् ॥

अत ऊर्द्ध्वं सर्व्वव्रणवेदना वक्ष्यामः। तोदनभेदनताड़नच्छेदनायमनमन्थनविक्षेपणचुमुचुमायननिर्दहनाव-

भञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषण-विकिरणपूरणस्तम्भनस्वप्नावकुञ्चनाङ्कुशिकाः सम्भवन्ति। अनिमित्तविविधवेदनाप्रादुर्भावो वा मुहुर्मुहुर्यत्रागच्छन्ति वेदनाविशेषास्तं वातिकमिति विद्यात्। ओषाचोषपरिदाहधूमायनानि यत्र गात्रमङ्गारावकीर्णमिव पच्यते यत्र चोष्माभिवृद्धिः क्षते क्षारावसिक्तवच्च वेदनाविशेषास्तं पैत्तिकमिति विद्यात्। पित्तवद्रक्तसमुत्थं जानीयात्। कण्डूर्गुरुत्वं सुप्तत्वमुपदेहोऽल्पवेदनत्वं स्तम्भः शैत्यञ्च यत्र तं श्लैष्मिकमिति विद्यात्। यत्र सर्वासां वेदनानां समुत्पत्तिस्तं सान्निपातिकमिति।

अत ऊर्द्धं व्रणवर्णान् वक्ष्यामः। भस्मकपोतास्थिवर्णः परुषोऽरुणः कृष्ण इति मारुतजस्य। नीलः पीतो हरितः श्यावः कृष्णो रक्तः कपिलः पिङ्गल इति रक्तपित्तसमुत्थयोः। श्वेतः स्निग्धः पाण्डुरिति श्लेष्मजस्य। सर्ववर्णोपेतः सान्निपातिक इति।

न केवलं व्रणेषूक्तो वेदनावर्णसंग्रहः।
सर्वशोफविकारेषु व्रणवल्लक्षयेद्भिषक्॥

---

# अष्टशत्त्वारिंशत्तमोऽध्यायः ।

---

अथ कृत्याकृत्यविधिः ।

तत्र वयःस्थानां दृढ़ानां प्राणवतां सत्त्ववताञ्च सुचिकित्स्या व्रणाः एकस्मिन् वा पुरुषे यत्रैतद्गुणचतुष्टयं तस्य सुखसाधनीयतमाः । तत्र वयःस्थानां प्रत्यग्रधातुत्वादाशु व्रणा रोहन्ति । दृढ़ानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्य्यमाणं शिरास्नाय्वादिविशेषान् न प्राप्नोति । प्राणवतां वेदनाभिघाताहारयन्त्रणादिभिर्न ग्लानिरुत्पद्यते । सत्त्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति । तस्मादेतेषां सुखसाधनीयतमाः । त एव विपरीतगुणा वृद्धकृशाल्पप्राणभीरुषु द्रष्टव्याः । स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोषोदरजत्रुमुखाभ्यन्तरसंस्थाः सुखरोपणीया व्रणाः । अक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्च दुश्चिकित्स्याः । अधोभागाश्चोर्द्ध्वभागनिर्वाहिणो रोमान्तोपनखमर्म्मजङ्घास्थिसंश्रिताश्च । भगन्दरमपि चान्तर्मुखं सेवनीकूटकास्थिसंश्रितम् ।

कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ॥

अवपाटिकानिरुद्धप्रकाशसन्निरुद्धगुदजठरग्रन्थिक्षतक्रिमयः प्रतिश्यायजाः कोष्ठजाश्च लङ्घोषिणां प्रमेहिनां वा

ये परिघ्नतेषु दृश्यन्ते शर्करासिकतामेहवातकुण्डलिकाष्ठीलादन्तशर्करोपकुशकण्ठशालूकनिष्कोषणदूषिताश्च दन्तवेष्टा विसर्पास्थिच्छतोरःक्षतव्रणग्रन्थिप्रभृतयश्च याप्याः।

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम्॥
यापनीयं विजानीयात् क्रिया धारयते तु यम्।
क्रियायान्तु निवृत्तायां सद्य एव विनश्यति॥
प्राप्ता क्रिया धारयति याप्यव्याधितमातुरम्।
प्रपतिष्यदिवागारं विष्कम्भः साधुयोजितः॥

अत ऊर्द्ध्वमसाध्यान् वक्ष्याम। मांसपिण्डवदुन्नताः प्रसेकिनोऽन्तः पूयवेदनावन्तोऽश्वापानवदुद्वृत्तौष्ठाः। केचित् कठिना गोशृङ्गवदुन्नतस्तदुमांसप्ररोहाः। अपरे दुष्टरुधिरास्राविणस्तनुपिच्छिलास्राविणो वा मध्योन्नताः। केचिदवसन्नशुषिरपर्य्यन्ताः। शणतूलवत् स्नायुजालवन्तो दुर्दर्शा वसामेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः। पीतासितमूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः। क्षीणमांसानाञ्च सर्वतोगतयश्चाणुमुखा मांसबुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःकण्ठस्थाः। क्षीणमांसानाञ्च पूयरक्तनिर्वाहिणोऽरोचकाविपाककासश्वासोपद्रवयुक्ताः। भिन्ने वा शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति।

वसा मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्।
आगन्तुस्तु व्रणः सिध्येन्न सिध्येद्दोषसम्भवः॥
अमर्म्मोपहिते देशे शिरासन्ध्यस्थिवर्जिते।

विकारो योऽनुपर्य्येति तदसाध्यस्य लक्षणम् ॥
क्रमेणोपचयं प्राप्य धातूननुगतः शनैः ।
न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः ॥
स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च ।
निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा ॥
अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते ।
अबद्धमूलः क्षुपको यद्वदुत्पाटने सुखः ॥
त्रिभिर्द्दोषैरनाक्रान्तः श्यावौष्ठः पिडकः समः ।
अवेदनो निरास्रावो व्रणः शुद्ध इहोच्यते ॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ।
स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ॥
रूढ़वर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ।
त्वक्सवर्णं समतलं सम्यग्रूढ़ं विनिर्द्दिशेत् ॥
दोषप्रकोपाद्व्यायामादभिघातादजीर्णतः ।
हर्षात् क्रोधाद्भयाद्वापि व्रणो रूढ़ोऽपि दीर्य्यते ॥

———

# ऊनषष्टितमोऽध्यायः ।

---

अथातः प्रनष्टशल्यविज्ञानीयमध्यायं
व्याख्यास्यामः ।

शल श्वल आशुगमने धातुस्तस्य शल्यमिति रूपम् । तद्द्विविधं शारीरमागन्तुकञ्च । सर्वशरीराबाधकर शल्यं तदिहोपदिश्यते । तत्र शारीर रोमनखादिधातवोऽन्नमला दोषाश्च दुष्टाः । आगन्त्वपि शारीरशल्यव्यतिरेकेण यावन्तो भावा दुःखमुत्पादयन्ति । अधिकारो हि लोहवेणुवृक्ष-तृणशृङ्गास्थिमयेषु तत्रापि विशेषतो लोहमयेष्वेव विशस-नार्थोपपन्नत्वाल्लोहस्य लोहानामपि दुर्वारत्वादणुमुखत्वा-द्दूरप्रयोजनकरत्वाच्च शर एवाधिकृतः स द्विविधः कर्णी श्लक्ष्णश्च । प्रायेण विविधवृक्षपत्रपुष्पफलतुल्याकृतयो व्या-ख्याता व्यालमृगपक्षिवक्त्रसदृशाश्च । सर्वशल्यानान्तु मह-तामणूनां वा पञ्चविधो गतिविशेष ऊर्द्धमधोऽर्वाचीनस्ति-र्य्यगृजुरिति । तानि यदा वेगक्षयात् प्रतिघाताद्वा त्वगा-दिषु व्रणवस्तुष्ववतिष्ठन्ते धमनीस्रोतोऽस्थितद्विवरपेशीप्र-भृतिषु वा शरीरप्रदेशेषु तत्र शल्यलक्षणमुच्यमानमुपधारय । तत्तु द्विविधं सामान्यं वैशेषिकञ्च । श्यावं पिडकावन्तं शोफवेदनावन्तं मुहुर्मुहुः शोणितास्रविणं बुद्बुदवदुन्नतं मृदुमांसञ्च व्रणं जानीयात् सशल्योऽयमिति सामान्यलक्ष-णमेतदुक्तम् । वैशेषिकन्तु त्वग्गते विवर्णः शोफो भवत्यायतः

कठिनश्च। मांसगते शोफाभिवृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषपाकौ च। पेश्यन्तरस्थेऽप्येतदेव चोषशोफवर्ज्जम्। शिरागते शिराध्मानं शिराशूल शिराशोफश्च। स्नायुगते स्नायुजालोत्क्षेपणं संरम्भश्चोग्रा रुक् च। स्रोतोगते स्रोतसा स्वकर्म्मगुणहानिः। धमनीस्थे सफेन रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यङ्गमर्द्दः पिपासा हृल्लासश्च। अस्थिगते विविधवेदनाप्रादुर्भावः शोफश्च। अस्थिविवरगतेऽस्थिपूर्णतास्थितोदः संहर्षो बलवांश्च। सन्धिगतेऽस्थिवच्चेष्टोपरमश्च। कोष्ठगते आटोपानाहौ मूत्रपुरीषाहारादर्शनञ्च व्रणमुखात् मर्म्मगते मर्म्मविद्धवच्चेष्टते सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यस्पष्टानि भवन्ति। महान्ति स्वल्पानि वा शुद्धदेहानामनुलोमसन्निविष्टानि रोहन्ति विशेषतः कण्ठस्रोतःशिरात्वक्पेश्यस्थिविवरेषु दोषप्रकोपव्यायामाभिघातेभ्यः प्रचलितानि पुनर्बाधन्ते।

तत्र त्वक्प्रनष्टे स्निग्धस्विन्नायां मृत्पाषाणयवगोधूमगोमयमृदितायां त्वचि यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्। स्त्यानघृतमृच्चन्दनकल्कैर्वा प्रदिग्धायां शल्योष्मणाशु विसरति घृतमुपशुष्यति वा लेपो यत्र तत्र शल्यं विजानीयात्। मांसप्रनष्टे स्नेहस्वेदादिभिः क्रियाविशेषैरविरुद्धैरातुरमुपपादयेत्। कर्शितस्य तु शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरम्भो वेदना वा भवति तत्र च शल्यं विजानीयात्। कोष्ठास्थिसन्धिपेशीविवरेष्ववस्थितमेवं परीक्षेत। शिराधमनीस्रोतःस्नायुप्रनष्टे खण्डचक्रसंयुक्ते याने व्याधितमारोप्याशु विषमेऽध्वनि यायाद्यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्।

अस्थिप्रनष्टे तु स्नेहस्वेदोपपन्नान्यस्थीनि बन्धनपीडनाभ्यां भृशमुपचरेद्यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्। सन्धिप्रनष्टे तु स्नेहस्वेदोपपन्नान् सन्धीन् प्रसारणाकुञ्चनबन्धनपीडनैर्भृशमुपचरेद्यत्र संरम्भो वेदना वा भवति तत्र शल्यमिति जानीयात्। मर्म्मप्रनष्टे त्वनन्यभावान्मर्म्मणामुक्तं परीक्षणं भवति। सामान्यलक्षणमपि च हस्तिस्कन्धाश्वपृष्ठपर्वतद्रुमारोहण-धनुर्व्यायामद्रुतयाननियुद्धाध्वगमनलङ्घनप्रतरणप्लवनव्यायामैर्जृम्भोद्गार–कासक्षवथुष्ठीवनहसनप्राणायामैर्वातमूत्रपुरीषशुक्रोत्सर्गैर्वा यत्र संरम्भो वेदना वा भवति तत्र शल्यं जानीयात्।

यस्मिंस्तोदादयो देशे सुप्तता गुरुतापि च।
घट्टते बहुशो यत्र स्रूयते तुद्यतेऽपि च॥
आतुरश्चापि यं देशमभीक्ष्णं परिरक्षति।
संवाह्यमानो बहुशस्तत्र शल्यं विनिर्दिशेत्॥
अल्पबाधमशूनञ्च नीरुजं निरुपद्रवम्।
प्रसन्नं मृदुपर्य्यन्तं निराघट्टमनुन्नतम्॥
एषण्या सर्वतो दृष्ट्वा यथामार्गं चिकित्सकः।
प्रसाराकुञ्चनाभ्यां न निःशल्यमिति निर्द्दिशेत्॥
अस्थ्यात्मकं भज्यते तु शल्यमन्तस्तु शीर्य्यते।
प्रायो निर्भुज्यते शाङ्गमायसञ्चेति निश्चयः॥
वार्क्षवैणवतार्णानि निर्ह्रियन्ते तु नो यदि।
पचन्ति रक्तं मांसञ्च क्षिप्रमेतानि देहिनाम्॥
कानकं राजतं ताम्रं रैतिकं त्रपुसीसजम्।
चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात्॥

स्वभावशीता मृदवो ये चान्येऽपीदृशा मताः।
द्रवीभूताः शरीरेऽस्मिन्नैकत्वं यान्ति धातुभिः॥
विषाणदन्तकेशास्थिवेणुदारूपलानि तु।
शल्यानि न विशीर्य्यन्ते शरीरे मृण्मयानि च॥

द्विविधं पञ्चगतिकं त्वगादिव्रणवस्तुषु।
यो वेत्त्यधिष्ठितं शल्यं स राज्ञः कर्त्तुमर्हति॥

शल्यं द्विविधमवबद्धमनवबद्धञ्च। तत्र समासेनाबद्धशल्योद्धरणार्थं पञ्चदशहेतून् वक्ष्यामः। तद्यथा, स्वभावः पाचनं भेदनं दारणं पीडनं प्रमार्जनं निर्ध्मापनं वमन विरेचनं प्रक्षालनं प्रतिमर्षः प्रवाहणमाचूषणमयस्कान्तो हर्षश्चेति। तत्राश्रुक्षवथूद्गारकासमूत्रपुरीषानिलैः स्वभावबलप्रवृत्तैर्नयनादिभ्यः पतति। सावगाढं शल्यमभिदह्यमानं पाचयित्वा प्रकोपात्तस्य पूयशोणितवेगाद्गौरवाद्वा पतति। पक्वमभिद्यमानं भेदयेद्दारयेद्वा भिन्नमनिरस्यमानं पीड़नीयैः पीड़येत् पाणिभिर्वा। अणून्यक्षिशल्यानि परिषेचनाध्मापनैर्वालवस्त्रपाणिभिः प्रमार्जयेत्। आहारशेषश्लेष्महीनाणुशल्यानि श्वसनोत्कासनप्रधमनैर्निर्द्धमेत्। अन्नशल्यानि वमनाङ्गुलिप्रतिमर्षप्रभृतिभिर्विरेचनैः पक्वाशयगतानि। व्रणदोषाश्रयगतानि प्रक्षालनैः। वातमूत्रपुरीषगर्भसङ्गेषु प्रवाहणमुक्तम्। मारुतोदकसविषरुधिरदुष्टस्तन्येष्वाचूषणमास्येन विषाणैर्वा। अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन। हृदयावस्थितमनेककारणोत्पन्नं शोकशल्यं हर्षेणेति। सर्वशल्यानान्तु महतामणूनां वा द्वावेवाहरणहेतू भवतः प्रतिलोमोऽनुलोमश्च तत्र

प्रतिलोममवाचीनमानयेदनुलोमं पराचीनम्। उत्तुण्डितं छित्त्वा निर्घातयेच्छेदनीयमुखान्यपि कुक्षिवक्षःकक्षावङ्क्षणपर्शुकान्तरपतितानि च हस्तशक्यं यथामार्गं हस्तेनैवापहर्त्तुं प्रयतेत।

अनुत्तुण्डितशल्यानि छेदनीयमुखानि च।
अनिर्घात्यानि जानीयाद्भूयश्छेदानुबन्धतः॥
हस्तेनापहर्त्तुमशक्यं विशस्य शस्त्रेण यन्त्रेण वापहरेत्।
शीतलेन जलेनैवं मूर्च्छन्तमवसेचयेत्।
संरक्षेदस्य मर्म्माणि मुहुराश्वासयेच्च तम्॥

ततः शल्यमुद्धृत्य निर्लोहितं व्रणं कृत्वा स्वेदार्हमग्निघृतप्रभृतिभिः संस्वेद्य विदह्य प्रदिह्य सर्पिर्मधुभ्यां बद्धाचारिकमुपदिशेत्। शिरास्नायुविलग्नं शलाकादिभिर्विमोच्यापनयेत् श्वयथुग्रस्तवारङ्गं समवपीड्य श्वयथुं दुर्बलवारङ्गं कुशादिभिर्बद्ध्वा। हृदयमभितो वर्त्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद्यथामार्गं दुरपहरमन्यतोऽपबाध्यमानं पाटयित्वोद्धरेत्। अस्थिविवरप्रविष्टमस्थिविदष्टं वावगृह्य पादाभ्यां यन्त्रेणापहरेदशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारङ्गं प्रविभुज्य धनुर्गुणैर्बद्ध्वैकतश्चास्य पञ्चाङ्गामुपसंयतस्याश्ववक्त्रकटके वा बध्नीयादथैनं कशया ताडयेद्यथोन्नमयन् शिरोवेगेन शल्यमुद्धरति। दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद्बद्ध्वोद्धरेत्। अस्थिदेशोत्तुण्डितमष्ठीलाश्ममुद्गराणामन्यतमस्य प्रहारेण विचाल्य यथामार्गमेव यन्त्रेण विमर्द्दितकर्णानि कर्णवन्त्यनाबाधकरदेशोत्तुण्डितानि

पुरस्तादेव जातुषे कण्ठासक्ते कण्ठे नाडीं प्रवेश्याग्नितप्तांश्च शलाकां तथाऽऽस्थाप्य शीताभिरद्भिः परिषिच्य स्थिरीभूतमुद्धरेत्। अजातुषे जतुमधूच्छिष्टलिप्तया शलाकया पूर्वकल्पेनेत्येके। अस्थिशल्यमन्यद्वा तिर्य्यक्कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठाच्च पूर्णकोष्ठं वामयेत्। वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्। मृदुना वा दन्तधावनकूर्च्चकेनापहरेत् प्रणुदेद्वान्तःक्षतकण्ठाय च मधुसर्पिषी लेढुं प्रयच्छेत्रिफलाचूर्णं वा मधुशर्करामिश्रम्। उदकपूर्णमवाक्‌शिरसमवपीडयेद्वनीयाद्वामयेद्वा भस्मराशौ वा निखनेदामुखात्। ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धस्कन्धे मुष्टिनाभिहन्यात् स्नेहं मद्यं पानीयं वा पाययेत्। बाहुरज्जुलतापाशशल्ये तु कण्ठपीडनाद्वायुः प्रकुपितः श्लेष्माणं कोपयित्वा स्रोतो निरुणद्धि लालास्रावं फेनागमनं संज्ञानाशञ्चापादयति। तमभ्यज्य संस्वेद्य शिरोविरेचनं तस्मै तीक्ष्णं दद्याद्रसञ्च वातघ्नं विदध्यादिति।

शल्याकृतिविशेषांश्च स्थानान्यावेक्ष्य बुद्धिमान्।
तथा यन्त्रपृथक्त्वञ्च सम्यक् शल्यमथाहरेत्॥
कर्णवन्ति तु शल्यानि दुःखाहार्य्याणि यानि च।
आददीत भिषक् तस्मात् तानि युक्त्या समाहितः॥
एतैरुपायैः शल्यन्तु नैव निर्घात्यते यदि।
मत्या निपुणया वैद्यो यन्त्रयोगैश्च निर्हरेत्॥
शोथपाकौ रुजश्चोग्राः कुर्य्याच्छल्यमनिर्हृतम्।
वैकल्यं मरणञ्चापि तस्माद्यत्नाद्विनिर्हरेत्॥

# षष्ठितमोऽध्यायः।

---

अथ धात्वादिमारणोपयुक्तान्
पुटप्रकारानाह ।

### महापुटम् ।

गम्भीरे विस्तृते कुण्डे द्विहस्ते चतुरस्रके ।
वनोपलसहस्रेण पूरिते पुटनौषधम् ॥
कोष्ठे रुद्धं प्रयत्नेन गोविष्ठोपरि धारयेत् ।
वनोपलसहस्रार्द्धं कोष्ठिकोपरि निक्षिपेत् ॥
वह्निं विनिक्षिपेत्तत्र महापुटमिति स्मृतम् ॥

### गजपुटम् ।

सपादहस्तमानेन कुण्डे निम्ने तथायते ।
वनोपलसहस्रेण पूर्णे मध्ये विधारयेत् ॥
पुटनद्रव्यसंयुक्तां कोष्ठिकां मुद्रितां मुखे ।
अधोऽर्द्धानि करण्डानि अर्द्धान्युपरि निःक्षिपेत् ॥
एतद्गजपुटं प्रोक्तं ख्यातं सर्वपुटोत्तमम् ।
साधारणनराङ्गुल्या त्रिंशदङ्गुलको गजः ॥
अन्यच्च । गजप्रमाणगम्भीरं शुषिरं क्रमशस्ततम् ।
वितस्तिद्वितयमुखं त्रिवितस्तितलं तथा ॥
एवं विधाय यत्नेन विश्रिरस्ककरीरवत् ।
तस्य पादत्रयं सम्यक् पूरयित्वा वनोपलैः ॥
भैषज्यकोष्ठिकां तत्र स्थापयित्वा ततः पुनः ।

वनोपलैः संहृण्यादेतद्गजपुटं स्मृतम्॥
अत्र पादोनहस्तद्वयप्रमाणो गजः।

वाराहपुटम्।

अरत्निमात्रके कुण्डे पुटं वाराहमुच्यते।

कौक्कुटपुटम्।

षोडशाङ्गुलके खाते कस्यचित् कौक्कुटं पुटम्।

कापोतपुटम्।

यत् पुटं दीयते खाते ह्यष्टसंख्यैर्वनोपलैः।
कापोतपुटमेतत्तु कथित पुटपण्डितैः॥
एतदेव लघुपुटनाम्ना ख्यातम्।

गोवरपुटम्।

वृहद्भाण्डस्थितैर्यन्त्रै गोंवरैर्दीयते पुटम्।
तद्गोवरपुटं प्रोक्तं भिषग्भिः सूतभस्मकृत्॥
गोष्ठान्तर्गोखुरक्षुसं शुष्कचूर्णितगोमयम्।
गोवरं तत् समाख्यात वरिष्ठं रससाधने॥

भाण्डपुटम्।

वृहद्भाण्डे तुषैः पूर्णे मध्ये मूषां विधारयेत्।
क्षिप्ताग्निं मुद्रयेद्भाण्डं तद्भाण्डपुटमुच्यते॥

---

# एकषष्टितमोऽध्यायः ।

---

अथ औषधपाकार्थयन्त्राणि निरूप्यन्ते ।

कवचीयन्त्रम् ।

नातिह्रस्वां काचकूपीं न चातिमहतीं दृढ़ाम् ।
वाससा कर्दमाक्तेन परिवृत्य समन्ततः ॥
संलिप्य मृदुमृत्स्नाभिः शोषयेद्भानुरश्मिना ।
निधाय भेषजं तत्र मुखमाच्छादयेत्ततः ॥
कठिन्या दृढ़या वापि पचेद्यन्त्रे विधानतः ।
कवचीयन्त्रमेतद्धि रसादिपचने मतम् ॥

वालुकायन्त्रम् ।

भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके ।
कूपिकाकण्ठपर्य्यन्तं वालुकाभिश्च पूरिते ॥
भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते ।
वालुकायन्त्रमेतद्धि यन्त्रं तत्र बुधैः स्मृतम् ॥




दोलायन्त्रम् ।

द्रवद्रव्येण भाण्डस्य पूरयित्वार्द्धमात्रकम् ।
सूत्रेण लम्बयेत् काष्ठे बद्धा भेषजपोट्टलीम् ॥

स्वेदयेद्वान्तरगतां दोलायन्त्रमिदं स्मृतम् ।
पिधाय पच्यते यत्र तद्यन्त्रं स्वेदनं स्मृतम् ॥




## विद्याधरयन्त्रम् ।

अधःस्थाल्यां रसं क्षिप्त्वा निदध्यात्तन्मुखोपरि ।
स्थालीमूर्द्ध्वमुखीं सम्यक् निरुध्य मृदुमृत्स्नया ॥
ऊर्द्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्ल्यामारोप्य यत्नतः ।
अधस्ताज्ज्वालयेदग्निं यावत् प्रहरपञ्चकम् ॥
स्वाङ्गशीतं ततो यत्नाद्गृह्णीयाद्रसमुत्तमम् ।
विद्याधराभिधं यन्त्रमेतत्तज्ज्ञैरुदाहृतम् ॥




## डमरुयन्त्रम् ।

यन्त्रं डमरुसंज्ञं स्यात् तत्स्थालीमुद्रिते मुखे ॥




चक्रयन्त्रम् ।

गर्त्तवाह्ये भटेद्गर्त्तौ मध्यगर्त्ते रसं कुरु ।
चक्रयन्त्रमिदं सिद्धं वाह्ये गर्त्ते वृहत पुटम् ॥




इष्टकायन्त्रम् ।

मध्ये गर्त्त समायुक्तामिष्टका कारयेद्भिषक् ।
गर्त्ते चैव समास्थाय तस्यां सूतादिक न्यसेत् ॥
दत्त्वोपरि शरावञ्च सन्धिं मृत्तवर्णैर्लिपेत् ।
तदूर्द्धे सिकतां किञ्चिद्दत्त्वा देयं पुट लघु ॥
इष्टकायन्त्रमेतद्धि जारयेद्गन्धकादिकम् ॥



कोष्ठिकायन्त्रम्।

षोडशाङ्गुलविस्तीर्णं हस्तमात्रायतं समम्।
धातुसत्त्वनिपातार्थं कोष्ठिकं परिकीर्त्तितम्॥
वंशखादिरमाधूकवदरीदारुसम्भवैः।
परिपूर्णं दृढाङ्गारैरधोवातेन कोष्ठके॥
मात्रया ज्वालमार्गेण ज्वालयेच्च हुताशनम्॥



कच्छपयन्त्रम्।

जलपूर्णपात्रमध्ये दत्त्वा खर्परन्तु विस्तीर्णम्।
तदुपरि रसवि ङ्ग स्थाप्यः सूतो मृदः कुण्ड्याम्॥
लघुलोहकीटविकया कृतपटुर्मृत्सन्धिलेपमास्थाय।
देया तदुपरि सिकता चैकाङ्गुलिपरिमाणापि॥
तत् खर्परं पूर्य्यं चाङ्गारकवनोपलेनोपचितम्॥
कृतपटुः कार्य्यपटुर्भिषक्।



वकयन्त्रम्।

दीर्घकण्ठकाचकूप्या गिलयेत्काचभाण्डकम्।
तिर्य्यक्कृत्वा पचेच्चूल्ल्यां वकयन्त्रमिदं स्मृतम्॥




नाडिकायन्त्रम् ।

विनिधाय घटे द्रव्यं कनीयांसमधोमुखम् ।
घटमन्यं मुखे तस्य स्थापयित्वोभयोर्मुखम् ॥
मृदुमृद्भिः समालिप्य नाड़िकां विनिवेशयेत् ।
यन्त्रात् कुण्डलितां भित्त्वा जलद्रोणीं महत्तमाम् ॥
आधारभाण्डपर्य्यन्तं ततश्चूल्लग्रां विधारयेत् ।
अधस्ताज्ज्वालयेद्वह्निं यावद्वाष्पो विनिर्व्रजेदधः ॥
गृह्णीयादाधारगतं निर्म्मलं रसमुत्तमम् ।
नाडिकायन्त्रमेतद्धि मुनिभिः परिकीर्त्तितम् ॥




वारुणीयन्त्रम् ।

ऊर्द्ध्वं तोयसमायुक्तं जलद्रोणीविवर्जितम् ।
तोयसंवेष्टिताधारऋजुनाड़ीसमन्वितम् ॥
यन्त्रं तद्वारुणीसंज्ञं सुरासाधनकर्म्मणि ।

अन्यच्च । बीजद्रव्यं घटे दत्त्वा सञ्छाद्यान्येन तन्मुखम् ।
मृदा मुखं विलिप्याथ नाड़ीं वंशादिसम्भवाम् ॥
यन्त्रादाधारगां कृत्वा स्रावयेद्विधिना रसम् ।
वारुणीयन्त्रमेतद्धि सुरासवसाधने सुखम् ॥







### पातालयन्त्रम् ।

भाण्डस्य तलतो रन्ध्रं सविधाय सुवर्त्तुलम् ।
तदधो मृण्मयं वापि दार्वंद काचनिर्म्मितम् ॥
धृत्वा पात्रन्तु तद्भाण्डं भेषजैः परिपूरयेत् ।
समाच्छाद्य ततो भाण्डं संलिप्य च मृदादिभि ॥
भूगर्त्ते तत्समाधाय चोर्द्ध्वमाकीर्य्य वह्निभिः ।
रसं विस्रावयेदेतद्यन्त्रं पातालनामकम् ॥




भूधरयन्त्रम् ।

यन्त्रं डमरुवद्वाथ तुल्यं विद्याधरेण वा ।
भूगर्त्ते तत्समाधाय चोर्द्ध्वमाकीर्य्य वह्निना ॥
अधःस्थाल्यां जलं क्षिप्त्वा सूतकं तत्र पातयेत् ।
एतद्भूधरयन्त्रं स्यात् सूतसंस्कारकर्म्मणि ॥




तिर्य्यक्पातनयन्त्रम् ।

घटे रसं विनिक्षिप्य सजलं घटमन्यकम् ।
तिर्य्यङ्मुखं द्वयोः कृत्वा तन्मुखं रोधयेत् सुधीः ॥
रसाधो ज्वालयेदग्निं यावत् सूतो जलं विशेत् ।
तिर्य्यक्पातनमित्युक्तं सिद्धैर्नागार्ज्जुनादिभिः ॥



जलयन्त्रम् ।

तथवा कारयेन्मूषां पात्रलग्नामधोमुखीम् ।
लोहजामनुरूपाञ्च तन्मूषामुखरोधिनीम् ॥
दत्त्वा चान्या तयोः सन्धिं विलिप्यायोऽस्रगादिभिः ।
जलमूर्द्ध्वं विनिक्षिप्य निःसन्देहं विपाचयेत् ।
जलयन्त्रमिदं ख्यातं तेनैव जार्य्यते रसः ॥

आदिना चूर्णातसीतैलसर्जरसगुड़ादिकं ज्ञातव्यम् ।




चुल्ली ।

सारणायन्त्रम् ।

मूषान्तर्निहिता मूषा सरन्ध्रा सूतशोधिनी ।
गम्भीरा सारणा नाम्ना यन्त्रं तत् कथ्यते बुधैः ॥

अथ मूषानिरूपणम् ।

अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा ।
सैव छिद्रान्विता मध्ये गम्भीरा सारणोचिता ॥
द्वौ भागौ तुषदग्धस्य एका वल्मीकमृत्तिका ।
लौहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥
नरकेशसमं किञ्चिच्छागीक्षीरेण पेषयेत् ।
यामद्वयं दृढ़ं मर्द्य तेन मूषां सुसम्पुटाम् ॥
शोषयित्वा रसं क्षिप्त्वा तत्कल्कैः सन्निरोधयेत ।
वज्रमूषा समाख्याता सम्यक् पारदसाधिका ॥

——

# द्विषष्टितमोऽध्यायः।

---

## अथ धात्वादीनां शोधनमारणादिविधिः।

### अथ धातवः।

स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशदमेव च।
सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः॥
वलीपलितखालित्यकार्श्याबल्यज्वरामयान्।
निवार्य्य देहं दधति नृणां तद्धातवो मताः॥

### स्वर्णम्।

स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्।
तपनीयञ्च गाङ्गेयं कलधौतञ्च काञ्चनम्॥
चामीकरं शातकुम्भं तथा कार्त्तस्वरञ्च तत्।
जाम्बूनदं जातरूपं महारजतमित्यपि॥
दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम्।
तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत्॥
तच्छ्वेतं कठिनं रूक्षं विवर्णं समलं दलम्।
दाहे छेदे सितं श्वेतं कषे त्याज्यं लघु स्फुटम्॥

बलं सवीर्य्यं हरते नराणां
रोगव्रजान् पोषयतीह काये।
असौख्यकार्य्यं च सदा सुवर्ण-
मशुद्धमेतन्मरणञ्च कुर्य्यात्॥

सौख्यं वीर्य्यं बलं हन्ति नानारोगं करोति च।

अशुद्धममृतं स्वर्णं तस्मात् संशोध्य मारयेत्॥

अथ तस्य शोधनविधिः।

पत्तलीकृतपत्राणि हेम्नो वह्नौ प्रतापयेत्।
निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके॥
गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा।
एवं हेम्नः परेषाञ्च धातूनां शोधनं भवेत्॥

तस्य मारणविधिः।

शुद्धसूतसमं स्वर्णं खल्ले कृत्वा तु गोलकम्।
ऊर्द्ध्वाधो गन्धकं दत्त्वा सर्वतुल्यं निरुध्य च॥
त्रिंशद्वनोपलैर्देय पुटान्येवं चतुर्दश।
निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः॥

एवं मारितस्य तस्य गुणाः।

कषायतिक्तमधुरं सुवर्णं गुरु लेखनम्।
हृद्यं रसायनं बल्यं चक्षुष्यं कान्तिदं शुचि॥
आयुर्मेधावयःस्थैर्य्यवाग्विशुद्धिस्मृतिप्रदम्।
निहन्ति क्षयमुन्मादं विकारांश्चौपदंशिकान्॥

अन्यच्च,

आयुर्मेधाप्रभाधीस्मृतिकरमखिलव्याधिविध्वंसि पुण्यं
भूतावेशप्रशान्तिस्मरभवसुखदं सौख्यपुष्टिप्रकारि।
गाङ्गेयं चाथ रूप्यं गरहरमजराकारि मेहापहारि
क्षीणानां पुष्टिकारि स्फुटमतिकरणं कारणं वीर्य्यवृद्धेः॥

अस्य मात्रा १ रक्तिका।

रौप्यम्।

रौप्यन्तु रजतं तारं चन्द्रकान्ति सितप्रभम्।

गुरु स्निग्धं मृदु श्वेत दाहच्छेदघनक्षमम् ॥
स्वर्णादिरहित स्वच्छं तारं नवगुणं शुभम् ।
कृत्रिमं कठिनं रूक्षं रक्तं पीतदलं लघु ॥
दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम् ।
आयुः शुक्रं बलं हन्ति नाना रोगान् करोति च ॥
अशुद्धममृतं तार तस्मात् सशोध्य मारयेत् ॥

अथ तस्य शोधनविधिः ।

पत्तलीकृतपत्राणि तारस्याग्नौ प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा ।
एवं रजतपत्राणां विशुद्धिः सम्प्रजायते ॥

तस्य मारणविधिः ।

विधाय पिष्टिं सूतेन रजतस्याथ मेलयेत् ।
तालं गन्धं समं पश्चान्मर्दयेन्निम्बुकद्रवैः ॥
द्वित्रिपुटैर्भवेद्भस्म योज्यमेवं रसादिषु ॥

रौप्यमारणस्यान्यो विधिः ।

द्विरेकवलिसूतनिर्मितकज्जलसममम्लपिष्टतारदलम् ।
सिकताया यन्त्रे वा गजपुटयोगाद्भस्म भवति हठाग्नौ ॥

मारितस्य तस्य गुणाः ।

रौप्यं शीतं कषायञ्च स्वादुपाकरसं सरम् ।
वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित् ॥
प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम् ॥

मात्रा १ रक्तिका ।

ताम्रम्।

ताम्रमौन्दुवरं शुल्वमुन्दुवरमपि स्मृतम्।
रविप्रियं म्लेच्छमुखं सूर्य्यपर्य्यायनामकम्॥
जवाकुसुमसङ्काशं स्निग्धं मृदु घनक्षमम्।
लौहनागोज्झितं ताम्रं मारणाय प्रशस्यते॥
कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापि घनासहम्।
लौहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम्॥
एको दोषो विषे ताम्रे त्वशुद्धेऽष्टौ भ्रमो वमिः।
विरेकः स्वेद उत्क्लेदो मूर्च्छा दाहोऽरुचिस्तथा॥

तस्य शोधनविधिः।

पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत्।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा।
एवं ताम्रस्य पत्राणां विशुद्धिः संप्रजायते॥
गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना।
शुध्यते नात्र सन्देहो मारणञ्चाप्यथोच्यते॥

तस्य मारणविधिः।

जम्बीररससंपिष्टरसगन्धकलेपितम्।
ताम्रपत्रं शरावस्थं त्रिपुटैर्म्रियते ध्रुवम्॥
सूताभावे भिषग्युक्त्या वात्र हिङ्गुलमर्पयेत्॥

ताम्रमारणस्यापरो विधिः।

जम्बीररसपिष्टेन गन्धेन द्विगुणेन च।
कल्टवेधीकृतं ताम्रदलं लिप्त्वा भिषग्वरः॥
सिकतायन्त्रयोगेन चतुर्यामेन जारयेत्॥

अथास्यामृतीकरणम्।

अथ संमारितं ताम्रमम्ले नैकेन मर्द्दयेत्।
तद्गोलं शूरणस्यान्ता दत्त्वा सर्व्वत्र लेपयेत्॥
शुष्कं गजपुटे पाच्यं सर्व्वरोगहरं भवेत्।
वान्तिं भ्रान्तिं विरेकञ्च न करोति कदाचन॥

मारितस्यास्य गुणाः।

ताम्रं कषायं मधुरं सतिक्त-
मम्लञ्च पाके कटु सारकञ्च।
पित्तापहं श्लेष्महरञ्च शीतं
तद्रोपणं स्याल्लघु लेखनञ्च॥
पाण्डूदराशोंज्वरकुष्ठकास-
श्वासक्षयान् पीनसमम्लपित्तम्।
शोथं क्रिमिं शूलमपाकरोति
प्राहुर्बुधा वृंहणमल्पमेतत्॥

मात्रा १ रत्तिका।

वङ्गम्।

रङ्गं वङ्गं त्रपु प्रोक्तं तथा पिच्चटमित्यपि।
खुरकं मिश्रकञ्चापि द्विविधं वङ्गमुच्यते॥
उत्तमं खुरकं तत्र मिश्रकं त्ववरं मतम्॥

वङ्गं विधत्ते खलु शुद्धिहीन-
माक्षेपकम्पौ च किलासगुल्मौ।
कुष्ठानि शूलं किल वातशोथं
पाण्डुं प्रमेहञ्च भगन्दरञ्च॥
विषोपमं रक्तविकारवृन्दं

क्षयञ्च कृच्छ्राणि कफज्वरञ्च।
मेहाश्मरीविद्रधिमुष्करोगान्
नागोऽपि कुर्य्यात् कथितान् विकारान्॥

अस्य शोधनविधिः।

वङ्गनागौ प्रतप्तौ च गलितौ तौ निषेचयेत्।
त्रिधा त्रिधा विशुद्धिः स्याद्रविदुग्धेऽपि च त्रिधा॥

निषेचयेत् तैलतक्रकाञ्जिकगोमूत्रकुलत्थक्वाथेषु प्रत्येकं त्रिधा त्रिधा ततोऽर्कदुग्धेऽपि त्रिधा।

अस्य मारणविधिः।

चुल्लुग्रपरिस्थिते पात्रे पाचयेद्यामकद्वयम्।
घर्षयेल्लौहदण्डेन चूर्णं देय पुनः पुनः॥
प्रथमे रजनीचूर्णं दीप्यकञ्च द्वितीयके।
तृतीये जीरकं देय चतुर्थेऽश्वत्थचिञ्चयोः॥
एवं क्रमेण चूर्णेन वङ्गं निश्चन्द्रकं भवेत्।
स्वाङ्गशीतं समुद्धृत्य भस्म चन्द्रसमप्रभम्॥
यथामात्रं प्रदातव्यं वङ्गभस्म च भक्षितुम्।
अनुपानं प्रदातव्यं यथाव्याध्यनुसारतः॥

वङ्गमारणस्यान्ये विधयः।

चिञ्चाश्वत्थयवक्षारैः सैन्धवलवणेन वा वङ्गम्।
किंवा चूर्णितचिञ्चाश्वत्थवहिस्त्वक्क्रमायोगात्॥
सन्ति हि यत्र क्षारास्तेषां चूर्णेन योगाद्वा।
किंवा कुनटीयोगात् तालकयोगेन मारयेत् किंवा॥

मारितस्यास्य गुणाः।

वङ्गं लघु सरं रूक्षं कुष्ठमेहकफक्रिमीन्।

निहन्ति पाण्डुं सश्वासं नेत्रमोषत्तु पित्तलम् ॥

सिंहो गजौघन्तु यथा निहन्ति
तथैव वङ्गोऽखिलमेहवर्गम् ।
देहस्य सौख्यं प्रबलेन्द्रियत्वं
नरस्य पुष्टिं बिदधाति नूनम ॥

मात्रा ६ रक्तिकाः ।

## स्वर्णवङ्गम् ।

प्रक्षिपेद्भाजने वङ्गमायसे वापि मृण्मये ।
विद्रुते वह्नितापेन तस्मिन् तन्मानकं रसम् ॥
क्षिप्त्वा सञ्चूर्णयेत्तत्र नरसारञ्च गन्धकम् ।
तनुवासोमृदालिप्तकाचकूप्यां निधाय च ॥
तत् सर्वं सिकतायन्त्रे पचेद्यामचतुष्टयम् ।
पाकात् सञ्जायते चित्रं कीर्णं हेमकणैरिव ॥
रमणीयतरं स्वर्णवङ्गं नाम रसायनम् ।
बल्यं मेहहरं कान्तिमेधावीर्य्याग्निवर्द्धनम् ॥

मात्रा २ रक्तिके ।

## महासेतुः ।

एकः सूतो द्विधा वङ्गं सर्वद्विगुणगन्धकः ।
कूपीपक्वो महासेतुर्वङ्गस्थानेऽथवा विधुः ॥

## यशदम् ।

यशदं गिरिजं तस्य दोषाः शोधनमारणे ।
वङ्गस्यैव हि बोद्धव्या गुणांस्तु गणयाम्यथ ॥
यशदं तुवरं तिक्तं शीतलं कफपित्तहृत् ।

चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत् ॥
मात्रा १ रक्तिका।

सीसम्।

सीसं बध्रञ्च वप्रञ्च योगेष्टं नागनामकम्।
तस्य साहजिका दोषा वङ्गस्येव निदर्शिताः ॥
शोधनञ्चापि तस्यैव भिषग्भिर्गदितं पुरा ॥

अस्य मारणविधिः।

नागं खर्परके निधाय कुनटीचूर्णं ददीत द्रुते
निम्बूनीरसुगन्धकेन पुटितं भस्मीभवेत् सत्वरम् ॥

सीसमारणस्यान्यो विधिः।

सीसकं सयवक्षारं लौहपात्रे विपाचितम्।
क्षारं पुनः पुनर्देयं यावद्भस्मत्वमाप्नुयात् ॥
रक्तवर्णं भवेद्यावत् तावन्मृद्वग्निना पचेत् ॥

मारितस्यास्य गुणाः।

सतिक्तो मधुरो नागो मृतो भवति रोगहा।
आयुःकान्ती वीर्य्यवृद्धिं कुरुते सेवनात् सदा ॥
नागस्तु नागशततुल्यबलं ददाति
व्याधिञ्च नाशयति जीवनमातनोति।
वह्निं प्रदीपयति कामबलं करोति
मृत्युञ्च नाशयति सन्ततसेवितः सः ॥
मात्रा २ रक्तिके।

लौहम्।

लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी।
लौहपर्य्यायनामानि कीर्त्तितानि च सूरिभिः ॥

मण्डलकुष्ठामयमृत्युकारी
हृद्रोगशूलौ कुरुतेऽश्मरीञ्च ।
नानारुजानाञ्च तथा प्रकोपं
कुर्य्याच्च हृल्लासमशुद्धलौहम् ॥

अस्य शोधनविधिः ।

पत्तलीकृतपत्राणि लौहस्याग्नौ प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥
गोमूत्रे च कुलत्थाना कषाये च त्रिधा त्रिधा ।
एवं लौहस्य पत्राणां विशुद्धिः संप्रजायते ॥
यथोदितेन विधिना लौहपत्रं विशोध्य च ।
निषिञ्चेल्लौहदोषाणां विनाशाय भिषग्वर. ॥
क्षीरारनालगोमूत्रत्रिफलाक्काथवारिणि ।
लौहमुष्णं मनाक् तप्तं त्रेधा त्रेधा वि धानतः ॥
निमिषे त्रिफला लौहात् कर्त्तव्याष्टगुणा सदा ।
चतुर्गुणं फलात्तोयमर्द्धभागवशेषितम् ॥
क्षीरादित्रयमानन्तु लौहाद्द्विगुणमिष्यते ॥

अस्य मारणविधिः ।

विशोधितमयश्चूर्णं गोमूत्रेण विमर्दयेत् ।
शतशस्तत् पुटेदग्नौ मृतमेवं भवेद्ध्रुवम् ॥
सहस्रशस्तु पुटनात् तद्भवेदमृतोपमम् ॥

लौहमारणस्यान्यो विधिः ।

क्षिपेद्वा दशमांशेन दरदं तीक्ष्णचूर्णतः ।
मर्द्दयेत् कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥
एवं सप्तपुटैर्मृत्युं लौहचूर्णमवाप्नुयात् ॥

अथास्यामृतीकरणम् ।

प्रथमावर्त्तनं चौरे लौहपात्रे दृढ़े शुभे ।
ताम्रे वा मार्त्तिके ग्रत्नया लोहपाक समाचरेत् ॥
घृतेन लोहमालोद्य चीरेण समनन्तरम् ।
त्रिफलाया जल दत्त्वा मन्दमन्देन वह्निना ॥
सतत चालयेल्लोह लोहदर्व्यातिदीर्घया ।
त्रिविधं पाकमिच्छन्ति मृदु मध्यं खर तथा ॥
त्रैविध्यात् सर्वधातूनां पित्तानिलकफात्मनाम् ।

एवं मारितस्य लौहस्य गुणाः ।

लोहं तिक्तं सरं शीतं कषायं मधुरं गुरु ।
रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत् ॥
कफं पित्तं गरं शूल शोफार्शःप्लीहपाण्डुताः ।
मेदोमेहक्रिमीन् कुष्ठं तत्किट्ट तद्वदेव हि ॥
गुञ्जामेकां समारभ्य यावत् स्युर्नवरक्तिकाः ।
तावल्लोहं समश्नीयाद्यथादोषानलं नरः ॥
कुष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा ।
मद्यमम्लरसञ्चैव वर्जयेल्लोहसेवकः ॥

मण्डूरम् ।

ध्मायमानस्य लोहस्य मल मण्डूरमुच्यते ।
लोहसिंहानिका किट्टं सिंहानाञ्च निगद्यते ॥
शतोर्द्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवर्षकम् ।
अधमं षष्टिवर्षीयमतो हीनं विषोपमम् ॥
भस्माग्नौ तप्तमण्डूरं सप्तधा गोजले क्षिपेत् ।
चूर्णीकृत्य प्रयोक्तव्यं पुटाद्बहुगुणं भवेत् ॥

अन्यच्च गोमूत्रे त्रिफला क्वाथ्या तत्क्वाथे सेचयेच्छनैः।
लौहकिट्टं सुतप्तन्तु यावज्जीर्य्यति तत् स्वयम्॥
तज्जीर्णं ग्राहयेत् पिष्ट्वं मण्डूरञ्च प्रयोजयेत्।
यल्लौह यद्गुणं प्रोक्तं तत् किट्टमपि तद्गुणम्॥
स्वर्णाद्यभावे लौहं स्यान्मण्डूरं तदभावतः।
ये गुणा मारिते लौहे ते गुणा लौहकिट्टके॥
तस्मात्सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत्॥
मात्रा १ माषकः।

स्वर्णादिलौहान्तानां धातूनां
साधारणो मारणोपायः।

शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सर्वधातवः।
म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा॥

---

## त्रिषष्टितमोऽध्यायः।

---

अथोपधातवः।

सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम्।
तुत्थं कांस्यञ्च रीतिश्च सिन्दूरञ्च शिलाजतु॥
उपधातुषु सर्वेषु तत्तद्धातुगुणा अपि।
सन्ति किन्त्वेतेष्वन्यूनास्तत्तदंशाल्पभावतः॥

स्वर्णमाक्षिकम्।

स्वर्णमाक्षिकमाख्यातं तापीजं मधुमाक्षिकम्।
ताप्यं माक्षिकधातुश्च मधुधातुश्च स स्मृतः॥
किञ्चित् सुवर्णसाहित्यात् स्वर्णमाक्षिकमीरितम्।
उपधातुः सुवर्णस्य किञ्चित् स्वर्णगुणान्वितम्॥
तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम्।
किन्तु तस्यानुकल्पत्वात् किञ्चिदूना गुणास्ततः॥
भङ्गे सुवर्णसङ्काशो मनाक् कृष्णच्छविर्बहिः।
गुरुवर्णं इति ख्यातो माक्षिकः श्रेष्ठ उच्यते॥

मन्दानलत्वं बलहानिमुग्रां
विष्टम्भितां नेत्रगदान् सकुष्ठान्।
मालां तथैव व्रणपूर्विकाञ्च
कुर्य्यादशुद्धं खलु माक्षिकञ्च॥

अथास्य शोधनविधिः।

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च।
मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैः पचेत्॥
चालयेल्लौहजे पात्रे यावत्पात्रं सुलोहितम्।
भवेत्ततस्तु संशुद्धिं स्वर्णमाक्षिकमृच्छति॥

अस्य मारणविधिः।

कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत्।
तक्रेण वाजमूत्रेण म्रियते स्वर्णमाक्षिकम्॥

तारमाक्षिकम्।

तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम्।
किञ्चिद्रजतसाहित्यात्तारमाक्षिकमीरितम्॥

मन्दानलत्वं बलहानिमुग्रां
विष्टम्भितां नेत्रगदान् सकुष्ठान्।
तथैव मालां व्रणपूर्विकाञ्च
करोति तापीजमिदञ्च तद्वत्॥

अस्य शोधनविधिः।

कर्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम्।
भावयेदातपे तीव्रे विमला शुध्यति ध्रुवम्॥

अस्य मारणविधिः।

कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत्।
तैलेन वाजमूत्रेण म्रियते तारमाक्षिकम्॥

एवं मारितयोस्तयोर्गुणाः।

न केवलं स्वर्णरूप्यगुणास्तापीजयोर्मताः।
द्रव्यान्तरस्य संसर्गात्सन्त्यन्येऽपि गुणास्तयोः॥
माक्षिकं मधुरं तिक्तं स्वर्य्यं वृष्यं रसायनम्।
चक्षुष्यं वस्तिरुक्कुष्ठपाण्डुमेहविषोदरम्॥
अर्शः शोफं क्षयं कण्डूं त्रिदोषञ्च नियच्छति॥

मात्रा ६ रक्तिकाः।

तुत्थम्।

तुत्थं वितुन्नकञ्चापि शिखिग्रीवं मयूरकम्।
तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत्॥

अस्य शोधनविधिः।

विष्ठया मर्द्दयेत्तुत्थं मार्ज्जारककपोतयोः।
दशांशं टङ्कनं दत्त्वा पचेल्लघुपुटे ततः॥
पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये॥

अन्यच्च । जम्बीरजरसः पिष्टं तुत्थं लघुपुटे पचेत् ।
त्रिदिनं मस्तुना भाव्यं ततो योगेषु योजयेत् ॥
वान्तिर्भ्रान्तिर्यदा न स्यात्तदा सिद्धिं विनिर्दिशेत् ।
लेखनं भेदि तज्ज्ञेयं तुत्थं कण्डूक्रिमिप्रणुत् ॥
अन्यच्च । तुत्थकं कटुकं चारं कषायं वामकं लघु ।
लेखनं भेदनं शीत चक्षुष्यं कफपित्तहृत् ॥
विषाश्मकुष्ठकण्डूघ्नं भिषग्भिः परिकीर्त्तितम् ॥
मात्रा १ रक्तिका वमनार्थं ६ रक्तिकाः ।

कांस्यम् ।

ताम्रत्रपुजमाख्यातं कांस्य घोषञ्च कंसकम् ।
उपधातुर्भवेत् कांस्यं द्वयोस्तरणिरङ्गयोः ॥

अस्य शोधनविधिः ।

पत्तलीकृतपत्राणि कांस्यस्याग्नौ प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥
गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा ।
एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते ॥

अस्य मारणविधिः ।

अर्कक्षीरेण संपिष्टो गन्धकस्तेन लेपयेत् ।
समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः ॥
ततो मूषापुटे धृत्वा पचेद्गजपुटेन च ।
एवं पुटद्वयात्कांस्यं रीतिश्च म्रियते ध्रुवम् ॥
कांस्यं कषायं तीक्ष्णोष्णं लेखन विशदं सरम् ।
गुरु नेत्रहितं रूक्षं कफपित्तहरं परम् ॥
मात्रा १ रक्तिका ।

## पित्तलम्।

पित्तलं त्वारकूटं स्यादारो रीतिश्च कथ्यते।
राजरीतिर्ब्रह्मरीतिः कपिला पिङ्गलापि च॥
रीतिरप्युपधातुः स्यात् ताम्रस्य यशदस्य च।
कांस्यस्येव हि विज्ञेये रीतेः शोधनमारणे॥
रीतिका तु भवेद्रूक्षा सतिक्ता लवणा रसे।
शोधिनी पाण्डुरोगघ्नी क्रिमिघ्नानातिलेखनी॥
मात्रा १ रक्तिका।

अथैतयोः शोधनमारणयोरन्यो विधिः।
कांस्यपित्तलयोः शुद्धिर्मृतिश्च ताम्रवद्भवेत्॥

## सिन्दूरम्।

सिन्दूरं रक्तरेणुश्च नागगर्भश्च सीसजम्।
सीसोपधातुः सिन्दूरं गुणैस्तत् सीसवन्मतम्॥
संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः।
दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदिता बुधैः॥
सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम्।
भग्नसन्धानजननं व्रणशोधनरोपणम्॥

## शिलाजतु।

निदाघे घर्म्मसन्तप्ता धातुसारं धराधराः।
निर्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम्॥
सौवर्णं राजतं ताम्रमायसं तच्चतुर्विधम्।
शिलाजत्वद्रिजतु च शैलनिर्यास इत्यपि॥
गैरेयमश्मजञ्चापि गिरिजं शैलधातुजम्।
सौवर्णन्तु जवापुष्पवर्णं भवति तद्रसात्॥

मधुरं कटु तिक्तञ्च शीतलं कटुपाकि च।
राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च॥
ताम्रं मयूरकण्ठाभ तीक्ष्णमुष्णञ्च जायते।
यत्तु गुग्गुलुसङ्काशं मतिक्तलवणान्वितम्॥
विपाके कटु शीतञ्च सर्वश्रेष्ठं तदायसम्।
विन्ध्यादौ बहुल तत्तु तत्र लोहं यतोऽधिकम्॥
तच्छोधनमृते व्यर्थमनेकमलमेलनात्।
गोमूत्रगन्धवत् कृष्णं स्निग्धं मृदु तथा गुरु॥
तिक्तं कषाय शीतञ्च सर्वश्रेष्ठं तदायसम्॥

अथ तस्य शोधनविधिः।

शिलाजतु समानीय खण्डं खण्डं विधाय च।
निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत् सुधीः॥
मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम्।
स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः॥
उपरिस्थं घनं यत् स्यात् तत् क्षिपेदन्यपात्रके।
एवं पुनः पुनर्नीतं द्विमासाभ्यां शिलाजतु॥
भवेत् कार्य्यक्षमं वह्नौ क्षिप्तं लिङ्गोपम भवेत्।
निर्धूमञ्च ततः शुद्धं सर्वकर्म्मसु योजयेत्॥

अथान्यः प्रकारः।

चतुर्भागावशिष्टन्तु कारयेत्त्रैफलं जलम्।
जलं केवलमुष्णं वा दत्त्वा तत्र शिलाजतु॥
मर्द्दितं लौहदण्डेन चण्डरौद्रे निधापयेत्।
यद्यत् सूर्य्यातपे दग्धः स्यादूर्द्ध्वं सरवत् ततः।
तत् तत् पुनः पुनर्ग्राह्यं क्षिप्त्वा क्षिप्त्वा प्रयत्नतः॥

कुर्य्याद्यदि जलं भूरि सारोत्पत्तिस्तदा न हि ॥
इत्थं सारं समादाय भावना तु गुणावहा।
कर्त्तव्या भिषजा तस्याः साधनं कथ्यतेऽधुना ॥
भाव्यद्रव्यसमं द्रव्य क्वाथ्यमष्टगुणे जले।
अष्टभागावशिष्टन्तु कार्य्यं तेनैव भावयेत् ॥
गालनोचिततोयेन द्रव्यमालोड्य चातपे।
शोषयेदथ शुष्केऽस्मिन् देयं नीरान्तरं बुधैः ॥
दिवा दिवातपे शुष्कं रात्रौ रात्रौ च वासयेत्।
सालसारादितोयेन भावयेच्च शिलाजतु ॥
दोषघ्नैश्च गदघ्नैश्च द्रव्यैर्द्रव्यैर्विशेषतः।
रसायनहितैश्चापि भावयेच्च पुनः पुनः ॥

प्रकारान्तरञ्च।

गोदुग्धत्रिफलाभृङ्गद्रावैः पिष्टं शिलाजतु।
दिनैक लौहजे पात्रे शुद्धिमाप्नोत्यसंशयम् ॥

शिलाजतु चूर्णयित्वा उष्णे दुग्धादीनामन्यतमस्मिन् द्विगुणद्रवे प्रक्षिप्यातपे स्थापनीयम्। तत्र दधिसरवत् उपरि यदुपतिष्ठते तत् पुनः पुनराकृष्यातपे विशोष्य ग्राह्यम्। यदुक्तम्—

यथोक्तद्विगुणे तोये गोलयित्वा शिलाजतु।
गृह्णीयादूर्द्ध्वगं रौद्रे सरवन्मलवर्जितम् ॥

शोधितस्य तस्य गुणाः।

शिलाजतु स्मृतं तिक्तं कटूष्णं कटुपाकि च।
रसायनं योगवाहि स्रेष्मप्रमेहाश्मशर्कराः ॥
मूत्रकृच्छ्रं क्षयं श्वासं शोथमर्शांसि पाण्डुताम्।

वातरक्तं तथा कुष्ठमपस्मारोदरं हरेत् ॥

मात्रा १० रत्तिकाः ।

सत्त्वनिर्गमनविधिः ।

लाक्षा मीना पयश्छागं टङ्कन मृगशृङ्गकम् ।
पिण्याकं सर्षपाः शिग्रु गुञ्जोर्णागुड़सैन्धवम् ॥
यवतिक्ता घृत चौद्रं यथालाभं विचूर्णयेत् ।
एभिर्विमिश्रिताः सर्वे धातवो गाढ़वह्निना ॥
मूषाध्मताः प्रजायन्ते मुक्तसत्त्वा न संशयः ॥

---

## चतुःषष्टितमोऽध्यायः ।

---

अथ रसप्रकरणम् ।

रसः ।

रसायनार्थिभिर्लोकैः पारदो रस्यते यतः ।
अतो रस इति प्रोक्त स च धातुरपि स्मृतः ॥
चेत्रभेदेन विज्ञेयं शिववीर्य्यं चतुर्विधम् ।
श्वेतं रक्तं तथा पीतं कृष्णं तत्तु भवेत् क्रमात् ॥
ब्राह्मणः चत्रियो वैश्यः शूद्रस्तु खलु जातितः ।
श्वेतं शस्त रुजां नाशे रक्तं किल रसायनम् ॥
धातुभेदे तु तत् पीतं खेगतौ कृष्णमेव च ।
पारदो रसधातुश्च रसेन्द्रश्च महारसः ॥
चपलः शिववीर्य्यश्च रसः सूतः शिवाह्वयः ।

पारद' षड्रस' स्निग्धस्त्रिदोषघ्नो रसायनः॥
योगवाही महावृष्य' सदा दृष्टिबलप्रदः।
सर्वामयहरः प्रोक्तो विशेषात सर्वकुष्ठनुत्॥

अन्त' सुनीलो वहिरुज्ज्वलो यो
मध्याह्नसूर्य्यप्रतिमप्रकाशः।
शस्तोऽथ धूम्र. परिपाण्डुरश्च
चित्रो न योज्या रसकर्म्मसिद्धौ॥

नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरि'।
असह्याग्निर्महादोषा निसर्गात् पारदे स्थिताः॥
पर्पटी पाटनी भेदी द्रावी मलकरी तथा।
अन्धकारी तथा ध्वाङ्क्षी विज्ञेयाः सप्तकञ्चुकाः॥
जाड्यं गण्डस्ततो नागात् कुष्ठ' वङ्गाज्जडो मलात्।
वह्नेर्दाहो वोजनाशश्चाञ्चल्यान्मरण विषात्॥
गिरेः स्फोटो ह्यसह्याग्नेर्दोषान्मोहो विजायते।
दोषैरेतैर्विनिर्मुक्त' रसं कर्म्मणि योजयेत्॥

पारदस्य शोधनविधिः।

इष्टकारजनीचूर्णं षोडशांशं रसस्य च।
मर्दयेत् सप्तधा खल्ले जम्बीरोत्यद्रवैर्दिनम्॥
काञ्जिकै' क्षालयेत् सूतं नागदोषोपशान्तये।
विशालाङ्कोठचूर्णेन वङ्गदोष निवारयेत्॥
राजवृक्षो मलं हन्ति चित्रको वह्निदूषणम्।
चाञ्चल्य कृष्णधुस्तूरस्त्रिफला विषनाशिनी॥
कटुत्रयं गिरिं हन्ति चासह्याग्नि' त्रिकण्टकः।
प्रतिदोषं कलांशेन तत्तच्चूर्णं सकान्यकम्॥

सुवस्त्रच्छानितं सूतं खल्ले कृत्वा यथाक्रमम्।
प्रत्येकं प्रत्यहं यत्नात् सप्तवारं विमर्दयेत्॥
उद्धृत्योष्णारनालेन मृत्पात्रे चालयेत् सुधीः।
सर्वदोषविनिर्मुक्तं सप्तकञ्चुकवर्जितम्॥

कलांशमिति रसस्य षोडशांशं चूर्णं कुमारीद्रवेण सह सप्तवारं मर्दयेत्। एवमष्टौ दिनानि प्रत्यहं वस्त्रेण छानयित्वा नवमे दिने उष्णारनालेन चालयित्वा योगेषु योजयेत्। इष्टकादिर्नागादिं कुमारीकञ्चुकं जयेत्।

अथ मुख्यदोषहरः
शोधनविधिः।

गृहकन्या हरति मलं त्रिफलाग्निं चित्रको विषं हन्ति।
तस्मादेभिर्मिश्रैर्वारान् संमूर्च्छयेत्सप्त॥

अथ सर्वदोषहरः संक्षिप्तः
शोधनविधिः।

कुमारिकाचित्रकरक्तसर्षपैः
कृतैः कषायैर्बृहतीविमिश्रितैः।
फलत्रिकेणापि विमर्दितो रसो
दिनत्रयं सर्वमलैर्विमुच्यते॥

अन्यच्च। एकेन लशुनेनैव सम्यक् शुद्धो भवेद्रसः।

इति मर्दनम्।

अथ मूर्च्छनम्।

अव्यभिचरितव्याधिघातकत्वन्तु मूर्च्छना।
त्र्यूषणत्रिफलावन्ध्याकन्दैः चुद्रद्वयान्वितैः॥
चित्रकोर्णानिशाक्षारकन्यार्ककनकद्रवैः॥

सूतं क्वतेन यूषेण वारान् सप्ताभिमर्दयेत्।
इत्थं संमूर्च्छितः सूतस्त्यजेत् सप्तापि कञ्चुकान्॥

स्वेदनम्।

रसं चतुर्गुणे वस्त्रे बद्ध्वा दोलाकृतं पचेत्।
दिनं व्योषवरावह्निकन्याकल्के सकाञ्जिके॥
दोषशेषापनुत्त्यर्थमिदं स्वेदनमुच्यते॥

ऊर्द्ध्वपातनम्।

मयूरग्रीवताप्याभ्यां नष्टपिष्टीकृतस्य च।
यन्त्रे विद्याधरे कुर्य्याद्रसेन्द्रस्योर्द्ध्वपातनम्॥
नष्टपिष्टीकृतस्य कुमारीद्रवयोगेन तावन्मर्दनं कर्त्तव्यं यावत् पारदो न दृश्यत इत्यर्थः।

अधःपातनम्।

त्रिफलाग्निशिखिभिर्लवणासुरिसंयुतैः।
नष्टपिष्टं रसं कृत्वा लेपयेदूर्द्ध्वभाजनम्॥
ततो दीप्तैरधःपातमुपलैस्तस्य कारयेत्।
यन्त्रे भूधरसंज्ञे तु ततः सूतो विशुध्यति॥

तिर्य्यक्पातनम्।

घटे रसं विनिक्षिप्य सजलं घटमन्यकम्।
तिर्य्यङ्मुखं द्वयोः कृत्वा तन्मुखं रोधयेत्सुधीः॥
रसाधो ज्वालयेदग्निं यावत् सूतो जलं विशेत्।
तिर्य्यक्पातनमित्युक्तं सिद्धैर्नागार्ज्जुनादिभिः॥
मिश्रितौ चेद्रसे नागवङ्गौ विक्रयहेतुना।
ताभ्यां स्यात् कृत्रिमो दोषस्तन्मुक्तिः पातनत्रयात्॥

बोधनम्।

कदर्थनेनैव नपुंसकत्व-
मेव भवेदस्य रसस्य पश्चात्।
वीर्य्यप्रकर्षाय च भूर्ज्जपत्रे
स्वेद्यो जले सैन्धवचूर्णगर्भे॥

नियमनम्।

सर्पाक्षीचिञ्चिकावन्ध्याभृङ्गजाकनकाम्बुभिः।
दिनं सस्वेदितः सूतो नियमात् स्थिरतां व्रजेत्॥

दीपनम्।

कासीसं पञ्चलवण राजिका मरिचानि च।
भूमिग्रुवीजमेकत्र टङ्कनेन समन्वितम्॥
आलोड्य काञ्जिके दोलायन्त्रे पाकाद्दिनैस्त्रिभिः।
दीपनं जायते सम्यक् सूतराजस्य जारणे॥
अथवा चित्रकद्रावैः काञ्जिके त्रिदिनं पचेत्॥

अनुवासनम्।

दीपितं रसराजन्तु जम्बीररससयुतम्।
दिनैकं धारयेद्घर्मे मृत्पात्रे वा शिलोद्भवे॥

विडकथनम्।

विड्मत्र प्रवच्यामि साधयेद्भिषजां वर।
गन्धचूर्णं रविचीरैश्चातपे भावयेद्दिनम्॥
तदज्जम्बीरजैर्द्रावैर्दिनैक धूमसारकम्।
सुवर्च्चलमजामूत्रै. क्वाथ्यं यामचतुष्टयम्॥
कण्टकारी च संक्वाथ्या दिनैकं नरमूत्रके।
सर्ज्जिचारस्तिन्तिड़ीकं कासीसञ्च शिलाजतु॥

जम्बीरोत्थद्रवैर्भाव्यं पृथग्यामचतुष्टयम् ।
जैपालवीजं त्वग्हीन मूलकानां द्रवैर्दिनम् ॥
सैन्धव टङ्कनं गुञ्जा शिग्रुमूलद्रवैर्दिनम् ।
एतत् सर्वं समांशन्तु मर्द्यं जम्बीरजैर्द्रवैः ॥
तद्गोलं रचयेद्यत्नाद्विड़ोऽयं वाड़वानलः ।
अनेन मर्द्दयेत् सूतं ग्रसते तप्तखल्लके ॥
स्वर्णाभ्रादीनि लोहानि यथेष्टानि च मारयेत् ॥

तप्तखल्ललक्षणम् ।

अजाशकृत्तुषाग्निञ्च खानयित्वा भुवि क्षिपेत् ।
तस्योपरिस्थितं खल्लं तप्तखल्लमिति स्मृतम् ॥

षड्गुणवलिजारणविधिः ।

सूतप्रमाणं सिकताख्ययन्त्रे
दत्त्वा वलिं स्फटिकेऽल्पभाण्डे ।
तैलावशेषेऽत्र रस निदध्या-
न्मग्नार्द्धकायं प्रविलोक्य भूयः ॥
आषड्गुणं गन्धकमल्पमल्पं
क्षिपेदसौ जीर्णवलिर्बली स्यात् ।
रसेषु सर्वेषु नियोजितोऽय-
मसंशयं हन्ति गदं जवेन ॥

षड्गुणवलिजारणेन सिन्दूर-
सम्पादनम् ।

कूपीकोटरमागतं रसगुणैर्गन्धैस्तुलायां विभुं
विन्यस्य ज्वलनक्रमेण सिकतायन्त्रे शनैः पाचयेत् ।
वारंवारमनेन विह्नि विधिना गन्धक्षयं सिद्धये ।

सिन्दूराद्युचितोऽनुभूय भणितः कर्म्मक्रमोऽयं मया॥
रसमन्तरेण हिङ्गुलगन्धाभ्यामपि सिन्दूरं सम्पाद्यम्।
मात्रा १ रत्तिका।

रसस्य मारणविधिः।

धूमसारं रसं तोरीगन्धकं नरसादरम्।
यामैकं मर्द्दयेदम्लैर्भागं कृत्वा समं समम्॥
काचकूप्यां विनिक्षिप्य ताञ्च मृद्वस्त्रमुद्रया।
विलिप्य परितो वक्त्रे मुद्रां दत्त्वा विशोषयेत्॥
अधःसच्छिद्रपिठरीमध्ये कूपीं निवेशयेत्।
पिठरीं वालुकापूरैर्भृत्वा चाकूपिकागलम्॥
निवेश्य चुल्लयां तदधो वह्निं कुर्य्याच्छनैः शनैः।
तस्मादप्यधिकं किञ्चित् पावकं ज्वालयेत् क्रमात्॥
एवं द्वादशभिर्यामैर्म्रियते रस उत्तमः।
स्फोटयेत् स्वाङ्गशीतं तमूर्द्ध्वगं गन्धकं त्यजेत्॥
अधःस्थञ्च मृतं सूतं गृह्लीयात् तन्तु मात्रया।
यथोचितानुपानेन सर्व्वकर्म्मसु योजयेत्॥

प्रकारान्तरम्।

काष्ठोदुम्बरिकादुग्धे रसं किञ्चिद्विमर्द्दयेत्।
तद्दुग्धघृष्टहिङ्गोश्च मूषायुग्मं प्रकल्पयेत्॥
क्षिप्त्वा तत्संपुटे सूतं तत्र मुद्रां प्रदापयेत्।
धृत्वा तद्गोलकं प्राज्ञो मृन्मूषासंपुटेऽधिके॥
पचेद्गजपुटेनैव सूतको याति भस्मताम्॥

प्रकारान्तरम्।

नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भितः।

मृन्मूषासंपुटे पक्वः सूतो यात्येव भस्मताम्॥

कर्पूररसस्य विधिः।

तत्र पारदस्य संक्षिप्तं शोधनं कर्त्तव्यम्।
शुद्धसूतसमं कुर्य्यात् प्रत्येकं गैरिकं सुधीः।
इष्टिकां खटिकां तद्वत् स्फटिकां सिन्धुजन्म च॥
वल्मीकक्षारलवणं भाण्डरञ्जकमृत्तिकाम्।
सर्वाण्येतानि संचूर्ण्य वाससा चापि शोधयेत्॥
एभिश्चूर्णैर्युतं सूतं यावद्यामचतुष्टयम्।
तच्चूर्णसहितं सूतं स्थालीमध्ये परिक्षिपेत्॥
तस्याः स्थाल्या मुखे स्थालीमपरां धारयेत् समाम्।
सवस्त्रकुट्टितमृदा मुद्रयेदनयोर्मुखम्॥
संशोष्य मुद्रयेद्भूयो भूयः संशोष्य मुद्रयेत्।
सम्यग्विशोष्य मुद्रां तां स्थालीं चुल्यां विधारयेत्॥
अग्निं निरन्तरं दद्याद्यावद्दिनचतुष्टयम्।
अङ्गारोपरि तद्यन्त्रं रक्षेद्यत्नादहर्निशम्॥
शनैरुद्घाटयेद्यन्त्रमूर्द्ध्वस्थालीगतं रसम्।
कर्पूरवत् सुविमलं गृह्णीयाद्गुणवत्तरम्॥
तदेव कुसुमचन्दनकस्तूरीकुङ्कुमैर्युक्तम्।
खादन् हरति फिरङ्गं व्याधिं सोपद्रवं सपदि॥
विन्दति वह्निदीप्तिं पुष्टिं वीर्य्यं बलं विपुलम्।
रमयति रमणीशतकं रसकर्पूरस्य सेवकः सततम्॥

मात्रा १ रक्तिका।

सिन्दूररसः।

शुद्धसूतस्य गृह्णीयाच्छिषभागचतुष्टयम्।

शुद्धगन्धस्य भागञ्च तावत् कृत्रिमगन्धकम् ॥
अथवा पारदस्यार्द्धं शुद्धगन्धकमेव हि ।
तयोः कज्जलिकां कुर्य्याद्दिनमेकं विमर्द्दयेत् ॥
मृत्तिकां वाससा सार्द्धं कुट्टयेदतियत्नतः ।
तया वारत्रयं सम्यक् काचकूपीं प्रलेपयेत् ॥
मृत्तिकां शोषयित्वा तु कूप्यां कज्जलिकां क्षिपेत् ।
तां कूपीं वालुकायन्त्रे स्थापयित्वा रसं पचेत् ॥
अग्निं निरन्तरं दद्याद्यावद्दिनचतुष्टयम् ।
गृह्णीयादूर्द्ध्वसंलग्नं सिन्दूरसदृशं रसम् ॥
पारदः क्रिमिकुष्ठघ्नो जयदो दृष्टिकृत् सरः ।
मृत्युघ्नश्च महावीर्य्यो योगवाही ज्वरापहः ॥
स्मृत्योजोरूपदो वृष्यो बुद्धिकृद्धातुवर्द्धनः ।
षण्ढत्वनाशनः शूरः खेचरः सिद्धिदः परः ॥

पारदः सकलरोगहा स्मृतः
षड्रसो निखिलयोगवाहकः ।
पञ्चभूतमय एष कीर्त्तित-
स्तेन तद्गुणगणैर्विराजते ॥

यस्य रोगस्य यो योगस्तेनैव सह योजितः ।
रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम् ॥

मात्रा १ रत्तिका ।

## पीतरसः ।

रसं गन्धं समं दत्त्वा हस्तिशुण्डीद्रवैर्दृढम् ।
भूधात्रिकारसैर्मर्द्यं दिनमेकं निरन्तरम् ॥
विशुष्कं वालुकायन्त्रे मूषायां सन्निवेशयेत् ।

दिनमेकं पचेदग्नौ मन्दमन्दं निशावधि॥
एवं निष्पाद्यते पीतः सूतराजस्य गृह्यते।
क्षुद्बोधं कुरुते पूर्वमुदरादीन् विनाशयेत्॥
वातपित्तकफोद्भूतान् रोगान् सर्वान् जयेद्ध्रुवम्॥
मात्रा १ रक्तिका।

## कृष्णरसः।

लौहपात्रेऽथवा ताम्रे पलैकं शुद्धगन्धकम्।
मृद्वग्निना द्रुते तस्मिन् शुद्धसूतपलत्रयम्॥
क्षिप्वाथ चालयेत् किञ्चिल्लोहदर्व्या पुनः पुनः।
गोमये कदलीपत्रं तस्योपरि च चालयेत्॥
इत्येवं गन्धबद्धन्तु सर्वरोगेषु योजयेत्॥
मात्रा १ रक्तिका।
श्वेतरक्तं तथा पीतं कृष्णञ्चेति चतुर्विधम्।
सूतभस्म प्रयोक्तव्यं यथाव्याध्यनुपानतः॥

## रसतालकस्य विधिः।

रसो गन्धस्तालकञ्च रक्तशृङ्गी समांशतः।
संमर्द्य सिकतायन्त्रे पचेद्यामचतुष्टयम्॥
पीताभं जायते पाकाद्रसतालकसंज्ञितम्।
ज्वरघ्नं दीपनं वह्नेर्वीर्य्यस्तम्भनमुत्तमम्॥
हन्त्यष्टादश कुष्ठानि द्विविधं वातशोणितम्।
बल्यमायुष्करं मेध्यं परमेतद्रसायनम्॥
मात्रा १ यवः।

## सामान्यकज्जलीकरणविधिः।

शुद्धं रसं गन्धकञ्च समं संमर्दयेद्दिनम्।

निश्चन्द्रं कज्जलीभूतं ततो योगेषु योजयेत् ॥
पृथग्योगेषु यत्रोक्तौ समौ पारदगन्धकौ ।
तत्र भागद्वयं योज्यं कज्जलस्येति निश्चयः ॥
यावान् स्यादधिकः सूतात् तावन्तं गन्धकं पुनः ।
क्षिपेद्योगे विधानज्ञो नात्र कार्य्या विचारणा ॥
यत्र सूतोऽधिको योगे गन्धपाषाणतो भवेत् ।
तत्र तन्मानतः कुर्य्यादादावेव हि कज्जलम् ॥
विना गन्धकसंयोगाद्रसः प्रायो न युज्यते ।
उक्ते पारदमात्रे तु सिन्दूरं प्रायशो मतम् ॥
यो न वेत्ति कृपासिन्धुं रसं हरिहरात्मकम् ।
वृथा चिकित्सां कुरुते स वैद्यो हास्यतां व्रजेत् ॥

---

## पञ्चषष्टितमोऽध्यायः ।

---

अथोपरसाः ।

गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्कनं
राजावर्त्तकचुम्बकौ स्फटिकया शङ्खः खटीगैरिकम् ।
कासीसं रसकं कपर्दसिकते तद्वच्च कङ्कुष्ठकं
सौराष्ट्री च मता अमी उपरसाः सूतस्य किञ्चिद्गुणैः ॥

हिङ्गुलम् ।

लिङ्गुलं [illegible] कमिङ्गलं चूर्णपारदम् ।
दरदं [illegible] रुडकः ॥

हंसपादस्तृतीयः स्याद्गुणवानुत्तरोत्तम्।
चर्म्मारः शुक्लवर्णः स्यात्सपीतः शुकतुण्डकः।
जवाकुसुमसङ्काशो हंसपादो महोत्तमः॥

हिङ्गुलस्य शोधनविधिः।

मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्।
सप्तवारान् प्रयत्नेन शुद्धिमायाति निश्चितम्॥

एवं शोधितस्यास्य गुणाः।

तिक्तं कषायं कटुहिङ्गुलं स्या-
न्नेत्रामयघ्नं कफपित्तहारि।
हृल्लासकण्डूज्वरकामलाश्च
प्लीहामवातौ च गरं निहन्ति॥

मात्रा १ रत्तिका।

हिङ्गुलाद्रसाकर्षणविधिः।

निम्बुरसैर्निम्बपत्ररसैर्वा याममात्रकम्।
घृष्ट्वा दरदमूर्द्धन्तु पातयेत् सूतयुक्तिवत्॥
तत्रोर्द्ध्वपिठरीलग्नं ग्रह्णीयाद्रसमुत्तमम्।
शुद्धमेव हितं सूतं सर्वकर्म्मसु योजयेत्॥

गन्धकः।

गन्धको गन्धिकश्चापि गन्धपाषाण इत्यपि।
सौगन्धिकश्च कथितो वलिर्वलरसोऽपि च॥
चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः।
रक्तो हेमक्रियासूक्तः पीतश्चैव रसायने॥
व्रणादिलेपने श्वेतः श्रेष्ठः कृष्णः सुदुर्लभः।
शुकपुच्छसमाच्छायो नवनीतसमप्रभः॥

मसृण: कठिन: स्निग्धो गन्धक: श्रेष्ठ उच्यते ॥

अशोधितो गन्धक एष कुष्ठं
करोति तापं विषमं शरीरे।
शोषञ्च रूपञ्च बलं तथौज:
शुक्रं निहन्त्येव करोति चास्रम् ॥

अथास्य शोधनविधि:।

लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत्।
तप्ते तप्ते तत्समानं क्षिपेद्गन्धकजं रज: ॥
विद्रुतं गन्धकं ज्ञात्वा दुग्धमध्ये विनिक्षिपेत्।
एवं गन्धकशुद्धि: स्यात् सर्वकार्य्येषु योजयेत् ॥

शोधितस्यास्य गुणा:।

गन्धक: कटुकस्तिक्तो वीर्य्योष्णस्तुवर: सर:।
पित्तल: कटुक: पाके कण्डूवीसर्पजन्तुजित्।
हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनम् ॥
मात्रा १ माषक:।

अथास्य तैलम्।

अर्कक्षीरै: स्नुहीक्षीरैर्वस्त्रं लेप्यन्तु सप्तधा।
गन्धकं नवनीतेन पिष्ट्वा वस्त्रं प्रलेपयेत् ॥
तद्वर्त्तिर्ज्वलिता दण्डे धृता धार्य्या त्वधोमुखी।
तैलं पतत्यध: पात्रे ग्राह्यं योगेषु योजयेत् ॥
अन्यच्च। आवर्त्तमाने पयसि दत्त्वा गन्धकजं रज:।
तज्जातदधिजं सर्पिर्गन्धतैलं वदन्ति हि ॥
गन्धतैलं गलत्कुष्ठं हन्ति लेपाच्च भक्षणात् ॥

गन्धकद्रावकम्।

कासीसं गन्धकं वापि सन्दहेद्यन्त्रयोगतः।
सोरकञ्चापि सन्दह्य द्वयोर्धूम विमिश्रयेत्॥
सीसपात्रेऽम्बुवाष्पेन द्रावकं तेन जायते।
अग्निवीर्य्यं महारुद्रं प्लीहादीनाञ्च भस्मकृत्॥
परं सन्दीपनं वह्नेः सर्व्वोदरविनाशनम्।
जगतां हितकामेन पुरा रुद्रेण निर्मितम्॥
स्रुते रक्तेऽतिघर्मे च विमूर्च्छां तरुणे ज्वरे।
अग्निमान्द्यादिरोगे च शस्यते द्रावकं महत्॥
निर्ज्जलं तन्न सेवेत परं दाहकरं हि तत्।
चतुर्द्दशगुणैस्तोयैर्युतं विन्दुमितं पिबेत्॥

अभ्रम्।

पिनाकं दर्द्दुरं नागं वज्रञ्चेति चतुर्व्विधम्।
पिनाकाद्यास्त्रयो वर्ज्याः वज्रं यत्नात्समाहरेत्॥
मुञ्चत्यग्नौ विनिक्षिप्तं पिनाकं दलसञ्चयम्।
अज्ञानाद्भक्षणं तस्य महाकुष्ठप्रदायकम्॥
दर्द्दुरं त्वग्निनिःक्षिप्तं कुरुते दर्द्दुरध्वनिम्।
गोलकान् बहुशः कृत्वा तत् स्यान्मृत्युप्रदायकम्॥
नागन्तु नागवद्वह्नौ फुत्कारं परिमुञ्चति।
तद्भक्षितमवश्यन्तु विदधाति भगन्दरम्॥
वज्रन्तु वज्रवत् तिष्ठेत्तन्नाग्नौ विकृतिं व्रजेत्।
सर्व्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत्॥
अभ्रमुत्तरशैलोत्थं बहुसत्त्वं गुणाधिकम्।
दक्षिणाद्रिभवं स्वल्पसत्त्वमल्पगुणप्रदम्॥

पीडां विधत्ते विविधां नराणां
कुष्ठं क्षयं पाण्डुगदञ्च कुर्य्यात् ।
हृत्पार्श्वपीड़ाञ्च करोत्यसह्या-
मशुद्धमभ्रं गुरु वह्निहृत् स्यात् ॥

अभ्रस्य शोधनविधिः ।

कृष्णाभ्रकं धमेदग्नौ ततः क्षीरे विनिक्षिपेत् ।
भिन्नपत्रन्तु तत् कृत्वा तण्डुलीयाम्लयोर्द्रवैः ॥
भावयेदष्टयामं तदेवमभ्रं विशुध्यति ॥

धान्याभ्रकस्य विधि. ।

पादांशशालि संयुक्तमभ्रं बद्धाथ कम्बले ।
त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेत् करैः ॥
कम्बलाद्गलितं सूक्ष्म वालुकारहितञ्च यत् ।
तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥

अथास्य मारणविधिः ।

कृत्वा धान्याभ्रकं तच्च शोषयित्वाथ मर्दयेत् ।
अर्कक्षीरैर्दिनं खल्ले चक्राकारञ्च कारयेत् ॥
वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत् ।
पुनर्मर्द्दं पुनः पाच्यं सप्तवारान् पुनः पुनः ॥
ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम् ।
म्रियते नात्र सन्देहः प्रयोज्यं सर्वकर्म्मसु ॥

मतान्तरम् ।

गवां मूत्रेण धान्याभ्रं मर्दयित्वा पुनः पुनः ।
शरावसंपुटे रुद्ध्वा पुटेद्यत्नात् सहस्रशः ॥

अथ सिद्धमतजारणविधिः।

स्फटिकायास्तु भागैकमष्टौ धान्याभ्रकस्य च।
भागानेकत्र संयोज्य सलिलेन विमर्द्दयेत्॥
चक्रवत्तु ततः कृत्वा सम्यक्कृत्वः पुटे पचेत्।
अनेन विधिनाभ्रस्य मृतिः सम्पद्यते ध्रुवम्॥

अथास्यामृतीकरणम्।

सर्वेषां मारिताभ्राणाममृतीकरणं शृणु।
त्रिफलोत्थकषायस्य पलान्यादाय षोड़श॥
गोघृतस्य पलान्यष्टौ पलान्यभ्रस्य वै दश।
एकीकृत्य लौहपात्रे पचेन्मृद्वग्निना शनैः॥
द्रवे जीर्णे समादाय सर्वरोगेषु योजयेत्।
अनुपानं विना ह्यभ्रं जरामृत्युरुजापहम्॥
योजयेदनुपानैर्वा तत्तद्रोगहरं चणात्॥
अन्यच्च। तुल्यं घृतं मृताभ्रञ्च लौहपात्रे विपाचयेत्।
घृते जीर्णे तदभ्रन्तु सर्वयोगेषु योजयेत्॥

अथास्य गुणाः।

अभ्रं कषायं मधुरं सुशीत-
मायुष्करं धातुविवर्द्धनञ्च।
हन्यात् त्रिदोषं व्रणमेहकुष्ठ-
प्लीहोदरग्रन्थिविषक्रिमींश्च॥
रोगान् हन्ति द्रढ़यति वपुर्वीर्य्यवृद्धिं विधत्ते।
तारुण्याढ्यं रमयति शतं योषितां नित्यमेव।
दीर्घायुष्कान् जनयति सुतान् सिंहतुल्यप्रभावान्।

मृत्योर्भीतिं हरति सुतरां सेव्यमानं मृताभ्रम् ॥
मात्रा ६ रत्तिकाः।

हरितालम्।

हरितालन्तु तालं स्यादाल तालकमित्यपि।
हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् ॥
तयोराद्य गुणैः श्रेष्ठं ततो हीनगुणं परम्।
स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत् ॥
पत्राख्यं तालकं विद्याद्गुणाढ्य तद्रसायनम्।
निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु ॥
स्त्रीपुष्पहारकं स्वल्पगुणं तत्पिण्डतालकम् ॥
हरति च हरितालं चारुतांदेहजातां
सृजति च बहुतापामङ्गसङ्कोचपीडाम्।
वितरति कफवातौ कुष्ठरोगं विदध्या-
दिदमसितमशुद्धं मारितञ्चाप्यसम्यक् ॥

अथास्य शोधनविधिः।

तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत्।
दोलायन्त्रेण यामैकं ततः कुष्माण्डजद्रवैः ॥
तिलतैले पचेद्यामं यामञ्च त्रिफलाजले।
एव यन्त्रे चतुर्यामं पक्वं शुध्यति तालकम् ॥
अन्यच्च। तालकं वंशपत्राख्यं चूर्णोदकविभावितम्।
सप्तभिर्वासरैः शुद्धं ततः कर्म्मणि युज्यते ॥

अस्य मारणविधिः।

सदलं तालकं शुद्धं पौनर्नवरसेन तु।
खल्ले विमर्दयेदेकं दिनं पश्चाद्विशोषयेत् ॥

ततः पुनर्नवाक्षारैः स्थाल्या अर्द्धं प्रपूरयेत्।
तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत्॥
आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे।
स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत्॥
दिनान्युत्तरशून्यानि पञ्चवह्निं प्रदापयेत्।
एवं तन्म्रियते तालं मात्रा तस्यैकरक्तिका॥

अथान्यप्रकारः।

शुद्धतालञ्च संभाव्य स्वरसेऽश्वपुरीषजे।
भाव्यं भाव्यं पुनः शुष्कं यावत् स्यात् सप्तवारकम्॥
घोटकस्य करीषाग्नौ दद्याद्गजपुटं पुनः।
मर्दयित्वा पुनर्मर्द्यं पुटं सप्तवगुण्ठकम्॥
तप्ते लौहे विनिक्षिप्ते यदा धूमो न जायते।
तदा सिद्धिं विजानीयाद्भक्षणान्मधुना सह॥
गुञ्जैकामर्द्धगुञ्जां वा सर्वकुष्ठप्रशान्तये।
निहन्ति सकलान् रोगान् कुर्य्यात् कामसमं वपुः॥
तालभस्मकमित्येतद्वलीपलितनाशनम्।
रसायनवरं वृष्यं वह्निदीप्तिकरं परम्॥

एवं शोधितस्य मारितस्य हरि-
तालस्य गुणाः।

हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम्।
कण्डूकुष्ठास्यरोगास्रकफपित्तकचव्रणान्॥
अन्यच्च। हरितालं हरेद्रोगान् कुष्ठमृत्युज्वरापहम्।
शोधितं मारितं कान्तिं कुरुते वीर्य्यवर्द्धनम्॥
मात्रा २ सर्षपाः।

हरितालात् तच्छ्वेतवीर्य्यकर्षण-
विधिः ।

तिर्य्यक्पातनयन्त्रेण ताले भस्मीकृते ततः ।
लभ्यते श्वेतवीर्य्यं यत् तन्मात्रा सर्षपोन्मिता ॥
तद्‌जीर्णं ज्वरं हन्ति कान्तिपुष्टिबलप्रदम् ॥

मनःशिला ।

मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नैपाली कुनटी गोला शिला दिव्यौषधिः स्मृता ॥
तालकस्यैव भेदोऽसौ कथ्यते नागजिह्विका ।
तालकं त्वतिपीतं स्याद्भवेद्रक्ता मनःशिला ॥

मनःशिला मन्दबल करोति
जन्तुं ध्रुवं शोधनमन्तरेण ।
मलानुबन्धं किल मूत्ररोधं
सशर्करं कृच्छ्रगदञ्च कुर्य्यात् ॥

अथास्याः शोधनविधिः ।

पचेत् त्र्यहमजामूत्रे दोलायन्त्रे मनःशिलाम् ।
भावयेत् सप्तधा पित्तैरजायाः सा विशुध्यति ॥

मतान्तरम् ।

अगस्त्यपत्रतोयेन भाविता सप्तवारकम् ।
शृङ्गवेररसे वाऽपि सशुध्यति मनःशिला ॥

मतान्तरम ।

चूर्णतोयैर्मनोगुप्ता सप्तकृत्वो विभाविता ।
शुद्धिमायाति नितरां तत कर्म्मणि युज्यते ॥

शोधिताया अस्या गुणाः ।

मनःशिला गुरुर्वर्ण्या सरोष्णा लेखनी कटुः ।
तिक्ता स्निग्धा विषश्वासकासभूतविषास्रनुत् ॥

मात्रा ३ सर्षपाः ।

अञ्जनम् (सुर्मा इति यस्य प्रसिद्धिः) ।

अञ्जनं यामुनञ्चापि कापोताञ्जनमित्यपि ।
तत्तु स्रोतोऽञ्जनं कृष्णं सौवीरं श्वेतमीरितम् ॥
वल्मीकशिखराकारं भिन्नमञ्जनसन्निभम् ।
घृष्टन्तु गैरिकाकारमेतत् स्रोतोऽञ्जनं स्मृतम् ॥
स्रोतोऽञ्जनसमं ज्ञेयं सौवीरं तत्तु पाण्डुरम् ।
किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोऽञ्जनं मतम् ॥

अस्य शोधनविधिः ।

नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम् ।
दिनैकमातपे शुष्कं शुद्धं योगेषु योजयेत् ॥

शोधितस्याञ्जनस्य गुणाः ।

स्रोतोऽञ्जनं स्मृतं स्वादु चक्षुष्यं कफपित्तनुत् ।
कषायं लेखनं स्निग्धं ग्राहिच्छर्दिविषापहम् ॥
सिध्मक्षयास्रहृच्छीतं सेवनीयं सदा बुधैः ।
स्रोतोऽञ्जनादीनगुणं मतं सौवीरमञ्जनम् ॥

मात्रा २ रक्तिकाः ।

टङ्कनम् ।

टङ्कनं वह्नियोगेन स्फुटितं शुद्धतां व्रजेत् ।
टङ्कनोऽग्निकरो रूक्षः कफघ्नो वातपित्तकृत् ॥

मात्रा अतीसारादौ २ रत्तिके रजःकृच्छ्रे ६ रत्तिकाः गर्भस्रावार्थं १ माषकः।

अथ खर्परशोधनविधिः।

नृमूत्रैर्वाथ गोमूत्रैः सप्ताहं रसकं पचेत्।
दोलायन्त्रे विशुद्धिः स्यात् ततः कार्य्येषु योजयेत्॥

शोधितस्य खर्परस्य गुणाः।

खर्परं कटुकं चारं कषायं वामकं लघु।
लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत्॥
विषाश्मकुष्ठकण्डूनां नाशनं परमं मतम्॥

मात्रा ६ रत्तिकाः।

अथ सर्वोपरसानां साधारणः शोधनविधिः।

सूर्य्यावर्त्तो वज्रकन्दः कदली देवदालिका।
शिग्रुः कोशातकी वन्ध्या काकमाची च बालकम्॥
एषामेकरसेनैव निचारैर्लवणैः सह।
भावयेदम्लवर्गैश्च दिनमेकं प्रयत्नतः॥
ततः पचेच्च तद्द्रावैर्दोलायन्त्रे दिनं सुधीः।
एवं शुध्यन्ति ते सर्वे प्रोक्ता उपरसा हि ये॥

विशेषश्च। कङ्कुष्ठं गैरिकं शङ्खः कासीसं टङ्कनं तथा।
नीलाञ्जनं शुक्तिभेदाः क्षुल्लकाः सवराटकाः॥
जम्बीरवारिणा स्विन्नाः चालिताः कोष्णवारिणा।
शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये॥

मात्रैषां प्रायेण १ माषकः।

अथोक्तेभ्यः शेषाणामुपरसानां गुणाः।

### राजावर्त्तः।

राजावर्त्तः कटुस्तिक्तः शिशिरः पित्तनाशनः।
राजावर्त्तः प्रमेहघ्नश्छर्दिहिक्कानिवारणः॥

मात्रा ६ रक्तिकाः।

### चुम्बकः।

चुम्बकः कान्तपाषाणो यः कान्तो लोहकर्षकः।
चुम्बको लेखनः शीतो मेदोविषगरापहः॥

मात्रा ६ रक्तिकाः।

### अस्य विशेषशोधनमारणविधिः।

अगस्त्यपत्रतोयेन भावयेल्लोहकर्षकम्।
दोलायन्त्रे पचेद्युक्त्या त्रिफलासलिले ततः॥
गोमूत्रेण ततः पिष्ट्वा वराक्वाथेन वा भिषक्।
पुटेत्तं सप्तधा तेन मृतिरस्य प्रजायते॥
एवं शुद्धो मृतो बल्यः पुष्टिकृद्वीर्य्यवर्द्धनः।
ज्वरघ्नो रक्तजननो रक्तपित्त क्षयं तथा॥
प्रमेहान् विंशतिं हन्ति कासान् श्वासान् सुदारुणम्।
शुक्रदोषं रजोदोषं क्लैव्यं हृदयवेपनम्॥

### स्फटी (फटकिरी इति यस्य प्रसिद्धिः)।

स्फटी च स्फटिका प्रोक्ता श्वेता शुभ्रा च रङ्गदा।
दृढ़रङ्गा रङ्गदृढ़ा रङ्गाङ्गापि च कथ्यते॥
स्फटिका तु कषायोष्णा वातपित्तकफव्रणान्।
निहन्ति श्वित्रवीसर्पान् योनिसङ्कोचकारिणी॥

मात्रा १ माषकः।

कठिनी

खटिका कठिनी चापि लेखनी च निगद्यते।
खटिका दाहजिच्छीता मधुरा विषशोथजित्॥
लेपादेतद्गुणा प्रोक्ता भक्षिता साम्ननाशिनी॥
मात्रा २ माषकौ।

गैरिकम्।

गैरिकं रक्तधातुश्च गैरेय गिरिज तथा।
सुवर्णगैरिकन्त्वन्यत् ततो रक्ततरं हि तत्॥
गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम्।
चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम्॥
मात्रा ६ रक्तिकाः।

कासीसम्।

कासीसं धातुकासीसं पांशुकासोसमित्यपि।
तदेव किञ्चित् पीतन्तु पुष्पकासीसमुच्यते॥
कासीसमम्लमुष्णञ्च तिक्तञ्च तुवर तथा।
वातश्लेष्महरं केश्यं नेत्रकण्डूविषप्रणुत्॥
मूत्रकृच्छ्राश्मरीश्वित्रज्वरघ्नं प्लीहनाशनम्॥
मात्रा २ रक्तिके।

वालुका।

वालुका सिकता सूक्ष्मशर्करा शीतलापि च।
वालुका लेखनी शीता व्रणोरःक्षतनाशिनी॥

कङ्कुष्टम्।

हिमवत्पादशिखरे कङ्कुष्टमुपजायते।
कङ्कुष्टं कालकुष्टञ्च विरङ्गं रङ्गदायकम्॥

रेचकं पुलकञ्चापि शोधकं कालपालकम् ।
तद्द्विधा रजताभञ्च परं स्वर्णनिभं तथा ॥
पीतप्रभं गुरुस्निग्धं श्रेष्ठं कङ्कुष्टमादिशेत् ।
श्यामलं यल्लघु त्यक्तसत्त्वं तन्न गुणावहम ॥
कङ्कुष्टं रेचनं तिक्तं कटूष्णं वर्णकारकम् ।
क्रिमिशोथोदराध्मानगुल्मानाहकफापहम् ॥
मात्रा ६ रक्तिकाः ।

---

# षष्ठषष्टितमोऽध्यायः ।

---

अथ रत्नानि

धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत् ।
ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥
रत्नं क्लीवे मणिः पुंसि स्त्रियामपि निगद्यते ।
तत्तु पाषाणभेदोऽस्ति मुक्तादि च तदुच्यते ॥
रत्नं गारुत्मतं पुष्परागो माणिक्यमेव च ।
इन्द्रनीलश्च गोमेदस्तथा वैदूर्य्यमित्यपि ॥
मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव ।

हीरकः ।

हीरकः पुंसि वज्रोऽस्ति चन्द्रो मणिवरश्च सः ।
स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियः स्मृतः ॥

पीतो वैश्योऽसितः शूद्रश्चतुर्वर्णात्मकश्च सः।
रसायने मतो विप्रः सर्वसिद्धिप्रदायकः॥
क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः स्मृतः।
वैश्यो धनप्रदः प्रोक्तस्तथा देहस्य दार्ढ्यकृत्॥
शूद्रो नाशयति व्याधीन् वयःस्तम्भं करोति च।
पुंस्त्रीनपुंसकानीह लक्षणीयानि लक्षणैः॥
सुवृत्ताः फलसम्पूर्णास्तेजोयुक्ता बृहत्तराः।
पुरुषास्ते समाख्याता रेखाविन्दुविवर्जिताः॥
रेखाविन्दुसमायुक्ताः षडस्रास्ते स्त्रियः स्मृताः।
त्रिकोणाश्च सुदीर्घास्ते विज्ञेयाश्च नपुंसकाः॥
तेषु स्युः पुरुषाः श्रेष्ठा रसबन्धनकारिणः।
स्त्रियः कुर्वन्ति कायस्य कान्तिं स्त्रीणां सुखप्रदाः॥
नपुंसकास्त्ववीर्य्याः स्युरकामाः सत्त्ववर्जिताः।
स्त्रियः स्त्रीभ्यः प्रदातव्याः क्लीवं क्लीवे प्रयोजयेत्॥
सर्वेभ्यः सर्वदा देयाः पुरुषा वीर्य्यवर्द्धनाः।
अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा॥
पाण्डुतां पङ्गुरत्वञ्च तस्मात् संशोध्य मारयेत्॥

अथास्य शोधनविधिः।

कुलत्थकोद्रवक्वाथे दोलायन्त्रे विपाचयेत।
व्याघ्रीकन्दगतं वज्रं त्रिदिनं तद्विशुध्यति॥

अस्य मारणविधिः।

हिङ्गुसैन्धवसंयुक्ते क्षिपेत् क्वाथे कुलत्थजे।
तप्तं तप्तं पुनर्वज्रं भवेद्भस्म त्रिसप्तधा॥

एव मारितस्य वज्रस्य गुणा: ।

आयु: पुष्टिं बलं वीर्य्यं वर्णं सौख्यं करोति च ।
सेवित सर्व्वरोगघ्नं मृत वज्रं न संशय: ॥

मात्रा २ यवौ ।

वक्रान्तम् ।

वैक्रान्तं वज्रवच्छोध्यं नीलं श्वेतञ्च लोहितम् ।
हयमूत्रेण तत् सेच्यं तप्तं तप्तं त्रिसप्तधा ॥
ततश्चोत्तरवारुण्या: पञ्चाङ्गपिण्डके क्षिपेत् ।
रुद्धा मूषापुटे पाच्या उद्धृत्य पिण्डकै: पुन: ॥
लिप्ता रुद्धा पुटे पाच्या सप्तधा भस्मतां व्रजेत् ।
भस्मीभूतञ्च वैक्रान्तं वज्रस्थाने नियोजयेत् ॥

मात्रा २ यवौ ।

उत्तरवारुणी राखालशशा तस्या: पञ्चाङ्गं पुष्पफल-मूललतापत्रं पिण्डं कृत्वा तत्र वैक्रान्तं दत्त्वा तत् पिण्डं मूषाभ्यन्तरे स्थापयित्वा सन्धिं रुद्धा गजपुटं दद्यात् । एवं सप्तभि: पुटैर्म्रियते ।

शेषरत्नाना शोधनमारणविधि: ।

स्वेदयेद्दोलिकायन्त्रे जयन्त्या: स्वरसेन च ।
मणिमुक्ताप्रवालानि यामैकं शोधनं भवेत् ॥
कुमार्य्या तण्डुलीयेन स्तन्येन च निषेचयेत् ।
प्रत्येक सप्तवेलञ्च तप्ततप्तानि कृतस्नश: ॥
मौक्तिकानि प्रवालानि तथा रत्नान्यशेषत: ।
क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशय: ॥

अन्यच्च । वज्रवत् सर्व्वरत्नानि शोधयेन्मारयेत्तथा ।

शुद्धानां मारितानाञ्च तेषां शृणु गुणानपि ॥
मणयो वीर्य्यतः शीता मधुरास्तुवरा रसात्।
चक्षुष्या लेखनाश्चापि सारका विषहारकाः ॥

अथोपरत्नानि।

उपरत्नानि काचश्च कर्पूराश्मा तथैव च।
मुक्ता शुक्तिस्तथा शङ्ख इत्यादीनि बहून्यपि ॥
गुणा यथैव रत्नानामुपरत्नेषु ते तथा।
किन्तु किञ्चित् ततो हीना विशेषोऽयमुदाहृतः ॥

---

## सप्तषष्टितमोऽध्यायः।

---

द्रव्यशोधनविधि।

तत्रादौ विषोपविषशोधनविधिः।

विषस्य नाम लक्षणगुणाः।

विषन्तु गरलं क्ष्वेडस्तस्य भेदानुदाहरे।
वत्सनाभ सहारिद्रः सक्तुकश्च प्रदीपनः ॥
सौराष्ट्रिकः शृङ्गकश्च कालकूटस्तथैव च।
हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव ॥

वत्सनाभः।

सिन्धुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा।
यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः ॥

हारिद्रः।

हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः।

सक्तुकः।

यद्ग्रन्थिः सक्तुकेनैव पूर्णमध्यः स सक्तुकः।

प्रदीपनः।

प्रदीपलोहितो यः स्याद्दीप्तिमान् दहनप्रभः।
महादाहकरः पूर्वैः कथितः स प्रदीपनः॥

सौराष्ट्रिकः।

सुराष्ट्रविषये यः स्यात् स सौराष्ट्रिक उच्यते।

शृङ्गकः।

यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितम्।
स शृङ्गक इति प्रोक्तो द्रव्यतत्त्वविशारदैः॥

कालकूटः।

देवासुररणे देवैर्हतस्य पृथुमालिनः।
दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः॥
निर्य्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः।
सोऽहिच्छत्रे शृङ्गवेरे कोङ्कणे मलये भवेत्॥

हालाहलः।

गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा।
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः॥
असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये।
दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते॥

ब्रह्मपुत्रः।

वर्णतः कपिलो यः स्यात् तथा भवति सारकः।

ब्रह्मपुत्त्रः स विज्ञेयो जायते मलयाचले॥

विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च।
आग्नेयं वातकफहृद्योगवाहि मदावहम्॥
तदेव युक्तियुक्तन्तु प्राणदायि रसायनम्।
योगवाहि त्रिदोषघ्नं बृंहणं वीर्य्यवर्द्धनम्॥
ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधनात्।
तस्माद्विषं प्रयोगेषु शोधयित्वा प्रयोजयेत्॥

विषस्य शोधनविधिः।

गोमूत्रे त्रिदिनं स्थाप्यं विषं तेन विशुध्यति।
रक्तसर्षपतैलाक्ते तथा धार्य्यञ्च वाससि॥

विषस्य भक्षणमात्रा १ यवः।

अथोपविषाणि।

अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः।
गुञ्जाहिफेनधत्तूराः सप्तोपविषजातयः॥
अन्यच्च। जयपालश्च धुस्तूरबीजञ्च विषतिन्दुकम्।
विजयालाङ्गलीगुञ्जाकरवीराहिफेनकाः॥
स्नुहीक्षीरमर्कक्षीरमित्याद्युपविषं स्मृतम्।
क्षीरेण परिपूर्णायां स्थाल्यामुपविषं सुधीः॥
दोलायन्त्रे पचेत् सम्यग्विशुध्यति न संशयः॥

जयपालस्य विशेषशोधनम्।

स्विन्नं गोमयतोये वा दुग्धे वा जयपालकम्।
खर्परे मृदुभृष्टं तन्निःस्नेहं शुद्धिमृच्छति॥
अन्यच्च। पत्राङ्कुरं परित्यज्य पेषयेत् पयसा ततः।
खोलके भर्जयित्वा तु पुनर्वस्त्रेण पीडयेत्॥

मातुलुङ्गरसैर्भाव्यं विशोष्य ग्राहयेत्ततः।
जैपाल शुद्धिमाप्नोति दोषं त्यजति निश्चितम्॥
दुग्धेन किञ्चित् पेषयेत्। एवं दन्तीवीजशोधनम्।

विषतिन्दुकस्य विशेषशोधनम्।

त्रिदिनं काञ्जिके न्यस्तः शुद्धः स्याद्विषतिन्दुकः।

अथ कृष्णसर्पविषशोधनविधिः।

विषेषु जङ्गमाख्येषु ग्राह्यं नागोद्भवं विषम्।
इति चैव महाश्रेष्ठं त्रिदोषक्षपणं क्रमात्॥
दीपनं कुरुते सद्यो वाडवाग्निसमोपमम्।
सन्निपातप्रतीकारप्रभावप्रभुरुच्यते॥
नागोद्भवं यथाप्राप्तं विषं गोमूत्रसंयुतम्।
आतपे त्रिदिनं शुष्कं निहितं वीर्य्यद्भवेत्॥

मतान्तरम।

यूनो बलवतो ग्राह्यं कृष्णसर्पाद्विषं नवम्।
तत् सार्षपेण तैलेन संप्लुतं परिशोषयेत्॥
पर्णतोयैर्मुनितरोस्तुलसीपत्रजै रसैः।
क्वाथेनापि च कुष्ठस्य भावयेत् तत् त्रिधा त्रिधा॥
तदेव सर्वथा योज्यं नाविशुद्धं कदाचन।
विषमप्यमृतञ्चैव मृतसञ्जीवनं परम्॥

दारुमूषादीनां शोधनम्।

दारुमूषारक्तशङ्खादीनां शोधनं हरितालस्येव ज्ञेयम्।

गोदन्तशोधनविधिः।

गोदन्तं डमरी यन्त्रे गोमयोपरि संस्थिते।
नागवल्लीदले क्षिप्त्वा पचेद्यामचतुष्टयम्॥

अनेन विधिना चूर्णं गृहीत्वा परिशोधितम्।
मन्देऽग्नावतिसारे च ज्वरे जीर्णे बलक्षये॥
कुष्ठेषु कफरोगेषु पीनसेऽपि च वृद्धिषु।
यथाव्याध्यनुपानेन मात्रया च प्रयोजयेत्॥

## रसचूर्णम्।

विंशतौ सूतभागेषु गन्धकद्रावकं क्षिपेत्।
द्वादशांशमितं पश्चात् तापयेन्मृदुवह्निना॥
निरन्तरं समावर्त्त्य द्रुते सूते च संहरेत्।
ततो भागान् दशांशस्य भागान् सप्तात्र संक्षिपेत्॥
किञ्चिदार्द्रीकृतांस्तोयैः सर्वथा परिमर्द्दयेत्।
अथात्र लवणं दत्वा षष्ठांशप्रमितं भिषक्॥
मर्द्दयित्वा च विस्तीर्णे यन्त्रे तूर्द्धं प्रपातयेत्।
ततः सूतकनान् सर्वान् गृहीत्वा विमलाम्भसा॥
क्षालयित्वा च योगेषु योजयेद्विधिना सुधीः।
रसचूर्णौषधं नाम रेचनं पित्तहृत् परम्॥
रसायनं क्रिमिघ्नञ्च शोषणं दाहनाशनम्।
उपदंशहरं श्रेष्ठं सन्निपातज्वरे शुभम्॥
विसूचीशमनं लालास्रावणं कुष्ठसंहरम्।
जगतामुपकारार्थं शम्भुनैतद्विनिर्मितम्॥

मात्रा—लालादिस्रावणार्थं १ रत्तिका। विरेचन पित्तहरणक्रिमिनाशनार्थं ४ रत्तिकाः।

## भल्लातकस्य शोधनविधिः।

भल्लातकानि पक्वानि समानीय क्षिपेज्जले।

मज्जन्ति यानि तत्रैव शुद्धयर्थं तानि योजयेत् ॥
इष्टकाचूर्णनिकरैर्घर्षणान्निर्विषं भवेत् ॥
मात्रा ४ रक्तिकाः ।

---

## अष्टसप्ततितमोऽध्यायः ।

---

मत्स्यादिपित्तशोधनविधिः ।

मत्स्यादिपित्तं संशुष्कं निम्बद्रावैर्विभावितम् ।
दिनान्ते शुद्धिमायाति सत्यं गुरुवचो यथा ॥

गुग्गुलुशोधनविधिः ।

क्वाथे हि दशमूलस्य चोष्णे प्रक्षिप्य गुग्गुलुम् ।
आलोड्य वस्त्रपूतं तं चण्डातपरिशोषितम् ॥
घृताक्तं पिण्डितं कुर्य्यात् शुद्धिमायाति गुग्गुलुः ।
अन्यच्च । अमृतायाः कषायेण शोषयित्वाथ गुग्गुलुम् ॥
गृह्णीयादातपे शुष्कं तथावक्करवर्जितम् ॥
अन्यच्च । दुग्धे वा त्रिफलाक्वाथे दोलायन्त्रे विपाचितः ।
वाससा गालितो ग्राह्यः सर्व्वकर्मसु गुग्गुलुः ॥
मात्रा ४ माषकाः ।

नखीशोधनविधिः ।

चण्डीगोमयतोयेन यदि वा तिन्तिडीजलैः ।
नखं संक्वाथयेद्भिरलाभे मृण्मयेन तु ॥

पुनरुद्धृत्य प्रक्षाल्य भर्जयित्वा निषेचयेत्।
गुड़पथ्याम्बुना ह्येवं शुध्यते नात्र संशयः॥
मात्रा ६ रक्तिका।

चण्डीमहिषी उक्तं हि महिषी चोच्यते चण्डी सौरभी च निगद्यते इति। अस्या गोमयं मलमित्यर्थः। किन्तु गोमयेनाप्युत्स्वेद उक्तः यथाह—गोविट् काञ्जिकचिञ्चाम्बुसुस्विन्नेति। तिन्तिड़ीजलैरिति तिन्तिडीफलसलिलैरित्यर्थः। अलाभे मृण्मयेनेति कृष्णमृत्तिकामिश्रितजलेनेत्यर्थः।

हिङ्गुशोधनविधिः।

अङ्गारस्थे लौहपात्रे सघृते रामठं क्षिपेत्।
चालयेत् किञ्चिदारक्तवर्णं योगेषु योजयेत्॥
मात्रा ६ रक्तिकाः।

नरसारशोधनविधिः।

नरसारो भवेच्छुद्धश्चूर्णतोये विपाचितः।
दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये॥
मात्रा १ माषकः।

नरसारस्यापरः शोधनविधिः।

नरसारं विनिक्षिप्य तोयेऽत्युष्णे विमर्द्य च।
पृथुना वाससा चाथ स्रावयेदखिलं जलम्॥
शीतीभूते जले तस्मिन् गृह्णीयात् तमधोगतम्।
एवं विशोधितं सर्वकार्य्येषु परियोजयेत्।

यवक्षारः।

गङ्गातीरमृदा विलोड्य सलिले संस्राव्य वस्त्रेण च

तोयेऽस्मिंस्तृणराशिभस्म निखिलं निक्षिप्य तत्तापयेत्।
भूयोऽस्मिन् परिगालिते च विधिना गाढ़ीकृते वह्निना
यावत्क्षारकणाः परस्परयुता जायन्त इत्यद्भुतम्॥
अन्यस्या अपि मृत्तिकाः सलवणा भूमेर्विशुद्धाम्बुना
संलोड्योद्भिदभस्मभिः परिपचेद्विस्राव्य यत्नात्ततः।
एतेनापि च लभ्यते सुविमलः प्राग्वद्यवक्षारक-
स्तं संशोध्य विधानतो विमलधीर्योगेषु दद्याद्भिषग्॥

अथास्य शोधनविधिः।

अत्युष्णे सलिले क्षारं द्रवीकुर्य्याद्भिषग्वरः।
शीतीभूते जले तस्मिन् गृह्णीयात् तदधोगतम्॥
एवं विशोधितः क्षारः शीतलो ज्वरवेगहृत्।
औपसर्गिकमेहे च श्वासकृच्छ्रे सुदारुणे॥
मसूरिकायां रोमान्तिज्वरे शोथे सुतेऽसृजि।
आमवाते च पित्तास्रे कृच्छ्रादिष्वपि शस्यते॥

यवक्षारद्रावकम्।

सोरकाष्टपलं ग्राह्यं गन्धद्रावाच्चतुःपलम्।
वकयन्त्रे परिक्षिप्य क्रमेणाग्निं विवर्द्धयेत्॥
एतेनैव यवक्षारद्रावकं विधिना भवेत्।
आधारे सञ्चितं तद्धि वह्निवीर्य्यं प्रदाहकम्॥
पित्तघ्नं वह्निकृद्बल्यं यकृद्दोषनिवारकम्।
प्लीहाभिवृद्धौ कासे च वह्निमान्द्ये बलक्षये॥
मधुमेहे मूत्रदोषे विकारे चौपदंशिके।
छिन्नव्रणे च लेपार्थं द्रावकं परिशस्यते॥
निर्जलं नैव सेवेत तोयैः पञ्चगुणैर्युतम्।

पिबेद्विन्दुमितं तत्तु सर्वव्याधिनिवृत्तये ॥

रसाञ्जनशोधनविधिः ।

तोयेऽत्युष्णे परिक्षिप्य द्रवीकुर्य्याद्रसाञ्जनम् ।
वाससा स्रावयित्वाथ शोषयेद्भानुरश्मिना ॥
एवं विशोधितं सर्वकार्य्येषु परियोजयेत् ।
विशुद्धं नाशयेद्व्याधीन् नाविशुद्धं कदाचन ॥

जीरकादिशोधनविधिः ।

जीरकद्वयधन्याकमेथिकेन्द्रयवं क्रमात् ।
भृष्ट्वा ग्राह्यं विशेषेण शुद्धिरेषां न संशयः ॥

कटुक्यतिविषयोः शोधनविधिः ।

दोलायां गोमयक्वाथे पचेदतिविषां तथा ।
कटुकीमुष्णदुग्धेन प्रक्षाल्य ग्राहयेदपि ॥

कपालेशाद्यस्या सृजति रजसा विश्वमेतद्विधाता
हरिः सत्त्वेनैवं निखिलनिलयः पाति नित्यं महिम्ना ।
क्षणादीशो नाशं नयति तमसा तां हि नत्वाद्यशक्तिं
मया सूत्रस्थानं लघुमतिभृता वर्णितं तत्प्रसादात् ॥

इत्यायुर्वेदविज्ञाने सूत्रस्थानं समाप्तम् ।

——

# अथ शारीरस्थानम् ।

## प्रथमोऽध्यायः ।

तत्रादावस्थिनिर्णयः ।

शरीरं द्विविधं स्थूलसूक्ष्मभेदात । तद्यथा, चित्यप्तेजो-मरुद्व्योममयं चक्षुरादीन्द्रियग्राह्यं स्थूलसंज्ञं तथा पञ्च-प्राणमनोबुद्धिदशेन्द्रियसमन्वितमपञ्चीकृतभूतोत्थं शरीरं सूक्ष्मसंज्ञा लभते । अस्मिन् पुनः शास्त्रे स्थूलदेहप्रकृतिरेव वर्णनीया । देहः स हि सारभूतैरस्थिभिरेव ध्रियते । तथाच,

अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः ।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् ॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् ।
अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम् ॥
मांसान्यत्र निबद्धानि कलाभिस्छादितानि हि ।
अस्थीन्यालम्बनं कृत्वा न शीर्य्यन्ते पतन्ति वा ॥

तान्यस्थीनि पञ्चविधानि भवन्ति । तद्यथा, अणु-कपालनलकासमगात्ररुचकसंज्ञकानि । केचित् कपाल-रुचकतरुणवलयनलकसंज्ञानि पञ्चविधान्युच्यन्ते । तत्र वलयादीनामण्वादिष्वन्तर्भाव इत्यभेदः । सुकोमलान्यस्थीनि

तरुणसञ्ज्ञामुपास्थिसंज्ञां वा लभन्ते । त्वङ्मांसादिरहित: स्वस्थानस्थित: शरीरास्थिचय' कङ्कालसंज्ञो भवति । स च कङ्काल: षडङ्गो भवति । यथा, शाखाश्चतस्रो मध्य' पञ्चम षष्ठ' शिर इति ।

अखस्थीनि ।

देहस्य दृढ़ान्याचलान्यङ्गानि अखस्थिभिर्विनिर्म्मितानि । मणिबन्धगुल्फादिषु तान्यवस्थितानि ।

कपालास्थीनि ।

देहस्यास्थिमयविवराणि कपालास्थिभिर्निर्म्मितानि । तानि प्रशस्ताकृतीनि । करोटिवस्त्याद्यङ्गेषु कपालास्थीनि सन्ति ।

नलकास्थीनि ।

नलकास्थीनि नलवच्छुषिराणि सुदीर्घाणि च तानि शाखास्ववस्थितानि ।

असमगात्रास्थीनि ।

असमगात्राणामस्थ्नां नाम्नैवाकृतिर्व्याख्याता ।
कशेरुकाशङ्खास्थिप्रभृतीन्यसमगात्राणि ॥

रुचकानि ।

दशना रुचकानि स्युश्चतुर्धा ते भवन्ति हि ।
छेदना: शौवना द्रंष्ट्रा: पेषणास्ते तु संख्यया ॥
अष्टौ चत्वारश्चाष्टौ हि ततस्तु द्वादश स्मृता: ।
दन्तानां पतनं जन्म पुन: पाते त्वसम्भव: ॥

सर्वाण्येवास्थीनि वहिरन्त: समन्तात् कलावृतानि सगर्भाणि च । तेषां गर्भा: पीताभस्नेहविशेषेण पूर्णा:,

स मज्जेत्यभिधीयते। अस्थ्नां सन्धिषु कला न दृश्यते ते हि तनुभिस्तरुणास्थिभिरावृताः सन्ति। अस्थिगात्राणि क्वचिद्वर्टुमन्ति क्वचिदुत्सेधवन्ति च।

अथास्थिसंख्यानम्।

एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणि अन्यत्राङ्गुष्ठात्, अङ्गुष्ठे द्वे तानि चतुर्दश। प्रपदे पञ्च तान्यग्रतोऽङ्गुलीनां मूलास्थिखण्डैः पञ्चभिर्मिलितानि, तेषां कतिपयानि गुल्फसन्धिपर्य्यन्तं विस्तृतानि। गुल्फे सप्त जङ्घायां द्वे। जानुन्येकम्। एकमूराविति। त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति। द्वयोः सक्थ्नोरुपरि वस्तिमुभयतो द्वे श्रोण्यस्थिनी स्तः। अनयोरग्रभागावौपास्थिकास्थिसंज्ञां लभेते। एतेनेतरसक्थि व्याख्यातम्।

पादाङ्गुलिवत् कराङ्गुलिषु चतुर्दश। प्रपदवत् करभे पञ्च। मणिबन्धे अष्टौ। प्रकोष्ठे द्वे। प्रगण्डे एकम्। त्रिंशदेवमेकस्मिन् बाहावस्थीनि भवन्ति। प्रगण्डास्थ्न उपरित एकमंसास्थि। अंसास्थित उरोऽस्थिपर्य्यन्तं विस्तृतं जत्र्वस्थि। एतेनेतरबाहुर्व्याख्यातः।

उरोऽस्थ्येकमुभयजत्रुसंयुतं सत् क्रमेणोदराभिमुखमागतम्। निम्नोऽन्तोऽस्याङ्गुल्यादिभिरनुभूयते।

पृष्ठवंश परस्परमिलितैः कशेरुकाभिधैः षड्विंशत्यास्थिखण्डैर्निर्मितानि। स हि ग्रीवामारभ्य क्रमेण निम्नाभिमुखो गुह्यपश्चाद्भागपर्य्यन्तमागतः। निम्नखण्डं त्रिकनाम्नाभिधीयते।

एकैकस्मिन् पार्श्वे द्वादश पर्शुकाः पृष्ठवंशतो धनु-

वंशक्रा देहस्य सम्मुखभागमागतास्तासामूर्द्ध्वस्थाः सप्त उरोऽस्थ्ना मिलिताः, शेषाः पञ्च साम्मुख्ये न केनाप्यस्थ्ना मिलिताः । प्रथमामारभ्य अष्टमपर्शुकां यावत् क्रमेण दैर्घ्यवृद्धिस्ततः क्रमशो हानिः । एकैकस्याः पर्शुकाया अग्रत एकैकं तरुणास्थि विद्यते, तत्रोर्द्ध्वस्थानां सप्तानां तरुणास्थीनि उरोऽस्थ्ना, तन्निम्नगतानां तिसृणां त्रीणि परस्पर मिलितानि शेषयोर्द्वयोर्द्वे न केनापि मिलिते ।

करोटावष्टास्थीनि सन्ति । यथा, एकं ललाटे । द्वयोः पार्श्वयोरूर्द्ध्वतः परस्परमिलिते द्वे ऊर्द्ध्वशिर पार्श्वास्थिनी । तन्निम्नतो द्वयोः पार्श्वयोर्द्वे शङ्खास्थिनी । पश्चादेकं पृष्ठ-वंशस्योर्द्ध्वकशेरुकोपरिस्थितम् । करोटिमूलेऽग्रतः शौषि-रास्थि, बहुभिः शुषिरैर्व्याप्तत्वादस्य शौषिरसञ्ज्ञता । करो-टिमूले पश्चादेकम् । एतच्छेषैः सप्तभिर्मिलितम् । एवं करोटावष्टास्थीनि पूर्य्यन्ते । करोटिगह्वरं मस्तिस्कस्य स्थानम् ।

वदनमण्डले चतुर्दशास्थीनि सन्ति । यथा, द्वे नासा-स्थिनी वदनमण्डलस्योर्द्ध्वमध्यतो द्वयोः पार्श्वयोः स्थिते परस्परमिलिते च । नेत्रविवरस्याभ्यन्तरमभितो द्वे तन्व स्थिनी । नासारन्ध्रव्यवधायिन्या भित्तेः पश्चादेकम् । नासिकाधश्छिद्रत उपरि द्वे उष्णीषास्थिनी । तालुनि द्वे । द्वे गण्डयोः । द्वे ऊर्द्ध्वहन्वस्थिनी वदनमण्डलमुभयतोऽधि-ष्ठिते । दन्तवेष्टीयवृहद्गह्वरवती च । एकमधोहन्वस्थि निम्नतो वदनस्यावस्थितम् । अत्रैवाधोदन्तपङ्क्तिस्ति-ष्ठति ।

एकैकस्य कर्णस्याभ्यन्तरतस्त्रीणि त्रीणि क्षुद्रास्थीनि सन्ति।

जिह्वामूलात् पश्चादेकं क्षुद्रास्थि, न केनाप्यस्थ्ना संयुतं पेशीभिरेव धृत तिष्ठति।

अङ्गुष्ठमूलादिषु कलायपरिमण्डलानि कतिपयान्यणु-मण्डलास्थीनि सन्ति, संख्यातश्चैतानि प्रायशोऽष्टौ।

अतः षट्चत्वारिंशदधिकद्विशतसंख्यास्थिमयोऽयं नर-कङ्काल इति भगवत उरभ्रस्य मतम्। यथा—

सक्थ्नोर्द्विषष्टिरस्थीनि बाह्वोस्तु द्व्यधिकानि च।
उरस्येकं पृष्ठवंशे षड्विंशतिरतः परम्॥
पर्शुकाः पार्श्वयोर्ज्ञेयाश्चतुर्विंशति सम्मिताः।
अस्थीन्यष्टौ करोटौ च वदनेऽथ चतुर्दश॥
कर्णयोः षट् तथैकञ्च रसनामूलसंश्रितम्।
अष्टाणुमण्डलानि स्युर्द्वात्रिंशद्दशना मताः॥

एतेभ्योऽतिरिक्तान्यपि कतिपयानि क्षुद्रास्थीनि कङ्काले दृश्यन्ते।




প্রতিজ্ঞাতাবত্র ন গুল্ফসন্ধিস্তত্রত্যানি সমাস্থীনি চ।

এষামগ্রতঃ পঞ্চ পাদাঙ্গুলয়ঃ।

ঢ গুল্ফসন্ধিঃ।

ঠ, ড জঙ্ঘাস্থমস্থিদ্বয়ম্।

ঞ জানুসন্ধিঃ।

ট জান্বস্থিঃ।

ঝ ঊর্বস্থি।

জ বঙ্ক্ষণসন্ধিঃ।

থ শ্রোণ্যস্থি।

छ सर्वा हस्ताङ्गुल्यय:।

छ-चिह्नत: च-चिह्नपर्य्यन्तं विस्तृतानि पञ्च करभास्थीनि।

च मणिबन्धस्थान्यष्टास्थीनि।

ङ, घ प्रकोष्ठस्थमस्थिद्वयम्।

ग कर्प्पूरसन्धि:।

ख प्रगण्डस्थमस्थि।

द स्कन्धसन्धिवंसास्थि च।

क पृष्ठवंश:। तस्य सम्मुखे स्थितमुरोऽस्थि। इदमुभयपार्श्वस्थेन जतुद्वयेन सह मिलितम्।

क-चिह्नितात् पृष्ठवंशाङ्गुह्यदेशस्य पश्चाद्भागपर्य्यन्तं विस्तृतं यदस्थि तस्य निम्नभागं त्रिकनाम्नाभिधीयते।

द-चिह्नादुरोऽस्थिपर्य्यन्तं विस्तृतं जतुद्वयम्।

त पर्शुकासमूह:।

पृष्ठवंशस्योपरि वदनमण्डलास्थीनि करोट्यस्थिप्रभृतीनि च।

---

## द्वितीयोऽध्यायः।

---

अथ सन्धयः।

उभयोर्मिलनं सन्धिरस्थ्नोः स द्विविधो मतः।
चेष्टावान् स्थिरसन्धिश्च चेष्टावांश्च पुनर्द्विधा॥
सम्यक्चेष्टोऽल्पचेष्टश्च तरुणास्थिभिरादिमः।
संयुतः कलया स्नेहस्राविण्या च समावृतः॥
तरुणास्थिभिरालिप्तै रज्जुभिर्वा समावृतैः।
अस्थिप्रान्तैः कृतोऽन्यश्च स्थिरस्तु केवलास्थिभिः॥
शाखासु हन्वोः कट्याश्च तथाप्यूर्ध्वंगयोर्द्वयोः।
कशेर्वोर्जत्रुणोश्चैव सम्यक्चेष्टास्तु सन्धयः॥
अल्पचेष्टाः कशेरूणां शेषाणां परिकीर्त्तिताः।
इतरे सन्धयः सर्वे स्थिरा मुनिभिरीरिताः॥
अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः।
पेशीस्नायुशिराणान्तु सन्धिसंख्या न विद्यते॥

---

# तृतीयोऽध्यायः ।

---

रज्जवः ।

अस्थ्नां संयोजिकाः शुभ्राः सौत्रिका रज्जवो मताः ।
काश्चित् स्थूलाः प्रशस्ताश्च दीर्घा बहुविधास्तथा ॥
मध्यकाये तथा बाह्वोः सक्थ्नोरेव च ताः स्थिताः ।
अस्थीन्याभिर्निबद्धानि स्वस्थानान्न चलन्ति हि ॥
पदाङ्गुलीनां पर्वास्थ्नां योजिन्यस्ताः परस्परम् ।
अङ्गुल्यस्थ्नां तथा सन्ति प्रपदास्थ्नाञ्च योजिकाः ॥
गुल्फास्थ्नां प्रपदास्थ्नाञ्च गुल्फास्थ्नाञ्च परस्परम् ।
गुल्फसन्धेश्च जङ्घास्थ्नोर्जानुसन्धेस्ततः परम् ॥
तथा वङ्क्षणसन्धेश्च रज्जवो विविधा मताः ।

अङ्गुल्यस्थ्नां प्रपदास्थ्ना योजिका इत्यत्र या अङ्गुल्यस्थ्नां योजिका बन्धनकारिण्यस्ता एव प्रपदास्थ्नाञ्च योजिका इति बोध्यम्, अङ्गुल्यस्थ्नां प्रपदास्थ्नाञ्च परस्परयोजिका इत्यर्थः। अङ्गुल्यस्थिभिः सह प्रपदास्थ्नां योजिका इति फलितार्थः। (एवमन्यत्रापि ज्ञेयमिति।)

कराङ्गुलीनां पर्वास्थ्नां संयोजिन्यः परस्परम् ।
अङ्गुल्यस्थ्नां तथा सन्ति करभास्थ्नाञ्च योजिकाः ॥
तदस्थ्नां मणिबन्धास्थ्नां तेषाञ्चापि परस्परम् ।
मणिबन्धस्य सन्धेश्च प्रकोष्ठास्थ्नोश्च योजिकाः ॥
कफोणेः स्कन्धसन्धेश्च तथाप्यंसस्य रज्जवः ।

अंसजत्रुस्थियोजिन्य उरोऽस्थिजत्रुयोजिका: ॥
रज्जवो मध्यकायस्य पर्शुकोरोऽस्थियोजिका: ।
त्रयाणामपि भिन्नानामुरोऽस्थ्न: परिमेलिका ॥
कशेरुकापर्शुकानां कशेरूणां परस्परम् ।
शिरस: पश्चिमास्थ्नश्च तथाप्यूर्द्ध्वगयोर्द्वयो: ॥
कशेर्वोर्हनुकुल्यस्य पृष्ठवस्त्यस्थियोजिका: ।
संयोजिन्यश्च वस्त्यस्थ्नां परस्परमुदीरिता: ॥

---

## चतुर्थोऽध्याय: ।

---

अथ पेश्य: ।

पेश्यस्ता लोहिता: सौत्रा: सर्वकायसमाश्रिता:
ता: सङ्कोचनशीलाश्च समन्तात् कलयावृता. ॥
स्पन्दनादिप्रवर्त्तिन्यो द्विधा ता: परिकीर्त्तिता: ।
इच्छाधीनाश्च काश्चित् स्यु: स्वाधीना: काश्चिदेव च ॥
सक्थिबाह्वादिषु ज्ञेया इच्छाधीनास्तथापरा: ।
अन्त्रोपस्थादिषु प्रोक्ता मुनिभिर्देहवेत्तृभि: ॥
धमन्यस्थिशिरास्नायुसन्धयश्च शरीरिणाम् ।
पेशीभि: संवृता: सर्वे भवन्ति बलिनो ह्यत: ॥

---

# पञ्चमोऽध्यायः ।

---

कलास्वरूपकथनम् ।

स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा ।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः ॥
अन्तेषु धवलाः पेश्यश्चिक्कणा रज्जवो यथा ।
नष्टसूत्राः स्थितास्तास्तु कण्डरा नामतो विदुः ॥
यद्यच्च संकुचेदङ्गं पृथक् तत्रैव संस्थितिम् ।
पेशीखण्डस्य जानीयाद्भिषग्भिरिति निश्चितम् ॥

---

# षष्ठोऽध्यायः ।

---

अथ पेशीसंख्यानम् ।

मानवदेहे चत्वारि पेशीशतानि सन्ति, सुश्रुतस्तु पञ्चशतान्याह । तासां कतिचिद्विशेषेणोच्यन्ते ।

मूर्द्धन्युपरित एका तन्वी करोटिः पश्चादस्थ्नः शङ्खास्थिभ्याञ्च समुत्थाय मूर्द्धोर्द्धमतिव्याप्य तत्र च कण्डरामयी सती ललाटाधःपेशीपर्य्यन्तमागता । एतया भ्रुवावूर्द्ध्वमाकृष्येते ।

कर्णदेशयोस्तिस्रस्तिस्रो यथाक्रमं पश्चादूर्द्ध्वमाभिमुख्ये च स्थिताः। आभिः कर्णौ पश्चादूर्द्ध्वमाभिमुख्ये चाकृ-ष्येते।

समन्तान्नेत्रवर्त्म परिवेष्ट्य स्थितैका नेत्रं निमीलयति। नयनपुटाध स्थितापरा भ्रुवौ परस्परासन्ने करोति। अन्यै-कास्तुनाडीमन्तराकर्षति।

नेत्रस्थानां पेशीनां कयाचिदूर्द्ध्ववर्त्म ऊर्द्ध्वमाकृष्यते। कयाचिन्नेत्रमण्डलमूर्द्ध्वं कयाचिदधः कयाचिदन्तः कया-चिद्बहिराकृष्यते। कयाचिदन्तरभितः कयाचिद्बहिः प-श्चाद्वा घुर्ण्यते।

नासादेशे तिस्रो नसो नमनादिक्रियाः कुर्वन्ति।

ओष्ठस्थानां पेशीनां कयाचिन्मुखसंवृतिः कयाचिदोष्ठ-नसोरूर्द्ध्वाकर्षणं कयाचिदोष्ठस्योर्द्ध्वाकर्षणं कयाचिदास्य-प्रान्तयोरन्तराकर्षणं कयाचित्तयोरूर्द्ध्वाकर्षणं कयाचिद्वास्यं कयाचिन्नासापुटसंवरणञ्च सम्पाद्यत इति।

अधरस्थानां कयाचिदधरस्याधस्तादाकर्षणं कयाचि-दूर्द्ध्वाकर्षणं कयाचित् सृक्कद्वयस्याधस्तादाकर्षणं सम्पाद्यते।

हनुस्थाभिरूर्द्ध्वहनुस्थाभिश्च हन्वस्थ्न ऊर्द्ध्वाकर्षणं मुखा-न्तर्गृहीततोयादीनां वहिः क्षेपणं हन्वस्थिचालनमित्याद्याः क्रियाः सम्पाद्यन्ते।

ग्रीवास्थिताभिश्चिवुकाधश्चर्म्मणोऽधोऽवनमनं मुखमण्ड-लस्येतस्ततश्चालनं ( आभ्यामेव शिरोमण्डलस्याभिनमनं सम्पाद्यते ) जिह्वामूलस्थितस्यास्थ्नः कण्ठस्य चाधोनमनम् आस्यव्यादानं जिह्वाचिवुकयोरधोनमनम् व्यवहरणं ता-

स्वधीनमनं तदूर्द्धाकर्षणमुपजिह्वानमं पर्शुकानामूर्द्धाकर्षणं पृष्ठवंशस्य नमनं शिरोमण्डलस्याघूर्णनञ्चेत्याद्याः क्रियाः सम्पाद्यन्ते।

पृष्ठस्याभिः स्कन्धस्य पश्चादूर्द्धञ्चाकर्षणं मध्यकायस्याभितः समाकर्षणं पृष्ठवंशस्यर्जूकरणमित्याद्याः क्रियाः सम्पाद्यन्ते।

वक्षस्येकैकस्मिन् पार्श्वे पर्शुकानां वह्रिर्देशमभिव्याप्यैकादशैकादश सन्ति। तासामेकैका द्वे द्वे पर्शुके अभिव्याप्य वर्त्तते। एवमन्तरेकादशैकादश। उरोऽस्थ्नैका तदस्थ्नोऽधोभागाच्चतुर्थीपञ्चमीषष्ठीनां पर्शुकाना तरुणास्थिपर्य्यन्तमुपस्थिता। वक्षस्तल एका उदरवक्षसी पृथक् करोति। आभिः श्वसनप्रश्वसनशोणितयन्त्रधारणाद्याः क्रियाः सम्पाद्यन्ते।

उदरस्थिताभिर्वमनरेचनमूत्रणप्रसवनाद्याः क्रियाः सम्पाद्यन्ते। गुह्यस्थिताभिर्मूत्रणरेचनपायुसङ्कोचनलिङ्गोत्थापनादीनि कर्म्माणि।

उरोऽस्थिजत्रु-पर्शुकांस-प्रगण्ड-प्रकोष्ठकराङ्गुल्यादिषु बह्वः पेश्यः सन्ति। ताः श्वसनालिङ्गनबाहुचालनग्रहणक्षेपणादीनि बहूनि कर्म्माणि कुर्वन्ति।

श्रोणिस्थानामेकातिपृथुला इयं त्रिकस्रोण्यस्थित ऊर्वस्थ्न ऊर्द्ध्वभागपर्य्यन्तमागता। श्रोणिप्रदेशे अपरा अपि कतिपयाः सन्ति। आभिः सुखास्या ऊर्वस्थ्नो वहिराकर्षणं क्रमशः तथैवविधान्यन्यानि च कर्म्माणि निष्पाद्यन्ते।

ऊरुजङ्घापादाङ्गुलिस्थाभिः सक्थिसंचालनदण्डायन-

गमनप्रभृतीति कर्म्माणि सम्पादयन्ति ।

पादयोस्तलतः पृष्ठे ग्रीवायामपि ताः स्थिताः।
उपर्य्युपरि भावेन स्वं स्वं कुर्वन्ति कर्म्म च ॥
पेश्यः कुर्वन्ति कर्म्माणि निखिलानि शरीरिणाम्।
गोपयन्ति च कुल्यानि जनयन्ति सुखानि च ॥
नाभविष्यन्नयेताश्चेद्गतिस्पन्दविवर्ज्जिताः।
काष्ठीभूता मृतप्राया अभविष्यन् हि देहिनः ॥
भारवाहो गतिः स्पन्दो व्यायामः श्वसनं स्थितिः।
आस्योपगूहनं हास्यं गीतिर्नर्त्तनवादने ॥
विहाराहारनिर्हारास्चुम्बनं शयनं रतिः।
गर्भोत्पत्तिस्तथैवन सर्वं पेशीकृतं मतम् ॥
अथ किं बहुनोक्तेन प्राणिना प्राणधारणे।
कारणानि प्रधानानि पेश्य एवेति निश्चितम् ॥

---

## सप्तमोऽध्यायः।

---

अथ धमन्यः।

सव्यप्रकोष्ठाद्धृदयस्य नाडी
द्वितीयपर्शोस्तरुणास्थि यावत्।
ऊर्द्ध्वं गता त्र्यङ्गुलसम्मिता सा
शाखे च तस्या हृदयं प्रयाते ॥

ततश्च पश्चात् प्रसृता तृतीय
कशेरुभित्तं ननु सव्यपार्श्वे ।
समागतास्या वपुषो महत्य:
शाखाश्च तिस्रो विसृता: समन्तात् ॥
अवाङ्मुखी साथ कशेरुखण्डं
तुरीयमाप्ता खलु निम्नदेशे ।
भागत्रयं वर्णितमेतदेव
स्मृत हि मूलं धमनीगणस्य ॥
धमन्यथोरस्तलगां विभिद्य
पेशी प्रविष्टोदरगह्वरान्त: ।
इयच्च मूल धमनीगणस्य
स्कन्धोऽथवोक्तोऽपि यथा द्रुमस्य ॥

अत: शाखा: प्रशाखाश्च क्रमात् सूक्ष्मतराश्च ता: ।
व्याप्नुवन् निखिलं देहं शोणितौघप्रवाहिका: ॥
कलास्वस्थिषु पेशीषु मस्तुलुङ्गे च मज्जसु ।
सर्वत्रैव स्थिता एता धमन्यो धमनीष्वपि ॥
नास्ति वर्ष्मणि तत्राङ्ग धमन्यो यत्र न स्थिता: ।
केशादिष्वेव नाड्यस्ता न दृश्यन्ते कदाचन ॥
हृदयाच्छोणितं शुद्धं निर्म्मलं प्राणधारणम् ।
सुलोहितं सुखोष्णञ्च वाहयन्ति समन्तत: ॥
मुहुर्मुहु: क्षयं यान्ति सर्वाण्यङ्गानि देहिनाम् ।
श्वासभाषगतिस्पन्दरतिचिन्तादिकारणात् ॥
क्षपयित्वा क्षय तेषामङ्गानां रक्तयोगत: ।
कुर्य्यु: सवर्द्धनं नाड्यो जनयेरन् बलं तथा ॥

सर्वांश्चैवोपदानानि शारीराणि च शोणिते ।
यतः सन्ति ततस्तत् स्यात् कारणं देहरक्षणे ॥
शोणिताज्जायते पेशी कला मज्जास्थिरेतसी ।
बलौजसी मस्तुलुङ्ग' सर्वं शोणितसम्भवम् ॥
कुल्याभिः सलिलं यद्वद्दोद्यानिकमहीरुहान् ।
जीवयेत् तर्पयत् तद्वद्धमनीभिश्च शोणितम् ॥
सर्वाण्यङ्गानि जीवानामिति धन्वन्तरेर्मतम् ।
अतो धमन्यो विज्ञेयाः प्राणने चापि हेतवः ॥
शोणितस्रोतसां वेगात् स्पन्दन्ते च धरा मुहुः ।
तासां स्पन्दनतो ज्ञेयं सुखं दुःखञ्च देहिनाम् ॥
अङ्गुष्ठमूले धमनी सततं या परीक्ष्यते ।
भागो द्वितीयो मूलस्य तदादि' कीर्त्तितो बुधैः ॥
कक्षे चापि प्रगण्डे च प्रकोष्ठेऽथ करे तथा ।
अङ्गुल्या ह्यनुभूयेत बाह्वोरेषा द्वयोरपि ॥
मणिबन्धे यथा नाडी तथा गुल्फेऽनुभूयते ।
कण्ठे पार्श्वकपाले च वङ्क्षणे योनिशिश्नयोः ॥
तनुत्वगावृतेष्वेव तथाङ्गेष्वपरेषु च ।
शोणितौघाच्च सूक्ष्माणामनुभावो गतेर्भवेत् ॥
यं यं हेतुं समाश्रित्य याति यां यां गतिं धरा ।
यया यया सुखं गत्या दुःखं वापि यया यया ॥
यया यया च जीवोऽय याति मृत्युवशं ध्रुवम् ।
कृता तद्विवृतिर्वत्स सूत्रस्थाने मया पुरा ॥



( द्वितीया प्रतिकृतिः )

अत्र द्वितीयप्रतिकृतौ ख ग धमनीमूलम्। ऊर्द्ध्व-मुखं पश्चाद्गामि निम्नमुखञ्चेति तत् त्रिविधम्।

द क कपालस्था धमनी।

ख न गलस्था धमनी।

ग कण्ठस्था धमनी।

क कक्षनाड़ी।

ज धमनी स्कन्धस्था या वक्षःस्था मूलनाड़ी।
त ७ उदरस्था मूलनाड़ी।
ट ७ ज आभ्यन्तरवस्तिनाड़ी।
ज ट वाह्यवस्तिनाडी।
च ऊरुस्था नाड़ी।
द नलकास्थीया धमनी।
न जानुपश्चाद्धमनी।
व जानुस्था सम्मुखनाड़ी।
थ त पर्शुकाभ्यन्तरधमनी।
ह क प्रगण्डीया नाड़ी।
त क मणिबन्धस्था नाड़ी।
ग ध प्रकोष्ठीया धमनी।

——

## अष्टमोऽध्यायः।

——

अथ शिराः।

धमन्य इव विज्ञेयाः शिराश्च सर्वदेहगाः।
रक्तस्रोतःप्रवाहिण्यो देहरक्षणहेतवः॥
शिरस्युरसि कण्ठे च बाह्वोरपि च याः स्थिताः।
सर्वास्ता जत्रुणोराराच्छिलिवैकलमागताः॥
सक्थ्नोरुदरवस्त्योर्या वस्तिदेशे च सङ्गताः।

भित्त्वा वक्षस्तले पेशीं नयन्त्यस्रं हृदालयम् ॥
शिराभिर्निखिलाभिश्च शिरासङ्गमजातयोः ।
द्वयोर्महत्योः शिरयोरप्यैते शोणितं सदा ॥
हृदयाच्छोणितं शुद्धमाश्रित्य धमनीपथम् ।
गुणविश्राणनाद्देहं क्षीणं पुष्णाति नित्यशः ॥
एवं त्यक्तगुणं कृष्णं देहनाशगुणान्वितम् ।
शिराभिश्च पुनर्याति दक्षिणं हृदयालयम् ॥
तत्र निःश्वासवातेन वीतदोषं गुणान्वितम् ।
सुरक्तं धमनीभिश्च पुनर्भ्रमति वर्ष्म तत् ॥
एकैकस्या धमन्याश्च कुत्रचित् पार्श्वयोर्द्वयोः ।
विद्यमाने शिरे द्वे द्वे वहतो दुष्टशोणितम् ॥
नाड्यः सूक्ष्मा नयन्त्यस्रं धमनीभ्यः शिराः सदा ।
शिराभिर्हृदयं याति ततस्तद्धमनीः पुनः ॥
एवं पुनः पुनर्देहं भ्रमेदस्रं निरन्तरम् ।
आभूमिस्पर्शनाद्यावन्मृत्यु सर्वस्य देहिनः ॥
निवृत्तायां गतौ रक्तस्रोतसां सद्य एव हि ।
मृत्युर्भवति जीवस्य विचिकित्सा न विद्यते ॥
सन्ति सूक्ष्माः शिराः काश्चित् काश्चिच्च पृथुलास्तथा ।
काश्चिद्गम्भीरदेशस्था अगम्भीरगतास्तथा ॥
बाह्वोः सक्थ्नोरधःस्थाना अगम्भीरस्थिता हि याः ।
अमांसलेषु देशेषु व्याधिक्षीणस्य देहिनः ॥
शिरा व्य..नराः स्युस्तास्तद्बलक्षयलक्षणम् ।
द्रुंहणं ..नशमनं तत्र कार्य्यं यथायथम् ॥



तृतीया प्रतिकृतिः।

अत्र तृतीयप्रतिकृतौ थ ग्रीवापार्श्वस्था बाह्या अभ्यन्तरस्था च कण्ठशिरा।

ग अनाख्याता शिरा।

घ जत्रुनिम्नशिरा।

ञ वृक्कद्वयम्।

ट वृक्कशिरा।

ध ऊर्ध्वं वृक्कग्रन्थिषि

ड रेतोरज्जुशिरा।

थ बाह्यवस्तिशिरा।

जत्रुणोर्निम्ने ऊर्द्ध्वस्था महाशिरा वक्षावधःस्था महाशिरा च।

---

## नवमोऽध्यायः।

---

### अथ स्रोतांसि।

तत्र केचिदाहुः शिराधमनी स्रोतसामविभागः शिराविकारा एव धमन्यः स्रोतांसि चेति। तत्तु न सम्यक्। अन्यान्येव हि स्रोतांसि धमन्यश्च शिराभ्यः कस्माद्व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्म्मवैशेष्यादागमाच्च केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्म्मसु भवति।

स्रोतांसि सन्ति देहेऽस्मिन् धमन्यश्च शिरा यथा।
तानि लसीकागर्भाणि कर्म्म कुर्वन्ति दैहिकम्॥
मस्तिष्के नाभिरज्जौ च नेत्रयोः पृष्ठमज्जनि।
नखेषु कण्डरायाञ्च न सन्त्यस्थ्न्युपास्थिनि॥
स्रोतसां निखिलानाञ्च परस्परसमागमात्।
महास्रोतोद्वयं जातमधस्ताज्जत्रुणोश्च तत्॥
शिरासङ्गमसंप्राप्तं स्वरसं तत्र निक्षिपेत्।

स रसः शैररक्तेन हृत्कोष्ठञ्च समागतः ॥
शोणितीभूय व्रजति देहमेतन्निरन्तरम् ।
स रसो देहजः पूर्वं पश्चाच्छोणिततां व्रजेत् ॥
धराभ्यस्तान्याददति पदार्थान् देहपोषकान् ।
ग्रहण्यादिभ्य आदाय रसमाहारजं तथा ॥
शिरामार्गेण हृदयमानयन्ति निरन्तरम् ।
बलं पुष्टिञ्च लावण्यं देहस्तन्नित्यमाव्रजेत् ॥

---

## दशमोऽध्यायः ।

---

अथ स्नायवः ।

स्नायवः सूत्रवत् सूक्ष्मा शुभ्रा निखिलदेहगाः ।
कारणानि चेतनाना सदा चैतन्यसाधने ॥
सुखदुःखावबोधे च प्रवृत्तौ च निवर्त्तने ।
रूपगन्धरसस्पर्शशब्दज्ञाने च हेतवः ॥
निखिलास्ताश्च सञ्जाता मस्तिष्कात् पृष्ठमज्जनः ।
शिरोमण्डलमेवाद्या शेषाः शेषाङ्गमाश्रिताः ॥
तेषु तेषु च भावेषु देहमासेषु वत्सलाः ।
कम्पमानाः कम्पयन्ते मस्तुलुङ्गञ्च तत्क्षणात् ॥
तस्य विकम्पभेदेन ज्ञानभेदो भवेद्दृढः ।
अतो मस्तिष्कमेवैको ज्ञानहेतुः प्रकीर्त्तितः ॥

करोटिगह्वरान्तस्तद्वसेदाज्यसुपेलवम् ।
सुशुभ्रत्वा समतलमाभिनत्त्व द्विधोपरि ॥
नेत्रे रूपवतां बिम्बपतनान्नेत्रवत्मसाः ।
भावान्तर मस्तुलुङ्गं नयन्ते तद्धि दर्शनम् ॥
पदार्थानां गन्धवतां गन्धाणूना समागमात् ।
नासास्थाः कुर्वते तद्वत् तद्घ्राणं परिकीर्त्तितम् ॥
तथा रसवताच्चाणु सङ्गमाद्रसनाश्रिताः ।



चतुर्थी प्रतिकृतिः ।

अस्मिन् चतुर्थचित्रचित्रे १, २, ७, ४, प्रभृतिचिह्नतः १८, १९, २० चिह्नपर्यन्तं विस्तृतानि मस्तिष्कनिम्न-भागस्य प्रतिरूपाणि। तन्मध्ये

१ क्षुद्रमस्तिष्कः।

७ मस्तिष्कस्याग्रखण्ड।

४ घ्राणस्नायुः।

५ दर्शनस्नायुः।

८ दर्शनस्नायुप्रदेशः।

९ नेत्रस्पन्दकः स्नायुः।

१० दृष्टिसन्धिः।

१२ पश्चाच्छिद्रान्वितः प्रदेशः।

क्रियां तां कुर्वते तद्धि रसनत्वाभिधीयते॥
शीतोष्णादिगुणवतां द्रव्याणां त्वचि सङ्गमात्।
तत्रस्थाः कर्म्म कुर्वन्ति तादृशं स्पर्शनं हि तत्॥
परस्पराभिघातेन द्रव्याणामनिलस्तदा।
तरङ्गवानभिहन्यात् कर्णान्तः श्रवणं ततः॥
गत्यादिष्वपि कीर्त्यन्ते स्नायवो मुख्यहेतवः।
अथ किं बहुनोक्तेन जीवत्वं स्नायुसम्भवम्॥
स्नायुनाशो भवेद्यस्मिन्नङ्गे तत्स्यान्मृतोपमम्।
पक्षाघातादिरोगेषु कारणं तद्विधं मतम्॥



पञ्चमी प्रतिकृतिः

अत्र पञ्चमप्रतिकृतौ क मस्तकस्थो वृहन्मस्तिष्कः ।

ख क्षुद्रमस्तिष्कः ।

ग ग्रीवास्नायुः ।

घ वदनस्नायुः ।
ङ प्रगण्डसन्धिस्नायुः ।
ज प्रगण्डस्नायुः ।
च प्रकोष्ठस्नायुः ।
छ प्रकोष्ठनिम्नस्नायुः ।
झ करतलस्नायुः ।
ठ नितम्बस्नायुः ।
ञ पर्शुकाभ्यन्तरस्नायुः ।
ड जानुपश्चात्स्नायुः ।
ढ जान्वभिमुखस्नायुः ।
ण पदतलस्नायुः ।
ट कटीस्नायुः ।
त जरुस्नायुः ।

---

## एकादशोऽध्यायः ।

---

### अथ गुहाः ।

शरीरं त्रिगुहं प्रोक्तं करोटिहृदयोदरैः ।
करोटौ मस्तकस्नेहो वक्षस्युण्डुकफुप्फुसौ ॥
हृत्कोष्ठश्चोदरे सन्ति यकृत्पित्ताशयामनौ ।
क्लोम स्कन्धो धामनीकः क्षुद्रान्त्रं स्थूलमन्त्रकम् ॥
प्लीहा वृक्कद्वय मूत्रनाड़ी वस्तिगुंद तथा ।
अतः शृणुत सर्वेषामुक्तानां गुणकर्म्मणी ॥

## मध्यगुहा ।

विवृतोर्द्ध्वगुहा पूर्वमिदानीं मध्यमा मया ।
सकोष्ठा वर्ण्यते वत्सा ! निशामयत तत्त्वतः ॥
उरोऽस्थि पर्शुकोपास्थि पर्शुका अभितः स्थिताः ॥
पार्श्वयोः पर्शुकाः सन्ति पश्चात् पृष्ठकशेरुकाः ॥
पर्शुकाद्योर्द्ध्वपट्टश्च शिरस्यस्याभिवर्त्तते ।
आस्तेऽधस्तात्तथा वक्षस्तलपेशी च वक्षसः ॥
गर्भं गुहाया एतस्या हृत्कोष्ठोऽण्डुकफुप्फुसाः ।
सन्त्यमीषां तथाणाञ्च ब्रवीमि गुणकर्म्मणी ॥

## हृत्कोष्ठः ।

उरोमध्यगतः कोष्ठो लवनीफलवत्तुलः ।
रक्ताधारश्चतुर्गर्भ आवरण्या समावृतः ॥
तिर्य्यक्स्थो धमनीभूमिः फुप्फुसद्वयशीर्षकः ।
स्फीत्या कुञ्चनशीलोऽसौ हृत्कोष्ठ इति कीर्त्तितः ॥
ऊर्द्ध्वं गर्भद्वयं तस्य निम्नतश्चापि तद्द्वयम् ।
ऊर्द्ध्वस्थे दक्षिणे गर्भे शिरासङ्गमजे शिरे ॥
अर्पयतो महती द्वे रक्तं गुणविवर्जितम् ।
तधःस्थोद्वामगर्भाच्च धमनी मूलमुत्थितम् ॥
सर्वेष्वपि च गर्भेषु रक्तं क्रमसमागतम् ।
दोषहीनं गुणैर्युक्तं जन्तुं जीवयते गुणैः ॥
अनिशं स्फायते कोष्ठः प्रकृत्या संकुचत्यपि ।
आभूमिस्पर्शनाद्यावन्मृत्यु सर्वस्य देहिनः ॥
तदाकुञ्चनतो रक्तं महता खलु रहसा ।
प्रविशेद्धमनीमूलं ततो भ्रमति विग्रहम् ॥

स्फायना कुञ्चने तस्य विरमेतां क्षणं यदि।
सहसैव भवेन्मृत्युर्नास्ति कोऽप्यत्र संशयः॥

फुप्फुसः।

फुप्फसस्तु द्विधा भिन्नो वामदक्षिणभेदतः।
पेश्यां वक्षस्तलस्थायां समासन्नोऽणुशीर्षकः॥
अधो विशालो बहुभिः कोषैरिव मधुक्रमः।
दुष्टशोणितसंशुद्धिकोषोऽयं परिकीर्त्तितः॥
तरुणास्थिमयी नाड़ी जिह्वामूलात् प्रधाविता।
अधः शाखाद्वयवती फुप्फुसद्वयमागता॥
ततः शाखाद्वयात्तस्माद्बह्व्यः शाखा विनिःसृताः।
कोषेषु फुप्फुसस्थेषु सुसूक्ष्माः समुपस्थिताः॥
नासामुखसमाकृष्टः पवनः श्वासकर्म्मणा।
श्वासनाड्या तया सर्वांस्तान् कोषान् प्रविशत्यसौ॥



षष्ठप्रतिकृतिः।

अथ षष्ठचित्रचित्रे ग श्वासनाड़ी अनया मुखनासा-कृष्टो वाह्यो वायुः फुप्फुसे प्रविशति ।

य मूलान्ननाड़ी ।

ङ आभ्यन्तरकण्ठशिरा ।

ज, छ, झ, थ चिह्निताः काश्चिद्विशेषिताः शिराः ।

ञ ऊर्द्धस्थूला महाशिरा ।

ट धमनीमूलम् ।

च ऊर्द्धस्थो दक्षिणहृत्प्रकोष्ठः ।

ड दक्षिणफुप्फुसधमनी ।

थ धामनिकी प्रणाली ।

त वामफुप्फुसधमनी ।

ह निम्नस्थो दक्षिणहृत्प्रकोष्ठः ।

म हृद्गर्भीया वृतिः ।

क्ष निम्नस्थूला महाशिरा ।

ण ऊर्द्धस्थो वामहृत्प्रकोष्ठः ।

ल निम्नस्थो वामहृत्प्रकोष्ठः ।

फ फुप्फुसः ।

क फुप्फुसस्योर्द्ध खण्डः ।

द फुप्फुसस्य मध्यखण्डः । तन्निम्ने निम्नखण्डः ।

महाशिराभ्यां हृत्प्रकोष्ठं संप्राप्तं दुष्टशोणितम् ।
नाड़ीविशेषो नियतं तदानयति फुप्फुसम् ॥
श्वासाकृष्टोऽनिलस्तत्र समर्थ्यात्मगुणं ततः ।
निर्दोषं शोणितं कुर्य्यात् सुखोष्णञ्च सुलोहितम् ॥
तद्रक्तं हृदयं भूयः प्रविष्टं धमनीगणे ।

निरन्तरं महारंध्रो देहान्तर्देहिनां भ्रमेत् ॥
श्वासाकृष्टोऽनिलोऽस्वाय समर्प्यात्मगुणान् शुभान् ।
अशुभांश्च समादाय फुप्फुसादथ निःसरेत् ॥
असौ श्वासक्रिया सा च कालेन यावता यति ।
वारान् प्रवर्त्तते नाड्याः स्पन्दसख्या च या भवेत् ॥
इत्याद्या निखिला भावाः सूत्रस्थाने पुरा मया ।
वर्णिताः शृणुतेदानीं हेतु वाचां प्रवर्त्तने ॥
ऊर्द्धांशः श्वासनाड्या हि वाग्यन्त्रमिति कीर्त्तितः ।
तरुणास्थिधरारज्जुपेशीस्नायुकलागणः ॥
निर्मितं कण्ठदेशे तत् पुरस्तादभिवर्त्तते ।
तस्योपास्थिविशेषस्य द्वे पत्रे पक्षिपक्षवत् ॥
कण्ठोत्सेध जनयतो मिलित्वा च परस्परम् ।
लक्ष्यते चक्षुषैकेषु क्षीणानाञ्च विशेषतः ॥
अस्मादुपरि वाग्यन्त्रादुपजिह्वाभिवर्त्तते ।
अन्नग्रहणकाले या श्वासरन्ध्रं प्रगोपयेत् ॥
जनयन् वाक्ययन्त्रस्य हेतूना समवायिनाम् ।
जन्तुभेदानवस्थायाः स्वरान् जनयते बहून् ॥
सिंहशार्दूलखड्गानां रवैर्मूर्च्छन्ति जन्तव. ।
विहङ्गगीतध्वनिभिः को न मुह्यति जन्तुषु ॥
द्रवीकरोति हृदयं बालानां सुखदः स्वरः ।
क्रन्दनध्वनिभिः कस्य न गलत्यश्रु नेत्रत ॥
मुखैरस्मन निःस्यन्दैः कोमलैः कामिनीस्वरैः ।
सुरारम्भेष्वेषु को न मुह्यति सर्वथा ॥
भिन्नै [illegible]द्यैरन्योन्याभिहतै स्वरः ।

कण्ठोद्भिन्नः कादिवर्णभेदेनाथ प्रकाशते ॥
न नरादितरेषां तद्यन्त्राङ्गानां सुसंस्थितिः।
निर्मितिश्चेदृशी तेऽतो न वदेरन् यथा नरः ॥

उण्डुकः।

फुप्फुसस्यावरणौ द्वे ऊर्ध्वंतस्तद्द्वयं तयोः।
उण्डुकः शैशवे मध्यमध्यास्ते महतां न हि ॥

अधोगुह्या।

गुह्यानां तिसृणां ज्ञेया गुह्याधस्था: महत्तमा।
बहुयन्त्राण्डवद्वृत्ता स्थानं पाकादिकर्मणाम् ॥
ऊर्द्ध्वं वक्षस्तलस्यास्याः पेशी वस्तिरध स्थिता।
पार्श्वयोश्चाभितः पेश्यः पश्चात् पेश्यः कशेरुकाः ॥

---

# द्वादशोऽध्यायः।

---

अन्नविपाकक्रिया।

हस्तविंशतिसम्माना कला पेशीविनिर्मिता।
अन्नपाकक्रियार्थं च पाकनाड़ी प्रकीर्त्तिता ॥
ऊर्द्ध्वांशो मुखनामास्य अधोऽंशो गुदनामकः।
कण्ठादामाशयं यावदन्ननाड़ीति कथ्यते ॥
ततश्चामाशयस्तस्मात् क्षुद्रान्त्रं स्थूलमन्त्रकम्।
आमाशयात् समारभ्य भागः प्रथमः आन्त्रिकः ॥

ग्रहणी चाग्न्यधिष्ठानं बुधैराद्यैः प्रकीर्त्तितः ।
ततः पक्वाशयः प्रोक्तः पक्वान्नपरिधारणात् ॥
स्थूलान्त्रस्याप्यधोभागः सरलो गुदसंज्ञकः ।
अन्नकिट्टं मलं सर्वं वहिर्निःसारयत्ययम् ॥
श्वासनाड्याः स्थिता पश्चादन्ननाड्यन्नवाहिनी ।
अधस्तात् कुण्डलीभूता नाड़ी चोदरमध्यगा ॥
कण्ठादधोगतिर्नाड़ी भित्त्वा वक्षस्थलाश्रयाम् ।
पेशीं मुखद्वयवती प्रविष्टेयमधोगुहाम् ॥
अन्नं मुखार्पितं दन्तैश्चर्वितं स्रूणिकायुतम् ।
पिण्डीभूतं चान्ननाडीं प्रापितं पतति क्षणात् ॥
आमाशये यकृद्वक्षस्तलपेश्योरधःस्थिते ।
तत्र प्रकृतितोऽल्पश्च कोऽप्यतो नि सरेद्रसः ॥
रसेनानेन तत् क्लिन्नं चूर्णितं प्रकृतेर्बलात् ।
क्षुद्रान्त्रान्तर्गुहत्तं न विशेत् सजलपङ्कवत् ॥
आमाशयाद्विनिर्गतं क्षुद्रान्त्रं कुण्डलाकृति ।
अस्यैव प्रथमो भागो ग्रहणीति निगद्यते ॥
असम्यग् जीर्णमन्नं तत् प्रविश्य ग्रहणीं कलाम् ।
आन्त्रिकेण रसेनात्र मिलितं परिपच्यते ॥
तदैव यकृतो नाड्या पित्तकोषात् तदङ्गजात् ।
पीतस्तिक्तः पित्तरसो ग्रहणीमुपतिष्ठति ॥
अन्नपाके रसोऽप्येष प्रधानं कारणं मतम् ।
पित्तमेवाग्निनाम्नैतन्मुनिभिः परिकीर्त्तितम् ॥
न केवलं कालखण्डमन्नपाकप्रयोजनम् ।
यतः शोणितसंशुद्धिं विदधाति निरन्तरम् ।

औदरे दक्षिणे पार्श्वे तदास्ते पर्शुकावृतम्।
ऊर्द्ध्वं वक्षस्तलस्यास्य पेश्यधस्ताच्च वृक्ककः॥
यकृदृत् कारणं क्लोम विज्ञेयं पाककर्म्मणि।
क्लोमक्षुद्रान्त्रयोर्मध्यमध्यास्ते दीर्घवर्ष्म तत्॥
आमाशयोऽस्य पुरतो वर्त्ततेऽस्माद्विनि:सृतः।
रसो नाड़ीविशेषेण क्षुद्रान्त्रमुपतिष्ठति॥
प्लीहाप्यन्नस्य पचने हेतुर्मुनिभिरीरितः।
वामतोऽधोगुहाया स वर्त्तते पर्शुकावृतः॥
अरुणाभोऽग्रतश्छिद्रैर्बहुभिश्च समाततः।
ऊर्द्ध्वं वक्षस्तलस्यास्य पेश्यधो वामवृक्कक.॥
स्रोतास्यन्त्राद्द्रवो पक्वं श्वेताभं रसमन्नजम्।
शिरामार्गेण निखिलं प्रेरयन्ति हृदालयम्॥
आमाशयकलाचारिधमनीभिरपोऽखिलाः।
दृह्यन्ते प्रायशः शेषा अन्त्रस्थाभिरनन्तरम्॥
आकृष्टद्रवमन्नं तत् किट्टशेषन्तु पङ्कवत्।
स्थूलान्त्रं प्रविशेत् पश्चात् पुरीषं तन्निगद्यते॥
ततः प्राप्य गुदं काले सर्वथा सारवर्जितम्।
तद्बहिर्नि:सरेद्देहान्नित्यं कल्याणहेतवे॥



सप्तमी प्रतिकृतिः।

अत्र सप्तमप्रतिकृतौ २ गलनाल्याः शेषांशोऽन्ननाड़ीमुखादागत्यान्त्यामाशये मिलितः।

१, २, ७, ४ चिह्नितानि स्थानानि गर्भः। अनुप्रस्थभावेन स्थितं ५ चिह्नितं यन्त्रमामाशयः। अन्नं मुखाद्गलनाड्यागत्यात्र पतति।

५, ६ चिह्निताधोमुखगामिनी नाडी ग्रहणी। अत्र पित्तरस: सूक्ष्मनाड़ीविशेषमार्गेण यकृत आगत्यामाशया-गतेनान्नेन सह मिलित:।

५, ६, ७, ८ चिह्नाङ्किता वृहती नाड़ी क्षुद्रान्त्रम्। तन्मध्ये ५,६ चिह्नितोऽंशो ग्रहणीनाम्नाभिधीयते। ग्रहिण्या: परवर्त्ती कियदंश: पक्वाशयनाम्ना कथ्यते। स्थानादस्मात् क्षुद्रान्त्रमतिकुण्डलाकृति भूत्वा स्थितम्। भुक्तद्रव्यमामाशयत: सर्वाणि क्षुद्रान्त्राणि परिवेष्ट्य मिलित्वा च विविधेन पाचकरसेन सह भृशं जीर्य्यति। क्षुद्रान्त्रस्य निम्नवर्त्ती कश्चित् कश्चिदंशो विशिष्टकारणत: कोषादिषु प्रविशति। पीड़ेयमन्त्रवृद्धिनाम्नाभिधीयते।

९, १०, ११, १३, १४ चिह्निता नाड़ी स्थूलान्त्रनाम्ना ख्याता। तन्मध्ये ९, ११ चिह्नितोऽंश ऊर्द्ध्वगामि स्थूलान्त्र १३,१४ चिह्नितोंऽशोऽधोगामि स्थूलान्त्रञ्च कथ्यते। एतयोरुभयोर्मध्ये क्षुद्रान्त्रस्योर्द्ध्वस्थोऽनुप्रस्थांशोऽनुप्रस्थस्थूलान्त्र-मुच्यते। प्रवाहिकादिषु रोगेषु स्थूलान्त्रे विशेषतस्त्वधोगामिनि स्थूलान्त्रे क्षतं वेदना च भवति, नि:स्रवन्ति च तस्माद्रक्तादीनि वस्तूनि।

१५–चिह्नितो निम्नाभिमुखोऽन्त्रांशो गुदनाम्ना ऋजु-निम्नान्त्रनाम्ना वाभिधीयते। अस्य सर्वनिम्नांशो गुह्यद्वाररूपेण परिणमति। प्रवाहिकादिषु रोगेष्वत्राणि क्षतादय उपद्रवा भवन्ति, जायन्ते चास्य गात्रे अर्शोऽङ्कुराणि।

एतन्निम्नाभिमुखमन्त्रं तस्योर्द्ध्वस्थ: स्थूलान्त्रांशश्च

मलाशयनाम्ना कथ्यते। अधोगामी भागः पुरीषनिर्गमकः।

अहो कुण्डलिनो धातुर्महिमा कोऽपमुल्वणः।
विचित्रविधिना पक्वमन्नं सत्त्वानि जीवयेत्॥
अन्नग्रासो रदैः पिष्टो लालाक्लिन्नोऽन्ननाड़िकाम्।
श्वासरन्ध्रं नसो रन्ध्रञ्चातिक्रम्य सुखं विशेत्॥
निरुणद्ध्युपजिह्वा सा सर्वथा श्वासनाड़िकाम्।
जिह्वा प्रयाति पश्चाच्च पाकनाडी ततोऽभितः॥
किञ्चिदूर्द्ध्वमुखी भूत्वा पिण्डं ग्रसति यत्नतः।
आद्यरन्ध्रप्रविष्टं चेदन्नं कासैर्विनिःसरेत्॥
द्वितीयगं क्षवथुना क्षणेन प्रकृतेर्बलात्।
अतो नैवातित्वरणं श्रेयः पानान्नकर्म्मणि॥
अन्नं वै प्राणिनां प्राणा इति श्रुतिनिदर्शनतः।
तदन्नं विधिना सेव्यमदोषं प्राणवर्द्धनम्॥
अन्नं रसोऽन्नमस्रञ्च मांसमन्नमपि स्मृतम्।
मेदोऽन्नमन्नमस्थ्यन्नं मज्जान्नं शुक्रमेव च॥
अन्नं बलमथौजोऽन्नं मनोऽन्नमपि चोच्यते।
चराचरेषु निखिलाः प्रजाश्चान्नसमुद्भवाः॥
अन्नपानविधिर्यश्च तत्काले चोचिता क्रिया।
कृता तद्विवृतिर्वत्साः सूत्रस्थाने पुरा मया॥
पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रयः।
धरागर्भाशयः प्रोक्तः स्तनौ स्तन्याशयौ मतौ॥
श्लेष्माशयः स्यादुरसि तस्मादामाशयस्त्वधः।
ऊर्द्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थितः॥

तस्योपरि तिलं ज्ञेयं तदधः पवनाशयः।
मलाशयस्त्वधस्तस्मादाशयस्तमूत्राशयस्त्वधः॥
जीवरक्ताशय उरो ज्ञेयाः सप्ताशयस्त्वमी॥



अष्टमी प्रतिकृतिः।

अत्र अष्टमप्रतिकृतौ य,य यकृत्।
पा आमाशयस्याधोऽंशः।
पि पित्ताशय।
त आमाशयस्याधःच्छिद्रम्।
घ ग्रहण्यंशविशेषः।
क उदरप्रविष्टो धमनीस्कन्धः।
ख क्लोम तिलयन्त्रं वा।
ज क्लोममूर्द्धा।
ঙ क्लोमदेहः।
न क्लोमपुच्छम्।
द प्लीहा।

ण आमाशयस्योर्द्ध्वच्छिद्रम्।
ग ग उदरवक्षोव्यवधायिकायाः पेश्याः स्तम्भद्वयम्।
च मूलपित्तप्रणाली।
श्ली श्लीहखातम्।

---

## त्रयोदशोऽध्यायः।

---

अथ मूत्रयन्त्राणि।

वृक्कौ द्वौ मूत्रनाड्यौ द्वे तथा वस्तिश्च मूत्रणि।
ज्ञेयानीमानि यन्त्राणि रन्ध्रमौपस्थिकं तथा॥
शिम्बीवीजनिभौ वृक्कौ यकृत्प्लीह्नोरधः स्थितौ।
पश्चादुदरवेष्टन्याः कटिदेशगतौ मतौ॥
अत्र स्रोतांसि भूयांसि धमन्यस्तादपः सदा।
गृह्णन्ति दोषसहितास्तेनास्रं शुद्धता व्रजेत्॥
वृक्कफुप्फुसचर्म्माणि धमनीशोणितादपः।
सदोषाः सम्यगादाय शोधयन्त्यनिशं हि तत्॥
वृक्काद्विनिःसृते नाड्यौ वस्तिपृष्ठमधो गते।
वृक्कसञ्चितमूत्राणि वस्तिमानयतः शनैः॥

वस्तिः।

कलापेश्यात्मिका वस्तिर्गुदस्य पुरतः स्थिता।
पश्चादौपस्थिकास्थ्नोश्च मूत्राशय इति स्मृता॥
वस्तेरूर्द्ध्वमुखं रज्ज्वा नाभौ संबद्धमेकया।

अपराभिर्निबद्धा च वस्ति स्थानेऽवतिष्ठते ॥
स्त्रीषु योनिर्धरा चापि गुदस्य पुरतः स्थिता।
तयोस्तु पुरतो वस्तिर्विशेषोऽयमुदीरितः ॥
वस्तेः संकुचित निम्नं मुख रन्ध्रेण संयुतम्।
औपस्थिकेन मूत्रस्य वहिर्निःसरणाय हि ॥
आशये सञ्चितं मूत्रमतिमात्रं यदा भवेत्।
तदौपस्थिकरन्ध्रेण रंहसा निःसरेद्बहिः ॥

जननेन्द्रियम्।

जीवस्रोतसि हेतुर्यद्यद्दते तस्य सन्ततिः।
इन्द्रियं जननाख्यं तदुपस्थश्चेति कथ्यते ॥
उत्पत्तौ जीवसंघस्य द्वारं नान्यद्धि विद्यते।
बलादिहीने तत्सङ्गे जीवोत्पत्तिः खिलीभवेत् ॥
यन्त्रं विचित्रनिर्म्माणमहो धात्रा वितर्किणा।
ध्यात्वा ध्यात्वेव रहसि विहितं निपुणेन तत् ॥
अहो यन्त्रस्य शक्तिं तां को वदेत् शक्तिमान् भुवि।
सम्यग् जानाति विश्वाराट् तत्स्रष्टैव हि तद्गुणम् ॥
यस्य शक्त्या जगत्यस्मिन् पाशैरिव बलीमुखाः।
नृत्यन्ति जन्तवो नित्यमवशा मुग्धमानसाः ॥
नित्यमानन्दसन्तान उत्साहः करुणा क्षमा।
शान्तिर्दाक्षिण्यमास्तिक्य मैत्री चेह विराजते ॥
तदिन्द्रियभव जीवा नित्य भुञ्जन्ति यत् सुखम्।
विचेतना इव स्वर्गं तस्य नास्त्युपमा भुवि ॥
वनालयाश्च मुनयो भूपाः प्रासादवासिनः।
कुटीरस्था दरिद्राश्च सर्वे तेन जिता ध्रुवम् ॥

पुमांसो निखिला लोके यौवनस्थाः स्त्रियस्तथा ।
जन्तृष्वश्रान्तमवशाः कामयन्ते सुखं नु तत् ॥
शान्तौ तदिन्द्रियं हेतुर्विद्रोहे च महत्यपि ।
महिमानमतस्तस्य कः स्यान्नदितुमीश्वरः ॥
जीवप्रवाहरक्षार्थं शान्तिसंस्थापनाय च ।
इदमेवंगुणं धात्रा विहितं विश्वकर्म्मणा ॥
शक्तिर्महीयसीय चेन्न स्यादस्य बलीयसी ।
इयमानन्दनिलयो धन्वेव धरणी भवेत् ॥

आलोच्य भाव निखिलं तदीयं
उन्मीलिताक्षा ननु मूढजीवाः ।
अपास्य सन्देहमहो हि सत्ता
शक्तिं तथैवध्वमचिन्त्यशक्तेः ॥

आधाराकारभेदेन पौंस्नः स्त्रैण इति द्विधा ।
विशिष्यतः उपस्थ स चेतनावानिव स्थितः ॥
शिश्नो मेढ्रो व्यङ्गलिङ्गे मेहन शेफशेफसी ।
पुरुषेन्द्रियनामानि ध्वजोपस्थौ च साधनम् ॥
स्त्रीन्द्रियस्य तु नामानि योन्युपस्थौ भगाधरे ।
तत्त्वं वच्म्यनयोः सम्यगुभयोरप्युपस्थयोः ॥

तत्र प्रजननेन्द्रियाणि ।

मेढ्भूमिः ।

यत्रोपास्थि समायोगादस्थिनी मिलिते उभे ।
औपस्थिके अधस्तस्मात् पश्चाद्यास्ति गुदासना ॥
दृढ़ा ग्रन्थिनिभा पाण्डुः सवेष्ट्य वस्तिकन्धराम् ।
मूत्रस्रोतोऽन्तरस्थश्चा सा मेढ्रो भूमिरुच्यते ॥

कलिकाद्वयम्।

मेढ्रभूमि समीपे द्वे कलायपरिमण्डले।
आयुषा ह्रासशीले स्तो गुटिके ते कलायिके॥

मेढ्रः।

मेढ्रभूमिं समारभ्य दीर्घः शृङ्गारसाधनः।
उपस्थास्थ्नः सकाशाच्च मेढ्रः समभिवर्त्तते॥
मूलाद्द्वयमुपस्थास्थ्नो कौषिकेण च चर्म्मणा।
संसक्तो वेष्टितश्चापि परं मूर्द्धनि केवलम्॥
आवृतो न च संसक्तस्तस्मिन्नग्रीयचर्म्मणि।
पश्चादाकृष्टे लिङ्गस्य मुण्डं व्यक्तं प्रकाशते॥
कदलीकुसुमाकारं लिङ्गमुण्डं सचेतनम्।
ततः पश्चाल्लिङ्गसरिल्लिङ्गग्रीवा च सोच्यते॥
तत्रास्रान्तं रसं पूतिर्निःस्रवेत् चारधर्म्मवान्।
ततश्चर्म्मसमासक्तं गात्रं लिङ्गस्य वर्त्तते॥
ततो गुदसमीपे च लिङ्गमूलमवस्थितम्।
वस्तितो मौत्रिक स्रोतो लिङ्गमुण्डाद्बहिर्गतम्॥
मेढ्रोऽहृष्टस्य पुंसः स्याच्छिथिलं स्तम्भवर्त्तुलम्।
जाते हर्षे स एव स्याद्दृढ़स्त्रिभुजसन्निभः॥

अण्डद्वयम्।

रेतः सूत्रसमाबद्धं कोषगर्भेऽवतिष्ठते।
रेतस्राव्यण्डयुगलं ग्रन्थ्याभं चाण्डवर्त्तुलम्॥
भ्रूणस्योदरवेष्टन्याः पश्चादुपरगह्वरे।
तिष्ठेत् प्राक् स्पर्शनाड्भूमे कोषमायाति तद्द्वयम्।
दक्षिणस्मात् स्थूलतरं वामाण्डं निम्नलम्बि च।

वामं रैतसिकं सूत्रं यतो दीर्घतरं परात्॥
उपर्य्युपरि सस्थानस्तरद्वन्द्वेन निर्मितः।
कोषौ रैतसिके सूत्रे धत्तेऽण्डयुगलं तथा॥
तयोराभ्यन्तरो रक्तः सङ्कोचनगुणान्वितः।
स्तरो वाह्यचर्म्ममयो लोमभिः कतिभिश्चन॥
स्तरस्तिरस्करण्यान्तरेकया भिद्यते द्विधा।
तद्गर्भद्वयमध्यास्ते पुंसोऽण्डयुगलं ननु॥
उदराद्रैतसः सूत्रे पश्चाद्भागमथाण्डयोः।
नियतं समनुप्राप्ते धरास्नाय्वादिनिर्मिते॥

वीजकोषौ।

वस्तिमूलगुदान्तःस्थौ वीजकोषौ नृणां स्मृतौ।
वीजं धारयतो गर्भजनने मुख्यकारणम्॥
तद्वीजं तरलं स्थानं शुभ्रं गन्धविशेषवत्।
चेतनाणु परिव्याप्तं रेतः शुक्रं तदुच्यते॥
नाड्या शुक्रप्रवाहिण्या फलमागत्य वै ततः।
औपस्थिकेन रन्ध्रेण वहिर्निधुवनात् सरेत्॥
आहारजः परः सारः शुक्रं प्राणकरं परम्।
कारणं जीवने चोक्तं तत्क्षयान्मरणं ध्रुवम्॥
अतो रक्ष्यं प्रयत्नेन शुक्रं जीवनकाङ्क्षिणा।
नित्यं तत्सञ्चये चापि यतितव्यञ्च सर्वथा॥
रेतस्युपचितेऽत्यर्थं जायते रमणीस्पृहा।
तदा निधुवनं कुर्य्यात् प्रियया नाविचारयन्॥
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः।
यतः स्यान्नहितस्तस्मात् कामस्यातिविनिग्रहः॥



नवमी प्रतिकृति. ।

अत्र नवमप्रतिकृतौ क वस्तिर्मूत्राशयो वा ।

ध औपस्थिकास्थिसन्धिः ।

ङ,ट मेढ्रभूमिः ।

ड कलायिका ।

फ अण्डकोषः ।

घ वीजकोषः, शुक्राशयः ।

ड,ट छिन्नतः ल पर्य्यन्तं विस्तृतो मेढ्रः ।

म लिङ्गमुण्डम् ।

य लिङ्गपरिछिन्नग्रीवा वा ।

ल असंसक्तमग्रचर्म्म।

प लिङ्गालम्।

द वस्तिरधोदेशः।

ञ मूत्रस्रोतः।

च रेतोनाड़ी, शुक्रवाहिनी।

ध मूत्रनाड़ीरन्ध्रम्।

छ त्वक्।

न शलाकाव्यवहारस्यावस्था। लिङ्गमेवमाकृष्य ऋजु कृत्वा चास्य रन्ध्राभ्यन्तरे शलाकां प्रवेशयति।

अथ स्त्रीजननेन्द्रियाणि।

भगमणिर्भगौष्ठौ च भगपक्षद्वयं तथा।
भगलिङ्गञ्च योनिश्च तथा द्वे च कलायिके॥
जरायुर्डिम्बवाहिन्यौ डिम्बकोषौ सडिम्बकौ।
स्तनौ चेतीन्द्रियगणो नारीणां कथितो बुधैः॥

भगमणिः।

औपस्थिकास्थ्नो' पुरतस्त्वग्वसापरिनिर्मितः।
उच्चैः सुकोमलो वृत्तः स्त्रीणां भगमणिः स्मृत.॥
यदा बाल्यमतिक्रम्य तारुण्यं यान्ति योषितः।
तदोद्भवन्ति लोमानि समन्तादस्य गात्रतः॥

भगौष्ठौ।

भगविवरसंवेष्टौ भगौष्ठौ पीवरौ मणेः।
मूलाधाराग्रसीमानं स्थिता यावत्तु तद्द्वयम्॥
पुंसां कोषद्वयमिव स्मृतं प्रकीर्तितौ बुधैः।
बहिश्चर्म्ममयं चान्तः कलावद्यौवने पुनः॥

लोमभिर्व्रियते स्नायुधराग्रन्थ्यादिसंयुतम् ॥

भगपक्षौ ।

पश्चाद्भगौष्ठयोरूर्द्ध्वं कलावन्तौ सुकोमलौ ।
लिङ्गमुभयतः पक्षौ किञ्चिन्निम्नं समागतौ ॥

भगलिङ्गम् ।

भगौष्ठयोरूर्द्ध्वसन्धेः प्रायेण द्व्यङ्गुलादधः ।
चेतन दीर्घदेहञ्च भगलिङ्गमिति स्मृतम् ॥
भगलिङ्गं यथा पुंसां मेढ्रः प्रकृतितो मतम् ॥

सामिचन्द्रः ।

अधस्ताद्योनिरन्ध्रस्य तनुश्चन्द्रार्द्धसन्निभः ।
कौमारे प्रायशः सामिचन्द्रो नारीषु दृश्यते ॥

कलायिकाद्वयम् ।

योनिरन्ध्रमुभयतः स्त्रीणां पुंवत् कलायिके ।

योनिः ।

योनिः कलामयी नाड़ी वस्तिगर्भे व्यवस्थिता ।
गुदस्य पुरतः पश्चान्मूत्राधारस्य कोमला ॥
आवर्त्तिनी भगौष्ठात्तु जरायुं समुपस्थिता ।
अधस्तान्मूत्ररन्ध्रस्य मुखं योनेरवस्थितम् ॥

जरायुः ।

गुदमूत्राशयान्तःस्थो जरायुर्गर्भमन्दिरम् ।
जरायुपार्श्वे नाड्यौ द्वे डिम्बनाड्यौ प्रकीर्त्तिते ॥
डिम्बकोषद्वयाड्डिम्बं नयतो गर्भकारणम् ।
जरायुकोषं नारीणां जातत्तूनां स्वभावतः ॥

स्तनौ ।

स्तनौ द्वौ संख्यया स्यातां स्त्रियाञ्च पुरुषे तथा ।

तारुण्ये तु स्त्रिया पीनौ भवेताञ्चातिमोहनौ ॥
पर्शुकायास्तृतीयाया यावत षष्ठीमुरोऽस्थित: ।
आकक्षञ्च कृतस्थानावर्द्धवृत्तौ सुकोमलौ ॥
जाते महत्तमौ गर्भे स्याताञ्चापि पयस्विनौ ।
लम्बमानौ प्रसूताया वृद्धाया: शुष्यतश्च तौ ॥
स्तनयोरुभयोर्म्मध्ये वाम: किञ्चिन्महत्तर: ।
चुचूकं स्तनवृन्तं स्याद्दुग्धनाडीभिरन्वितम् ॥

मूलाधार:।

पायूपस्थान्तरस्थोऽसौ मूलाधार: प्रकीर्त्तित: ।
हर्षोऽस्यापि रिरंसूनामन्याङ्गानां यथा भवेत् ॥

दशमी प्रतिकृति:।

अत्र दशमप्रतिकृतौ ভ भगमणिः ।

ন भगौष्ठः ।

ধ भगपक्षः ।

দ भगलिङ्गम् ।

ত योनिः स्त्रीन्द्रियविवरं वा ।

গ,গ जरायुर्गर्भशय्या वा ।

য डिम्बकोषः ।

ট मूत्रनाड़ी ।

ছ वस्तिर्मूत्राशयो वा ।

প ऋजुनिम्नान्त्रम् ।

ঠ औपस्थिकास्थिसन्धिः ।

শা प्रशस्तरज्जुः ।

ক कटिस्था निम्नकशेरुका ।

চ,চ,চ त्रिकास्थ्न जर्द्धांशः ।

ব त्रिकास्थ्नो निम्नांशः ।

থ,থ कलावृतनिम्नान्त्रम् ।



## चतुर्दशोऽध्यायः ।

---

अथ त्वक् ।

त्वचायमखिलः कायः संवृतो विश्वकर्म्मणा ।
बाह्योपद्रवसंघाताद्रक्षितः साधु तिष्ठति ॥
स्तरद्वयवतीयं त्वक् तद्बाह्यश्चर्म्म कथ्यते ।
स्तरोऽन्यः प्रोच्यतेऽन्तस्त्वग्भूमिः स्पर्शेन्द्रियस्य सा ॥
उपर्य्युपरि विस्तीर्णस्तरसप्तकसंहतिः ।
एषा त्वगखिला जाता कैश्चिदिति च मन्यते ॥
तोयानिलादिसंकर्षः स्वेदस्य च विनिर्गमः ।
दैहिकस्योष्मणो रक्षा त्वचा सम्पाद्यते ध्रुवम् ॥

---

## पञ्चदशोऽध्यायः ।

---

अथ गर्भोत्पत्तिक्रमः ।

तत्रादावार्त्तवप्रवृत्तिविवरणम् ।

यदा बाल्यमतिक्रम्य तारुण्यं यान्ति योषितः ।
कायश्च मानसो भावस्तदा तासां विवर्त्तते ॥
स्तनौ पीनोन्नतौ स्यातां योनिश्च परिवर्द्धते ।
समुद्भवन्ति लोमानि वस्तिदेशे समन्ततः ॥

जरायुकोषात् तन्वच्छं शोणितञ्च प्रवर्त्तते ।
तदार्त्तवं रजश्चेति पुष्पनाम्ना च गद्यते ॥
मासि मासि स्रवेद्रक्तं शशशोणितसन्निभम् ।
लाक्षारसनिभं वापि तददोषं विनिर्द्दिशेत् ॥
तिस्रश्चतस्रो वा पञ्चाप्यनुबध्नाति तन्निशाः ।
अतोऽन्यथा रजः स्त्रीणां जानीयाद्दोषवद्भिषक् ॥
अरुग्णानामशोकानां प्रायशश्च प्रवर्त्तते ।
तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥
आर्त्तवस्रावदिवसादृतुः षोडश रात्रयः ।
गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः ॥
नारीणां प्रकृतेर्भेदादृतुकालस्य चान्यथा ।
गर्भग्रहणकालस्य कीर्त्तितं देहवेदिभिः ॥
दिने व्यतीते नियतं सङ्कुचत्यम्बुजं यथा ।
ऋतौ व्यतीते नारीणां योनिः संव्रियते तथा ॥
पुंस्कामा योषितः सर्वा ऋतुकाले भवन्ति हि ।
विज्ञेयो रतिकालः स रतिश्च फलदा तदा ॥
यथा धन्वनि वीजस्य वपनं विफलं भवेत् ।
अनृतौ रमणीसङ्गो ज्ञेयस्तद्वन्निरर्थकः ॥
सम्यग्विश्रान्तयोनीनां [illegible]वर्षणाम् ।
रतिर्योग्या नृभिर्योग्यैरपत्य फलदायिनी ॥

भ्रूणजन्मक्रमः ।

यथा भ्रूणस्य जन्म सीमन्तिन्युदरे नियतं प्रवृद्धिः ।
ततो भूमौ च पतनं तदतो नैखिल्येन वक्ष्ये ॥
मदनाविर्भावसुखिनीं स्फुरन्नितम्बस्तनयोनिमाकुलाम् ।

पंस्कामां व्याधिहीनां रमणीं रमेत पुमान् रतिज्ञः ॥
अजातकामां रुग्णां दुःखार्त्तां शोकविकलीकृतचित्ताम् ।
तथान्यवेगाक्रान्तां प्रमदां न रमेत प्रजार्थी ॥

योग्यस्य पुंसः सुरतप्रसङ्गे
जाते रमण्या विधिना गुणिन्या ।
ऋतौ यथा प्रावृषि वीजमुप्तं
निषिक्तवीर्य्यं फलवद्ध्रुवं स्यात् ॥

सम्यक्कृष्टे यथा क्षेत्रे तोयसिक्ते गुणान्विते ।
उप्तं काले शुभं वीजमङ्कुरः पालितं भवेत् ॥
तथा दोषविरहितं रेतो योनौ समर्पितम् ।
अदोषायामवसरे गर्भो नार्य्या भवेद्ध्रुवम् ॥
पुंवीर्य्यं स्खलितं नार्य्या धरां विशति रंहसा ।
ततो डिम्बाशयं याति तत्र रूपान्तरं व्रजेत् ॥
एकीभूय समायातो जरायुं डिम्बरेतसी ।
आवरणावृते तत्र वृद्धिश्चेतो निरन्तरम् ॥
आदौ विन्दुनिभो जीवः शेते गर्भाशये स्त्रियाः ।
धट्ठ्यर्ध्वोनिभो मासाच्चतुरस्रस्ततो भवेत् ॥
त्रिपक्षात् परतः स्याच्च द्विधा भिन्नकलायवत् ।
~~मासद्वयात्तु खं तत्र [illegible]च्च~~ यथातथम् ॥
मासत्रयाच्च गर्भस्य भवेत् सर्वाङ्गसंस्थितिः ।
ततः षण्मासपर्य्यन्तं पुष्टिर्भवति सन्ततम् ॥
स्पन्दते नियतं भ्रूणः षण्मासात् केशसम्भवः ।
सप्तमे मासि नयनं भवेत् प्रमुदितं ध्रुवम् ॥
मास्यष्टमे भवेद्गर्भो ननु तिर्य्यगवस्थितः ।

अधोमूर्द्धोर्द्ध्वचरणो नवमे मासि जायते ॥
कुक्षावुषित्वा च नव मासान्नवदिनाधिकान् ।
भूमौ ततः पतेद्गर्भो दशमे प्रकृते वशः ॥




एकादशी प्रतिकृतिः ।

अत्रैकादशचित्रचित्रे [illegible] न्युगर्ब्भरम् ।

कत,कत,कत,कत अस्थायिनी भ्रूणावरका कला ।

कग,कग अस्थायिनी जरायुवेष्टिका कला ।

कच,कच अस्थायिनी जरायुवेष्टिका डिम्बकला ।

अस्मिन् चित्रचित्रे जरायुमध्ये भ्रूणस्यावस्थितिः प्रदर्शिता ।

अथ सञ्जातगर्भाया लक्षणम्।

अवत्यार्त्तवसंरोधः स्तनौ पीनौ पयस्विनौ।
उत्क्लेशो वमनञ्चापि प्रातर्वाप्यन्यदा भवेत्॥
योनिर्विवर्णा मूत्रस्य भवेद्रूपान्तरं तथा।
प्रसेकश्चोदरस्फीतिरालस्यं बलहीनता॥
मृद्भक्षाद्यशनप्रेप्सा दोहदान्तरलिप्सुता।
अगुल्मलक्षणः स्पन्दो नोत्साहो रमणे सदा॥
एवं चान्यानि रूपाणि जानीयाद्गर्भजन्मनः।
आसन्नप्रसवा नारी त्वावोभिर्व्यथते मुहुः॥

इत्यायुर्वेदविज्ञाने शारीरस्थान समाप्तम्।

# द्रव्यस्थानम् ।

—००—

## प्रथमोऽध्यायः ।

---

### अथ वृष्यवर्गः ।

#### जीवकर्षभकौ ।

जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ ।
रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ ॥
जीवकः कुर्चकाकार ऋषभो वृषशृङ्गवत् ।
जीवको मधुरः शृङ्गो ह्रस्वाङ्गः कूर्चशीर्षकः ॥
ऋषभो वृषभो धीरो विषाणी द्राक्ष इत्यपि ।
जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ ॥
मधुरौ पित्तदाहास्रकार्श्यवातक्षयापहौ ॥

#### मेदामहामेदे ।

महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते ।
महामेदावनौ मेदा स्यादित्युक्तं मुनीश्वरैः ॥
शुक्लार्द्रकनिभः कन्दो लताजातः सुपाण्डुरः ।
महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते ॥
शुक्लकन्दो नखच्छेद्यो मेदो धातूनिव स्रवेत् ।
यः स मेदेति विज्ञेयो जिज्ञासा तत्परैर्जनैः ॥
स्वल्पपर्णी मणिच्छिद्रा मेदा मेदोभवा धरा ।
महामेदा वसुच्छिद्रा त्रिदन्ती देवता मणिः ॥

मेदायुगं गुरु स्वादु वृष्यं स्तन्यकफावहम् ।
वृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत् ॥

काकोलीचीरकाकल्यौ ।

जायते चीरकाकोली महामेदोद्भवस्थले ।
यत्र स्यात् चीरकाकोली काकोली तत्र जायते ॥
पीवरीसदृशः कन्दः चीरं स्रवति गन्धवान् ।
स प्रोक्ता चीरकाकोली काकोलीलिङ्गमुच्यते ॥
यथा स्यात् चीरकाकोली काकोल्यपि तथा भवेत् ।
एषा किञ्चिद्भवेत् कृष्णा भेदोऽयमुभयोरपि ॥
काकोली वायसोली च वीरा कायस्थिका तथा ।
सा शुक्ला चीरकाकोली वयस्था चीरवल्लिका ॥
कथिता चीरिणी धारा चीरशुक्ला पयस्विनी ।
काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु ॥
वृंहणं वातदाहास्रपित्तशोषज्वरापहम् ॥

ऋद्धिवृद्धी ।

ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले ।
श्वेतलोमान्वितः कन्दो लताजातः सरन्ध्रकः ॥
स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे ।
तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा ॥
वृद्धिस्तु दक्षिणावर्त्तफला प्रोक्ता महर्षिभिः ।
ऋद्धिर्योग्यं सिद्धिलक्ष्मी वृद्धेरप्याह्वया इमे ॥
ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः ।
प्राणैश्वर्य्यकरी मूर्च्छारक्तपित्तविनाशिनी ॥
वृद्धिर्गर्भप्रदा शीता वृंहणी मधुरा स्मृता ।

वृष्या पित्तास्रशमनी क्षतकासक्षयापहा ॥
राज्ञामप्यष्टवर्गस्तु यतोऽयमतिदुर्लभः।
तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं भिषक् ॥

अष्टवर्गः।

जीवकर्षभकौ मेदे काकोल्यौ ऋद्धिवृद्धिके।
अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः ॥
अष्टवर्गो हिमः स्वादु वृंहणः शुक्रलो गुरुः।
भग्नसन्धानकृत् कामबलासबलवर्द्धनः ॥
वातपित्तास्रतृड्दाहज्वरमेहक्षयप्रणुत् ॥

मुद्गपर्णी।

मुद्गपर्णी काकपर्णी सूर्य्यपर्ण्यल्पिका सहा।
काकमुद्गा च सा प्रोक्ता तथा मार्ज्जारगन्धिका।
मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च शुक्रला।
चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत् ॥
दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित्।
वातरक्तं क्षयं कासं नाशयत्यविकल्पतः ॥
अस्या मात्रा ४ माषकाः।

माषपर्णी।

माषपर्णी सूर्य्यपर्णी काम्बोजी हयपुच्छिका।
पाण्डुलोमशपर्णी च कृष्णवृन्ता महासहा ॥
माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत्।
मधुरा ग्राहिणी शोथवातपित्तज्वरास्रजित् ॥
मात्रा ४ माषकाः।

### जीवन्ती ।

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ।
मङ्गल्यनामधेया च शाकश्रेष्ठा पयस्विनी ॥
जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा ।
रसायनी बलकरी चक्षुष्या ग्राहिणी लघु. ॥
रक्तपित्तं चयं हन्ति दाहहृत् स्वरशोधिनी ॥
मात्रा २ माषकौ ।

### यष्टीमधु ।

यष्टीमधु तथा यष्टीमधुकं क्लीतकं तथा ।
अन्यत क्लीतनकन्तत्तु भवत्युपमधूलिका ॥
यष्टी हिमा गुरुः स्वाद्वी चक्षुष्या बलकर्णकृत् ।
सुस्निग्धा शुक्रला केश्या स्वर्य्या पित्तानिलास्रजित् ॥
व्रणशोथविषच्छर्दितृष्णाग्लानिचयापहा ।
शोषदाहारुचिघ्नी च कासानाशु विनाशयेत् ॥
मात्रा २ माषकौ ।

### जीवनीयगणः ।

अष्टवर्गश्च पर्णिन्यौ जीवन्ती मधुकन्तथा ।
जीवनीयगणः प्रोक्तो जीवनस्तु पुनस्तथा ॥

### कपिकच्छुः ।

कपिकच्छुरात्मगुप्ता वृष्या प्रोक्ता च मर्कटी ।
अजरा कण्डुरा व्यङ्गा दुःस्पर्शा प्रावृषायणी ॥
लाङ्गली शूकशिम्बी च सैव प्रोक्ता महर्षिभिः ।
कपिकच्छुर्भृशं वृष्या मधुरा वृंहणी गुरुः ॥

तिक्ता वातहरीवल्या कफपित्तास्रनाशिनी ।
व्रणदोषप्रशमनी श्वासकासापनोदिनी ॥
तद्बीजं वातशमनं स्मृतं वाजीकरं परम् ॥

अस्या बीजं ग्राह्यं, मात्रा ६ रक्तिकाः; मूल-क्वाथश्च ग्राह्यः, मात्रा ॥० तोलकः ।

मांसरोहिणी ।

मांसरोहिण्यतिरुहा वृत्ता चर्म्मकरी कशा ।
प्रहारवल्ली विकषा वीरवत्यपि कथ्यते ॥
स्यान्मांसरोहिणी वृष्या सरा दोषत्रयापहा ॥

मात्रा १ माषकः ।

बलाचतुष्टयम् ।

बला वाट्यालिका वाट्या सैव वाट्यालकाऽपि च ।
महाबला पीतपुष्पा सहदेवी च सा स्मृता ॥
ततोऽन्यातिबला ऋष्यप्रोक्ता कङ्कतिका च सा ।
गाङ्गेरुकी नागबला झषा ह्रस्वा गवेधुका ॥
बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत् ।
स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम् ॥
बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम् ।
मूत्रातिसारं हरति दृष्टमेतन्न संशयः ॥
हरेन्महाबला कृच्छ्रं भवेद्वातानुलोमनी ।
हन्यादतिबला मेहं पयसा सितया समम् ॥

मात्रा ४ माषकाः ।

कार्पासी ।

कार्पासी तुण्डकेरी च समुद्रान्ता च कथ्यते ।

कार्पासकी लघु: कोष्णा मधुरा वातनाशिनी॥
तृष्णादाहारतिश्रान्तिभ्रान्तिमूर्च्छाप्रणाशिनी।
तत्पत्रञ्च समीरघ्नं रक्तकृन्मूत्रवर्द्धनम्।
तत्कर्णपीड़कानादपूयास्रावविनाशनम्॥
तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु॥
मात्रा २ माषकौ।

## वाराहीकन्द:।

वाराहीकन्द एवान्यैश्चर्मकारालुको मत:।
आनूपे स भवेद्देशे वराह एव लोमवान्॥
विदारी स्वादुकन्दा च सा तु क्रोष्ट्री सिता स्मृता।
इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला पयस्विनी॥
वाराहवदना गृष्टिर्वदरेत्यपि कथ्यते।
विदारी मधुरा स्निग्धा वृंहणी स्तन्यशुक्रदा॥
शीता स्वर्य्या मूत्रला च जीवनी वलवर्णदा।
गुरु: पित्तास्रपवनदाहान् हन्ति रसायनी॥
मात्रा ४ माषका:।

## विदारी।

क्षीरशुक्लेक्षुगन्धा च क्रोष्ट्री शुक्ला शृगालिका।
वृष्यकन्दा स्वादुकन्दा विदारी च विदारिका॥
भूकुष्माण्डी स्वादुलता गजेष्टा वारिवल्लभा।
वृष्यवल्ली विडाली च सा स्निग्धा मधुरा हिमा॥
गुर्वी बलाग्निजननी पुष्टिदा वीर्य्यवर्द्धिनी।
रक्तपित्तभ्रमश्रान्तितृष्णामूर्च्छापनोदिनी॥

वातपित्तप्रशमनी बल्या वृष्या रसायनी ॥

मात्रा ४ माषकाः ।

अश्वगन्धा ।

गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया ।
वराहकर्णी वरदा बलदा कुष्ठगन्धिनी ॥
अश्वगन्धानिलश्लेष्मश्वित्रशोथक्षयापहा ।
बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला ।
आमवात व्रण कासं श्वासञ्चाशु व्यपोहति ।

मात्रा २ माषकौ ।

कोकिलाक्षः ।

कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः क्षुरः ।
भिक्षु' काण्डेक्षुरप्यु,क्त इक्षुगन्धेक्षुबालिका ॥
क्षुरकः शीतलो वृष्यः स्वाद्वम्लः पिच्छलस्तथा ।
तिक्तो वातामशोथाश्मतृष्णारुच्यनिलास्रजित् ॥

मात्रा ४ माषकाः ।

शारिवाद्वयम् ।

कृष्णशारिवा । हिन्दी करियावांसा ।

इयं जम्बूकवत्पत्रा सुगन्धा कलघण्टिका ।
कृष्णा तु शारिवा श्यामा गोपी गोपवधूश्च सा ॥

शुक्लशारिवा । हिन्दी गोयारिया मागु ।

इयमपि जम्बूकवत्पत्रा दुग्धगर्भा व्रततिर्भवति ।
धवला शारिवा गोपी गोपकन्या कृशोदरी ।
स्फोटा श्यामा गोपवल्ली लतास्फोता च चन्दना ॥

श्यामापदेन कृष्णा श्वेतापि शारिवा कथ्यते सा श्वेतेन शारिवापदस्य प्रयुक्तत्वात्।

द्वयोर्गुणाः।

सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु।
अग्निमान्द्यारुचिश्वासकासामविषनाशनम्॥
दोषत्रयास्रप्रदरज्वरातीसारनाशनम्।
स्वेदनं मूत्रकृद्बल्यं परं वृष्यं रसायनम्॥
औपदंशिकरोगघ्नं सर्वचर्म्मविकारनुत्।
आमवातं वातरक्तं सूतरोगांश्च नाशयेत्॥

मात्रा ४ माषकाः।

सुधामूली।

सुधामूल्यस्तीत्या च वीरकन्दोऽस्त्रियां मतः।
वीरकन्दोऽग्निजननः शुक्रलो बलवर्द्धनः॥
रक्तदोषहरो हृद्यो मन्मथोद्दीपनश्च सः।
रसायनः पर वृष्य आयुष्यः पुष्टिदः स्मृतः॥

मात्रा ४ माषकाः।

अमरवल्ली।

कीर्त्तितामरवल्ली च वृष्यवल्ली सुरागिणी।
वृष्यवल्ली बलकरी परं वृष्या रसायनी॥
मूत्रकृत् स्वेदजननी पुष्टिदा कार्श्यवारिणी।
औपदंशिकरोगांश्च रक्तदोषं हरेदियम्॥

मात्रा ४ माषकाः।

पातालगरुडी।

छिलिहिण्टो महामूल. पातालगरुड़ाह्वयः।
छिलिहिण्ट पर वृष्यः कफघ्नः पवनापहः॥
मात्रा २ माषकौ।

---

## द्वितीयोऽध्यायः।

---

अथ रसायनवर्गः।

आमलकी।

त्रिष्वामलकमाख्यात धात्री तिष्यफलामृता।
हरीतकीसमन्धात्रीफलं किन्तु विशेषतः॥
रक्तपित्तप्रमेहघ्न पर वृष्य रसायनम्।
हन्ति वातं तदम्लत्वात् पित्त माधुर्य्यशैत्यतः॥
कफ रूक्षकषायत्वात् फलं धात्र्यास्त्रिदोषजित्।
मज्जास्य हरति श्रान्तिं तृषा दाह वमिं भ्रमम्॥
यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम्।
तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत्॥
मात्रा ४ माषकाः।

चन्द्रशूरम्।

चन्द्रिका चर्म्महन्त्री च पशुमेहनकारिका।
नन्दिनी कारवी भद्रा वासपुष्पा सुवासरा॥

चन्द्रशूरं हितं हिक्कावातश्लेष्मातिसारिणाम् ।
असृग्वातगदद्वेषि बलपुष्टिविवर्द्धनम् ॥

अस्य बीजं ग्राह्यं, मात्रा ४ माषका. ।

चतुर्बीजम् ।

मेथिका चन्द्रशूरश्च कालाजाजी यवानिका ।
एतच्चतुष्टयं युक्तं चतुर्बीजमिति स्मृतम् ॥
तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयम् ।
अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम् ॥

मात्रा २ माषकौ

चोबचिनी ।

द्वीपान्तरवचा किञ्चित्तिक्तोष्णा वह्निदीप्तिकृत ।
विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी ॥
वातव्याधिमपस्मारमुन्मादं तनुवेदनाम ।
व्यपोहति विशेषेण फिरङ्गामयनाशिनी ॥

मात्रा १ माषक ।

भल्लातकम् ।

भल्लातकं त्रिषु प्रोक्तमरुष्कोऽरुष्करोऽग्निकः ।
तथैवाग्निमुखी भल्ली वीरवृक्षश्च शोफकृत् ॥
भल्लातकफलं पक्वं स्वादुपाकरसं लघु ।
कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम् ॥
मेध्यं वह्निकरं हन्तिकफवातव्रणोदरम् ।
कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रिमीन् ॥
तन्मज्जा मधुरा वृष्या बृंहणी वातपित्तहा ।
वृन्तमारुष्करं स्वादु पित्तघ्नं केश्यमग्निकृत् ॥

भल्लातकं कषायोष्णं शुक्रलो मधुरो लघुः ।
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ।
हन्ति गुल्मज्वरश्वित्र वह्निमान्द्यक्रिमिव्रणान् ॥
मात्रा ४ रक्तिकाः ।

गुग्गुलुः ।

गुग्गुलुर्देवधूपश्च जटायुः कौशिकः पुरः ।
कुम्भोलुः खलक क्लीवे महिषाक्षः पलङ्कषः ॥
महिषाक्षो महानीलं कुमुदं पद्म इत्यपि ।
हिरण्यं पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयं ॥
भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः ।
महानीलस्तु विज्ञेयः स्वनामसमलक्षणः ॥
कुमुदः कुमुदाभः स्यात् पद्मो माणिक्यसन्निभः ।
हिरण्याक्षस्तु हेमाभः पञ्चानां लिङ्गमीरितम् ॥
महिषाक्षो महानीलो गजेन्द्राणां हिताबुभौ ।
हयानां कुमुदः पद्मः स्वस्थारोग्यकरौ परौ ॥
विशेषेण मनुष्याणा कनकः परिकीर्त्तितः ।
अभावान्महिषाक्षश्च मतः कैश्चिन्नृणामपि ॥
गुग्गुलुर्विशदस्तिक्तो वीर्य्योष्णं पित्तलः सरः ।
भग्नसन्धानकृद्वृष्य कफवातव्रणापचोः ॥
मेदोमेहाश्मवाताश्च क्लेदकुष्ठाममारुतान् ।
पीडिकाग्रन्थिशोफार्शं गण्डमालाक्रिमीन् जयेत् ॥
माधुर्य्याच्च मयेहातं कषायत्वाच्च पित्तहा ।
तिक्तत्वात् कफजित्तेन गुग्गुलुं सर्वदोषहा ॥
स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः ॥

स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः ।
नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः ॥
शुष्को दुर्गन्धिकश्चैव त्यक्तप्रकृतवर्णकः ।
पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्य्यवर्जितः ॥
अम्लं तीक्ष्णमजीर्णञ्च व्यवाय श्रममातपम् ।
मद्यं दोषञ्च्यजेत् सम्यग् गुणार्थी पुरसेवकः ॥
जायन्ते पुरपादपा मरुभुवि ग्रीष्मेऽर्कसन्तापिताः
शीतार्त्ताः शिशिरेऽपि गुग्गुलुरसं मुञ्चन्ति ते पञ्चधा ।
हेमाभं महिषाक्षतुल्यमपरं सत्पद्मरागोपमं
भृङ्गाभं कुमुदद्युतिञ्च विधिना ग्राह्याः परीक्ष्य ततः ॥
वह्नौ ज्वलन्ति तपने विलयं प्रयान्ति
क्लिद्यन्ति कोष्णसलिले पयसः समानाः ।
ग्राह्याः शुभाः परिहरेच्चिरकालजाता-
नङ्गारवर्णसमपूयविगन्धवर्णान् ॥
एतस्य निर्य्यासो ग्राह्यः, मात्रा २ माषकौ ।

मुषलीकन्दम् ।

तालमूली तु विद्वद्भिर्मुषली परिकीर्त्तिता ।
सा द्विधा कीर्त्तिता प्राज्ञैः श्वेता चापरसञ्ज्ञिता ।
श्वेता स्वल्पगुणा प्रोक्ता त्वपरा च रसायनी ॥
मुषली मधुरा वृष्या वीर्य्योष्णा बृंहणी गुरुः ।
तिक्ता रसायनी हन्ति गुदजान्यनिलन्तथा ॥
अस्या मूलं ग्राह्यं, मात्रा १ माषकः ।

शतावरी महाशतावरी च ।

शतावरी बहुसुता भीरुरिन्दीवरी वरी ।

नारायणी शतपदी शतवीर्य्या च पीवरी ।
महाशतावरी चान्या शतमूल्यर्द्धकण्ठिका ।
सहस्रवीर्य्या महती ऋष्यप्रोक्ता महोदरी ॥
शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी ।
मेधाग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित् ॥
शुक्रस्तन्यकरी बल्या वातपित्तास्रमेहजित् ।
महाशतावरी मेध्या हृद्या वृष्या रसायनी ॥
शीतवीर्य्या निहन्त्यर्शोग्रहणीनयनामयान् ॥
अस्या मूलं ग्राह्यं, मात्रा ४ माषकाः ।

## भृङ्गराजः ।

भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च ।
अङ्गारकः केशराजो भृङ्गारः केशरञ्जनः ॥
भृङ्गारः कटुकस्तीक्ष्णो रूक्षोष्णः कफवातनुत् ।
केश्यस्त्वच्यः क्रिमिश्वासकासशोथामपाण्डुनुत् ।
दन्त्ये रसायनो बल्यः कुष्ठनेत्रशिरोऽर्त्तिनुत् ॥
अस्य सर्वांशः स्वरसश्च ग्राह्यः, मात्रा २ माषकौ ।

## काकमाची ।

काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी ।
काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा ॥
तिक्ता रसायनी शोथकुष्ठार्शोज्वरमेहजित् ।
कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोगनाशिनी ॥
अस्या मूलं ग्राह्यं स्वरसश्च ग्रहणीयः मात्रा २ माषकौ ।

## शङ्खपुष्पी ।

शङ्खपुष्पी तु शङ्खाह्वा माङ्गल्यकुसुमापि च ।

शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगहृत्॥
रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा।
दोषापस्मार भुतास्रक्‌कुष्ठक्रिमिविषप्रणुत्॥
अस्या मूल ग्राह्यं स्वरसश्च ग्रहणीयः मात्रा २ माषकौ।

ब्राह्मी।

ब्राह्मी कपोतवङ्का च सोमवल्ली सरस्वती॥

मण्डूकपर्णी।

मण्डूकपर्णी माण्डूकी त्वाष्ट्री दिव्या महौषधी।
ब्राह्मी हिमा सरा तिक्ता लघुर्मेध्या च शीतला॥
कषाया मधुरा स्वादुपाकायुष्या रसायनी।
स्वर्य्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित्।
विषशोथज्वरहरी तद्वन्मण्डूकपर्णिनी॥
अस्या सर्वांशः स्वरसश्च ग्राह्यः मात्रा २ माषकौ।

शाल्मलि।

शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति च।
रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या च तुलनी॥
शाल्मली शीतला स्वाद्वी रसे पाके रसायनी।
श्लेष्मला पित्तवातास्रहारिणी रक्तपित्तजित्॥
पिच्छिला ग्राहिणी वल्या लघ्वी शुक्रकरी मता।
शाल्मलीपुष्पशाकन्तु घृतसैन्धवसाधितम्।
प्रदर नाशयत्येव दुःसाध्यञ्च न संशयः॥
अस्या मूलादिक ग्राह्यं मात्रा २ माषकौ॥

———

# तृतीयोऽध्यायः ।

---

## अथ वातघ्नवर्गः ।

### धान्यकम् ।

धान्यकं धानकं धान्यं धाना धानेयकं तथा ।
कुनटी धेनिका छत्रा कुस्तुम्बुरु वितुन्नकम् ॥
धान्यक तुवर स्निग्धमवृष्यं मूत्रलं लघु ।
तिक्तं कटूष्णवीर्य्यञ्च दीपनं पाचनं स्मृतम् ॥
ज्वरघ्नं रोचकं ग्राहि स्वादुपाकि त्रिदोषनुत् ।
तृष्णादाहवमिश्वासकासकार्श्यक्रिमिप्रणुत् ॥
आर्द्रन्तु तद्गुणं स्वादु विशेषात् पित्तनाशि तत् ॥

अस्य फलं ग्राह्यं, मात्रा २ माषकौ ।

### अतसी ।

अतसी नीलपुष्पी च पार्वती स्यादुमा क्षुमा ।
अतसी मधुरा तिक्ता स्निग्धा पाके कटुर्गुरुः ॥
उष्णा दृक्शुक्रवातघ्नी कफपित्तविनाशिनी ।
कासातिसारहरणी व्रणसंशोधनी मता ॥

अस्या वीजं ग्राह्यं, मात्रा २ माषकौ ।

### पाटला ।

पाटला पिच्छिला प्रोक्ता सा स्निग्धा कासवारिणी ।
मिश्रयोन्योर्हरेद्दाहं व्रणदाहनिवारणी ॥

अस्या वीजं ग्राह्यं, मात्रा २ माषकौ ।

शीतवीजम् । हिन्दी ईशवगुल ।

शीतवीजं शैशिरीकं शैत्यवीजञ्च गद्यते ।
मूत्रलं शीतवीजं स्याद्दुष्णवातनिवारणम् ॥
वस्तिसंशोधनं प्रोक्तं शुक्रमेहनिवारणम् ।
आधानापहरञ्चास्य योज्यः शीतकषायकः ॥

मात्रा २ माषकौ ।

तगरम् ।

कालानुसार्य्यं तगरं कुटिलं लघु संनतम् ।
अपरं पिण्डतगरं दण्डहस्ती च वर्हिणम् ॥
तगरद्वयमुष्णं स्यात् स्वादु स्निग्धं लघु स्मृतम् ।
विषापस्मारशूलाक्षिरोगदोषत्रयापहम् ॥
योज्या तगरकाभावे शीतलौ तद्गुणा बुधैः ॥

अनयोर्मूलं ग्राह्यं, मात्रा २ माषकौ ।

स्वर्णवल्ली ।

स्वर्णवल्लो रक्तफला काकायुः काकवल्लरी ।
स्वर्णवल्ली शिरःपीड़ां त्रिदोषान् हन्ति दुग्धदा ॥

अस्याः सर्वांशो ग्राह्य., मात्रा २ माषकौ ।

गन्धप्रसारणी ।

प्रसारणी राजबला भद्रपर्णी प्रतापनी ।
सरणी सारणी भद्रा बला चापि कटम्भरा ॥
प्रसारणी गुरुर्वृष्या बलसन्धानकृत् सरा ।
वीर्य्योष्णा वातहृत् तिक्ता वातरक्तकफापहा ॥

एतस्याः सर्वांशो ग्राह्यं, मात्रा २ माषकौ ।

———

## चतुर्थोऽध्यायः ।

---

### अथ पित्तघ्नवर्गः ।

#### वारिपर्णी शैवालञ्च ।

वारिपर्णी कुम्भिका स्याच्छैवालं शैवलञ्च तत् ॥
वारिपर्णी हिमा तिक्ता लघ्वी स्वाद्वी सरा कटुः ।
दोषत्रयहरी रूक्षा शोणितज्वरशोथहृत् ॥
शैवालं तुवरं तिक्तं मधुरं शीतलं लघु ।
स्निग्धं दाहतृषापित्तरक्तज्वरहरं परम् ॥
अनयो सर्वांशो ग्राह्यमात्रा २ माषकौ ।

#### कलिङ्गशुण्ठी ।

कलिङ्गशुण्ठी तिक्ता स्याद्बलकृद्वह्निवर्द्धिनी ।
अजीर्णं निखिलं हन्ति बालातीसारनाशिनी ॥
यवक्षारयुता वान्तिं गर्भिण्याश्चापि संहरेत् ॥
अस्या मूल ग्राह्यं, मात्रा १ माषकः ।

#### नाडिकम् ।

नाड़िकं कालशाकञ्च श्राद्धशाकञ्च कालकम् ।
कालशाकं सरं रुच्यं वातकृत् कफशोथहृत् ॥
बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम् ॥

अपिच,

नाड़ीचशाकं द्विविधं तिक्तं मधुरमेव च ।
रक्तपित्तहरं तिक्तं क्रिमिकुष्ठविनाशनम् ॥

मधुरं पिच्छिलं शीतं विष्टम्भि कफवातहृत्॥

अस्य पत्रं ग्रहणीयं, मात्रा २ माषकौ।

पर्पटः।

पर्पटो वरतिक्तश्च स्मृतः पर्पटकश्च सः।
कथितः पांशुपर्य्यायस्तथा कवचनामकः॥
पर्पटो हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान्।
संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः॥

एतस्य सर्वांशो ग्राह्यः, मात्रा २ माषकौ।

वेतसः।

वेतसो नम्रकः प्रोक्तो वानीरो वञ्जुलस्तथा।
अभ्रपुष्पश्च विदुलो रथः शीतश्च कीर्त्तितः॥
वेतसः शीतलो दाहशोथार्शोयोनिरुक्प्रणुत्।
हन्ति वीसर्पकृच्छ्रास्रपित्ताश्मरीकफानिलान्॥

अस्य मूलं शाखाग्रञ्च ग्राह्यं, मात्रा १ माषकः।

जलवेतसः।

निकुञ्जकः परिव्याधो नादेयो जलवेतसः।
जलजो वेतसः शीतः कुष्ठहृद्वातकोपनः॥

अस्य सर्वांशो ग्राह्यः, मात्रा १ माषकः।

हिज्जलः।

इज्जलो हिज्जलश्चापि निचुलश्चाम्बुजस्तथा।
जलवेतसवद्वेद्यो हिज्जलोऽयं विषापहः॥

अस्य वीजं ग्राह्यं, मात्रा ६ रक्तिकाः।

नीलदूर्वा।

नीलदूर्वा रुहानन्ता भार्गवी शतपर्विका।
शष्पं सहस्रवीर्य्या च शतवल्ली च कीर्त्तिता॥
नीलदूर्वा हिमा तिक्ता मधुरा तुवरा हरेत्।
कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान्॥

अस्या मात्रा १ माषकः, स्वरसमात्रा च तोलक-स्तोलकद्वयम्।

श्वेतदूर्वा।

दूर्वा शुक्ला च गोलोमी शतवीर्य्या च कथ्यते॥
श्वेता दूर्वा कषाया स्यात् स्वाद्वी वल्या च जीवनी।
तिक्ता हिमा विसर्पास्रतृट्पित्तकफदाहहृत्॥

अस्या मात्रा २ माषकौ, स्वरसमात्रा च तोलैक-स्तोलकद्वयम्।

गण्डदूर्वा।

गण्डदूर्वा तु गण्डाली मत्स्याक्षी शकुलाक्षकः।
गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः॥
तिक्ता कषाया मधुरा वातकृत् कटुपाकिनी।
दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा॥

एतस्याः सर्वांशो ग्राह्यः, मात्रा १ माषकः। सदास्या रसोऽपि पानार्थं ग्राह्यः, मात्रा चास्य तोलैकत-स्तोलकद्वयम्।

हंसपदी।

हंसपादी हंसपदी कीटमाता त्रिपादिका॥

हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् ।
विसर्पदाहातीसारलूताभूताग्निरोहिणीः ॥
अस्या मूलं ग्राह्यं, मात्रा ६ रक्तिकाः ।

## भूमिसहः ।

भूमिसहो दारदारुर्वरदारुः खरच्छदः ।
भूमिसहस्तु शिशिरो रक्तपित्तप्रसादन. ॥
अस्य मूलं ग्राह्यं, मात्रा ६ रक्तिकाः ।

## पटोलपत्रम् ।

पटोलपत्रं पित्तघ्नं दीपनं पाचनं लघु ।
स्निग्धं वृष्यं तथोष्णञ्च ज्वरकासक्रिमि ुत् ॥
मात्रा २माषकौ ।

## दुग्धपाषाणः ।

दुग्धपाषाणकः चीरी दुग्धाश्मा चीरसम्भवः ।
दीप्तिको दुग्धपाषाणो दुग्धी वज्राभ एव च ॥
दुग्धपाषाणको रुच्यो नात्युष्णो ज्वरपित्तहृत् ।
शूलहृद्रोगशमनः कासाश्मानविनाशनः ॥
अस्य सर्वांशो ग्रहणीयः मात्रा २ माषकौ ।



# पञ्चमोऽध्यायः ।

---

## अथ कफघ्नवर्गः ।

### रास्ना ।

रास्ना युक्तरसा रस्या सुवहा रसना रसा ।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा ॥
रास्नामपाचनी तिक्ता गुरूष्णा कफवातजित् ।
शोथश्वाससमीरास्रवातशूलोदरापहा ॥
कासज्वरविषाशीतिवातिकामयनाशिनी ॥
मात्रा २ माषकौ ।

### नाकुली रास्नाभेदः ।

नाकुली सरसा नागसुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सूर्य्याङ्गी विषनाशिनी ॥
नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् ।
भोगिलूतावृश्चिकाखुविषज्वरक्रिमिव्रणान् ॥
अस्याः सर्वांशो ग्राह्यः, मात्रा २ माषकौ ।

### मरिचम् ।

मरिचं वेल्लजं कृष्णमूषणं धर्म्मपत्तनम् ।
मरिचं कटुकं तीक्ष्णं दीपनं कफवातजित् ॥
उष्णं पित्तकरं रूक्षं श्वासशूलक्रिमीन् हरेत् ॥
तदार्द्रं मधुरं पाके नात्युष्णं कटुकं गुरु ।
किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ॥
अस्य बीजमात्रा १ माषकः ।

शुण्ठी।

शुण्ठी विश्वा च विश्वञ्च नागरं विश्वभेषजम्।
ऊषणं कटुभद्रञ्च शृङ्गवेर महौषधम्॥
शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः।
स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत्॥
वृष्या सर्य्यां वमिश्वासशूलकासहृदामयान्।
हन्ति श्लीपदशोथार्शआनाहोदरमारुतान्॥
आग्नेयगुणभूयिष्ठं तोयांशम्परिशोषि यत्।
संगृह्णाति मलं तत्तु ग्राहि शुण्ठ्यादयो यथा॥
विबन्धभेदनी या तु सा कथं ग्राहिणी भवेत्।
शक्तिर्विबन्धभेदे स्यात् यतो न मलपातने॥
मात्रा १ माषकः।

पिप्पलीमूलम्।

ग्रन्थिकं पिप्पलीमूलमूषणं चटकाशिरः।
दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु॥
रूक्षं पित्तकरं भेदि कफवातोदरापहम्।
आनाहप्लीहगुल्मघ्नं क्रिमिश्वासक्षयापहम्॥
मात्रा १ माषकः।

चव्यम्।

भवेच्चव्यन्तु चविका कथिता सा तथोषणा।
कणामूलगुणं चव्यं विशेषात् गुदजापहम्॥
अस्य त्वक् ग्राह्या, मात्रा १ माषकः।

शुक्लैरण्डः।

शुक्ल एरण्ड आमण्डश्चित्रो गन्धर्वहस्तकः।

पञ्चाङ्गुलो वर्द्धमानो दीर्घदण्डो व्यड़म्बकः।
वातारिस्तरुणश्चापि रुवूकश्च निगद्यते॥
रक्तोऽपरो रुवुकः स्यादुरुवूको रुवुस्तथा।
व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः॥
एरण्डयुग्मं मधुरमुष्णं गुरु विनाशयेत्।
शूलशोथकटीवस्तिशिरःपीड़ोदरज्वरान्।
ब्रध्नश्वासकफानाहकासकुष्ठाममारुतान्॥
एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम्।
मूत्रकृच्छ्रहरञ्चापि पित्तरक्तप्रकोपनम्॥
वातार्य्यग्रदलं गुल्मवस्तिशूलहरं परम्।
कफवातक्रिमीन् हन्ति वृद्धिं सप्तविधामपि॥
एरण्डफलमत्युष्णं गुल्मशूलानिलापहम्।
यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं परम्॥
तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदरापहः॥

अस्य मूलं तैलञ्च सदा ग्राह्यं, मूलमात्रा २ माषकौ।

## ताम्बूलवल्ली।

ताम्बूलवल्ली ताम्बूली नागिनी नागवल्लरी।
ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम्॥
वश्यं तिक्तं कटुक्षारं रक्तपित्तकरं लघु।
बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्॥

अस्याः पत्रं ग्राह्यं पत्ररसश्च ग्रहणीयः, मात्रा ४ माषकाः।

### विल्वः ।

विल्व' शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ॥
श्रीफलस्तुवरस्तिक्तो ग्राही रूक्षोऽग्निपित्तकृत् ।
वातश्लेष्महरो बल्यो लघुरुष्णश्च पाचनः ॥
अस्या मूलत्वग् ग्राह्या, मात्रा १ माषकः ।

### गाम्भारी ।

गाम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका ।
काश्मीरी काश्मरी हीरा काश्मर्य्यः पीतरोहिणी ।
कृष्णवृन्ता मधुरसा महाकुसुमिकापि च ॥
काश्मरी तुवरा तिक्ता वीर्य्योष्णा मधुरा गुरुः ।
दीपनी पाचनी मेध्या भेदिनी भ्रमशोषजित् ।
दोषतृष्णामशूलार्शोविषदाहज्वरापहा ॥
तत्फलं बृंहणं वृष्यं गुरु केश्यं रसायनम् ।
वातपित्ततृषारक्तक्षयमूत्रविबन्धनुत् ॥
स्वादु पाके हिमं स्निग्धं तुवराम्लविशुद्धिकृत् ।
हन्याद्दाहतृषावातरक्तपित्तक्षतक्षयान् ॥
अस्या मूलत्वग् ग्राह्या, मात्रा १ माषकः ।

### पाटला ।

पाटलिः पाटला मोघा मधुदूती फलेरुहा ।
कृष्णवृन्ता कुवेराक्षी कालस्थाल्यलिवल्लभा ।
ताम्रपुष्पी च कथिता परा स्यात् पाटला सिता ॥
मुष्कको मोचको घण्टापाटलिः काष्ठपाटला ।
पाटला तुवरा तिक्तानुष्णा दोषत्रयापहा ।

अरुचिश्वासशोथास्रच्छर्दिहिक्कातृषाहरी ॥
पुष्पं कषायं मधुरं हिमं हृद्यं कफास्रनुत्।
पित्तातिसारहृत्कण्ठ्यं फलं हिक्कास्रपित्तहृत् ॥
कालिस्थालीत्यत्र काचस्थालीत्येके।
अस्या मूलत्वग् ग्राह्या, मात्रा १ माषकः।
पाटलिपुष्पस्य मात्रा १ माषकः।

अग्निमन्थः।

अग्निमन्थो जयः स स्यात् श्रीपर्णी गणिकारिका।
जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥
अग्निमन्थः श्वयथुनुद्वीर्य्योष्णः कफवातहृत्।
पाण्डुनुत् कटुकस्तिक्तस्तुवरो मधुरोऽग्निदः ॥
अस्या मूलत्वग् ग्राह्या, मात्रा १ माषकः।

श्योणाकः।

श्योणाकः शोषणश्च स्यान्नटकट्वङ्गटुण्टुकाः।
मण्डूकपर्णपत्रोणशुकनामकुटन्नटाः।
दीर्घवृन्तोऽरलुश्चापि पृथुशिम्बः कटम्भरः ॥
श्योणाको दीपनः पाके कटुकस्तुवरो हिमः।
ग्राही तिक्तोऽनिलश्लेष्मपित्तकासप्रणाशनः ॥
टुण्टुकस्य फलं बालं रूक्षं वातकफापहम्।
हृद्यं कषायं मधुरं रोचनं लघु दीपनम्।
गुल्मार्शःक्रिमिहृत् प्रौढं गुरुवातप्रकोपनम् ॥
अस्य मूलत्वग् ग्राह्या, मात्रा १ माषकः।

बृहत् पञ्चमूलम्।

श्रीफलः सर्वतोभद्रा पाटला गणिकारिका।

श्योणाकः पञ्चभिश्चैतैः पञ्चमूलं महन्मतम् ॥
पञ्चमूलं महत् तिक्तं कषायं कफवातनुत् ।
मधुरं श्वासकासघ्नमुष्णं लघ्वग्निदीपनम् ॥

शालपर्णी ।

शालपर्णी स्थिरा सौम्या त्रिपर्णी पीवरी गुहा ।
विदारीगन्धा दीर्घाङ्गी दीर्घपत्रांशुमत्यपि ॥
शालपर्णी गरच्छर्दीज्वरश्वासातिसारजित् ।
शोषदोषत्रयहरी बृंहण्युक्ता रसायनी ॥
तिक्ता विषहरी स्वादुः क्षतकासक्रिमिप्रणुत् ॥

अस्या मूलं ग्राह्यं, तदभावे सर्वांशो ग्रहणीयः । मात्रा १ माषकः ।

पृश्निपर्णी ।

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्ण्यपि ।
क्रोष्टुविन्ना सिंहपुच्छी कलसी धावनिर्गुहा ॥
पृश्निपर्णी त्रिदोषघ्नी वृष्योष्णा मधुरा सरा ।
हन्ति दाहज्वरश्वासरक्तातिसारतृड्वमीः ॥

अस्या मूलं ग्राह्यं, तदभावे सर्वांशो ग्रहणीयः । मात्रा १ माषकः ।

बृहती ।

वार्त्ताकी क्षुद्रभण्टाकी महती बृहती कुली ।
हिङ्गुली राष्ट्रिका सिंही महोष्ट्री दुःप्रधर्षिणी ॥
बृहती ग्राहिणी हृद्या पाचनी कफवातहृत् ।
कटुतिक्तास्यवैरस्यमलारोचकनाशिनी ॥

उष्णा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित्॥

अस्या मूलं ग्राह्यं, मूलाभावे सर्वांशो ग्रहणीयः। मात्रा १ माषकः।

कण्टकारी।

कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका।
कण्टालिका कण्टकिनी धावनी बृहती तथा॥

उभे च बृहत्यौ। यत आह सुश्रुतः।

क्षुद्रायां क्षुद्रभण्टाक्या बृहतीति निगद्यते॥
श्वेता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका।
गर्भदा चन्द्रभा चन्द्री चन्द्रपुष्पा प्रियङ्करी॥
कण्टकारी सरा तिक्ता कटुका दीपनी लघुः।
रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान्।
निहन्ति पीनसं श्वासपार्श्वपीड़ाहृदामयान्॥
तयोः फलं कटुरसं पाके च कटुकं भवेत्।
शुक्रस्य रेचनं भेदि तिक्तं पित्ताग्निकृल्लघु॥
हन्यात् कफमरुत्कण्डूकासमेदःक्रिमिज्वरान्।
तद्वत् प्रोक्ता सिता क्षुद्रा विशेषाद्गर्भकारिणी॥

अस्या मूलं ग्राह्यं, मूलाप्राप्तौ सर्वांशो ग्रहणीयः। मात्रा १ माषकः।

गोक्षुरः।

गोक्षुरः क्षुरकोऽपि स्यात्त्रिकण्टः स्वादुकण्टकः।
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि।
पलङ्कषाश्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका॥
गोक्षुरः शीतलः स्वादुर्बलकृद्वस्तिशोधनः।

मधुरो दीपनो हृद्यः पुष्टिदश्चाश्मरीहरः।
प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्॥
त्रिकण्टशाकं हृद्यं स्यात् तिक्तं स्रोतोविशोधनम्॥

अस्य मूलं ग्राह्यं, मूलाभावे सर्वांशो ग्रहणीयः।
मात्रा १ माषकः।

## लघु पञ्चमूलम्।

शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका।
गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम्॥
पञ्चमूलं लघु स्वादु बल्यं पित्तानिलापहम्।
नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरीप्रणुत्॥

## दशमूलम्।

उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम॥
दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः।
तन्द्राशोथज्वरानाहपार्श्वपीडारुचीर्हरेत्॥

## शोभाञ्जन।

शोभाञ्जनः श्यामः श्वेतो रक्तश्च।

शोभाञ्जनः शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः।
तद्बीजं श्वेतमरिचं मधुशिग्रुः सलोहितः॥
शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो लघुः।
दीपनो रोचनो रूक्षः क्षारस्तिक्तो विदाहकृत्॥
संग्राही शुक्रलो हृद्यः पित्तरक्तप्रकोपनः।
चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुक्रिमीन्॥
मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान् हरेत्।
श्वेतः प्रोक्तगुणो ज्ञेयो विशेषाद्दाहकृद्भवेत्॥

प्लीहानं विद्रधिं हन्ति व्रणघ्नः पित्तरक्तहृत्।
मधुशिग्रुः प्रोक्तगुणो विशेषाद्दीपनः सरः॥
शिग्रुवल्कलपत्राणां स्वरसः परमार्त्तिहृत्।
चक्षुष्यं शिग्रुजं वीजं तीक्ष्णोष्णं विषनाशनम्॥
अवृष्यं कफवातघ्नं तन्नस्येन शिरोऽर्त्तिनुत्॥

अस्य वीजादिकं ग्राह्यं, वीजस्य मात्रा १ माषकः, स्वरसस्य मात्रा २ माषकौ।

## चिल्लकः।

चिल्लको वातनिर्हारी श्लेष्मघ्नो धातुपुष्टिकृत्।
आग्नेयो विषवद्यस्य फलं मत्स्यनिषुदनम्॥

अस्य सर्वांशो ग्राह्यः, मात्रा १ माषकः।

## टङ्कारी।

टङ्कारी वातजित्तिक्ता श्लेष्मघ्नी दीपनी लघुः।
शोथोदरव्याथाहन्त्री हितापि च विसर्पिणाम्॥

अस्याः सर्वांशो ग्राह्यः, मात्रा २ माषकौ।

## अङ्कोटः।

अङ्कोटो दीर्घकीलः स्यादङ्कोलश्च निकोचकः।
अङ्कोटकः कटुस्तीक्ष्णः स्निग्धोष्णस्तुवरो लघुः॥
रेचनः क्रिमिशूलामशोफग्रहविषापहः।
विसर्पकफपित्तास्रमूषकादिविषापहः॥
तत्फलं शीतलं स्वादु श्लेष्मघ्नं वृंहणं गुरु।
वल्यं विरेचनं वातपित्तदाहक्षयास्रजित्॥

अस्य मूलत्वग्ग्राह्या, मात्रा २ माषकौ।

## भूतृणम् ।

गुह्यबीजन्तु भूतीकं सुगन्धं जम्बुकप्रियम् ।
भूतृणं तु भवेच्छत्रा मालातृणकमित्यपि ॥
भूतृण कटुक तिक्तं तीक्ष्णोष्णं रेचनं लघु ।
विदाहि दीपनं रूक्षमनेत्र्यं मुखशोधनम् ।
अवृष्य बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥

अस्य सर्वांशो ग्रहणीयः, मात्रा २ माषकौ ।

## कर्त्तृणम् ।

कर्त्तृणं रौहिषं देवजग्धं सौगन्धिकं तथा ।
भूतिकं व्यामपौरञ्च श्यामकं धूमगन्धिकम् ॥
रौहिषं तुवरं तिक्तं कटुपाकं व्यापोहति ।
हृत्कण्ठव्याधिपित्तास्रशूलकासकफज्वरान् ॥

अस्य सर्वांशो ग्राह्यः, मात्रा २ माषकौ ।

## मुण्डितिका ।

मुण्डी भिक्षुः परिप्रोक्ता श्रावणी च तपोधना ।
श्रवणाह्वा मुण्डतिका तथा श्रवणशीर्षका ॥
महाश्रावणिकान्या तु सा स्मृता भूकदम्बिका ।
कदम्बपुष्पिका च स्यादव्यथातितपस्विनी ॥
मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः ।
मेध्या गण्डापचीकृच्छ्रक्रिमियोन्यर्त्तिपाण्डुनुत् ॥
श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्त्तिहृत ।
महामुण्डी च तत्तुल्या गुणैरुक्ता महर्षिभि. ॥

सर्वांशोऽस्या ग्राह्यः, मात्रा १ माषकः ।

अपामार्गः।

अपामार्गस्तु शिखरी ह्यधःशल्यो मयूरकः।
मर्कटी दुर्ग्रहा चापि किणिही खरमञ्जरी॥
अपामार्गः सरस्तीक्ष्णो दीपनस्तिक्तकः कटुः।
पाचनो रोचनो छर्दिकफमेदोऽनिलापहः।
निहन्ति हृद्रुजाध्मानार्शःकण्डूशूलोदरापचीः॥

अस्य मूलं ग्राह्यं, तदभावे सर्वांशो ग्रहणीयः।
मात्रा १ माषकः।

रक्तापामार्गः।

रक्तोऽन्यो वशिरो वृत्तफलो धामार्गवोऽपि च।
प्रत्यक्पर्णी केशपर्णी कथिता कपिपिप्पली॥
अपामार्गोऽरुणो वातविष्टम्भी कफकृत् हिमः।
रूक्षः पूर्वगुणैर्न्यूनः कथितो गुणवेदिभिः॥
अपामार्गफलं स्वादु रसे पाके च दुर्जरम्।
विष्टम्भि वातल रूक्षं रक्तपित्तप्रसादनम्॥

मात्रा १ माषकः।

श्वेतपुनर्नवा।

पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रिका।
कटुः कषायानु रसा पाण्डुघ्नी दीपनी सरा।
शोथानिलगरश्लेष्महरी ब्रध्नोदरप्रणुत्।
कासहृद्रोगदुर्नामशूलानिलनिकृन्तनी॥

अस्याः सर्वांशो ग्राह्यः, मात्रा २ माषकौ।

रक्तपुष्पा पुनर्नवा।

पुनर्नवापरा रक्ता रक्तपुष्पा शिलाटिका।

शोथघ्नः क्षुद्रवर्षाभूर्वर्षकेतुः कपिल्लकः॥
पुनर्नवारुणा तिक्ता कटुपाका हिमा लघुः।
वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी॥

सर्वांशोऽस्या ग्राह्यः, मात्रा २ माषकौ।

## वन्दा।

वन्दा वृक्षादनी वृक्षभक्ष्या वृक्षरुहापि च।
वन्दाकः स्याद्धिमस्तिक्तः कषायो मधुरो रसे॥
माङ्गल्यः कफवातास्ररक्षोव्रणविषापहः।
पित्तदाहश्रमहरो बल्यो वृष्यो रसायनः॥

अस्याः सर्वांशो ग्राह्यः, मात्रा १ माषकः।

## अलम्बुषा ( लज्जालुभेदः )।

अलम्बुषा खरत्वक् च तथा मेदोगला स्मृता।
अलम्बुषा लघुः स्वादुः क्रिमिपित्तकफापहा॥

सर्वांशोऽस्या ग्राह्यः, मात्रा १ माषकः।

## दुग्धिका।

दुग्धिका स्वादुपर्णी स्यात् क्षीरा विक्षीरिणी तथा।
दुग्धिकोष्णा गुरू रूक्षा वातला गर्भकारिणी॥
स्वादु क्षीरा कटुस्तिक्ता सृष्टमूत्रमला पटुः।
स्वादुर्विष्टम्भिनी वृष्या कफकुष्ठक्रिमिप्रणुत्॥

अस्याः सर्वांशो ग्राह्यः, मात्रा १ माषकः।

## द्रोणपुष्पी।

द्रोणा च द्रोणपुष्पी च फलपुष्पा च कीर्तिता।
द्रोणपुष्पी गुरुः स्वादू रूक्षोष्णा वातपित्तकृत्॥
सतीक्ष्णलवणा स्वादुपाका कट्वी च भेदिनी।

कफामकामलाशोथतमकश्वासजन्तुजित् ॥

अस्याः सर्वांशो ग्रहणीयः, मात्रा १ माषकः ।

## आदित्यभक्ता ।

सुवर्चला सूर्य्यभक्ता वरदा वदरापि च ।
सूर्य्यावर्त्ता रविप्रीताऽपरा ब्रह्मसुदुर्लभा ॥
सुवर्चला हिमा रूक्षा स्वादुपाका सरा गुरुः ।
अपित्तला कटुः क्षारा विष्टम्भकफवातजित् ॥
अन्या तिक्ता कषायोष्णा सरा रूक्षा लघुः कटुः ।
निहन्ति कफपित्तास्रश्वासकासारुचिज्वरान् ।
विस्फोटकुष्ठमेहास्रयोनिरुक्क्रिमिपाण्डुताः ॥

अस्याः पञ्चाङ्गिकं ग्राह्यं, मात्रा १ माषकः ।

## बन्ध्याकर्कोटकी ।

बन्ध्याकर्कोटकी देवी कन्या योगीश्वरीति च ।
नागारिर्नक्रदमनी विषकण्टकिनी तथा ॥
बन्ध्याकर्कोटकी लघ्वी कफनुद्व्रणशोधिनी ।
सर्पदर्पहरी तीक्ष्णा विसर्पविषहारिणी ॥

सर्वांशोऽस्या ग्रहणीयः, मात्रा २ माषकौ ।

## तुलसी शुक्ला कृष्णा च ।

तुलसी सुरसा ग्राम्या सुलभा बहुमञ्जरी ।
अपेतराक्षसी गौरी शूलघ्नी देवदुन्दुभिः ॥
तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् ।
दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक्कफवातजित् ॥
शुक्ला कृष्णा च तुलसी गुणैस्तुल्या प्रकीर्त्तिता ॥

अस्या पत्ररसो ग्राह्य, मूलादिकञ्च ग्रहणीयम्। मात्रा २ माषकौ।

वर्वरी।

वर्वरी तुवरी तुङ्गी खरपुष्पाजगन्धिका।
पर्णासस्तत्र क्लष्णे तु कठिञ्चककुठेरकौ॥
तत्र शुक्लोऽर्जकः प्रोक्तो वटपत्रस्ततोऽपरः।
वर्वरीत्रितय रूक्ष शीतं कटु विदाहि च॥
तीक्ष्णं रुचिकरं हृद्यं दीपन लघुपाकि च।
पित्तल कफवातास्रकण्डूक्रिमिविषापहम्॥

वर्वरीत्रयस्य पत्ररसो ग्राह्यः, मात्रा २ माषकौ।

भूर्जपत्रः।

भूर्जपत्र. स्मृतो भूर्जश्चर्मी बहुलवल्कलः॥
भूर्जो बलकर श्लेष्मकर्णरुक्पित्तरक्तजित्।
कषाय कटुरुष्णश्च मेदोविषहर परः॥

अस्य त्वग्ग्राह्या, मात्रा १ माषक।

कटभी।

कटभी स्वादुः पुष्पश्च मधुरेणु कटम्भरः॥
कटभी तु प्रमेहार्शोनाड़ीव्रणविषक्रिमीन्।
हन्त्युष्णा कफकुष्ठघ्नी कटू रूक्षा च कीर्त्तिता॥
तत्फल तुवर ज्ञेय विशेषात् कफशुक्रहृत्॥

अस्याः सर्वांशो ग्राह्य., मात्रा १ माषकः।

तिनिशः।

तिनिशः स्यन्दनो नेमी रथद्रुर्वञ्जुलस्तथा॥
तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहजित्।

तुवरः श्वित्रदाहघ्नो व्रणपाण्डुक्रिमिप्रणुत् ।
उष्णो रक्तातिसारघ्नो वातामयविनाशनः ॥
अस्य त्वग् ग्राह्या, मात्रा १ माषकः ।

काकजङ्घा ।

काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा ।
पारावतपदी दासी काका चापि प्रकीर्त्तिता ॥
काकजङ्घा हिमा तिक्ता कषाया कफपित्तजित् ।
निहन्ति ज्वरपित्तास्रज्वरकण्डूविषक्रिमीन् ॥
अस्या मूलं ग्राह्यं, मात्रा ६ रक्तयः ।

पुत्रजीवः ।

पुत्रजीवो गर्भकरी यष्टीपुष्पोऽर्थसाधकः ॥
पुत्रजीवो गुरुर्वृष्यो गर्भदः श्लेष्मवातहृत् ।
सृष्टमूत्रमलो रूक्षो हिमः स्वादुः पटुः कटुः ॥
अस्य त्वग्ग्राह्या, मात्रा १ माषकः ।

शाकवृक्षः ।

शाकः क्रकचपत्रः स्यात् स्थिरसारो गृहद्रुमः ।
खरपत्रः श्रेष्ठकाष्ठः शरपत्रोऽर्जुनोपमः ॥
शाकवृक्षः सरः स्वादुर्दाहपित्तश्रमापहः ।
कषायः कफहृद्रूक्षो बल्यो ज्वरहरो मतः ॥
अस्य त्वग्ग्राह्या, मात्रा २ माषकौ ।

समुद्रफेनः ।

समुद्रफेनः फेनश्च डिण्डीरोऽब्धिकफस्तथा ॥
समुद्रफेनश्चक्षुष्यो लेखनः शीतलश्च सः ।

कषायो विषपित्तघ्नः कर्णरुक्कफहृल्लघुः ॥

अस्या मात्रा ६ रक्तयः ।

---

# षष्ठोऽध्यायः ।

---

## अथ वमनोपगवर्गः ।

### मदनफलम् ।

मदनश्छर्दनः पिण्डी नटः पिण्डीतकस्तथा ।
करहाटी मरुवकः शाल्यको विषपुष्पकः ॥
मदनो मधुरस्तिक्तो वीर्य्योष्णो लेखनो लघुः ।
वान्तिकृद्विद्रधिहरः प्रतिश्यायव्रणान्तकः ।
रूक्षः कुष्ठकफानाहशोथगुल्मव्रणापहः ॥

मात्रा २ माषकौ ।

### अर्कमूलत्वक् ।

बल्या त्वगर्कमूलस्य स्वेदनी च रसायनी ।
वामनी हन्त्यतीसारव्रणकुष्ठाममारुतान् ॥

अस्या मात्रा बलसञ्जननाद्यर्थं ५ रक्तिकाः, वमनार्थं २ माषकौ ।

### अन्तमलः ।

मलान्तोऽन्तमलः पूतिरण्डपर्णश्च लोमशः ।
वामनः स्वेदजननः कफनिर्हरणस्तथा ॥

अस्य पत्रं ग्राह्यं, मात्रा स्वेदनाद्यर्थे २ रत्तिके, वमनार्थं १ माषकः।

सुखदर्शनः।

वामनः स्वेदनः प्रोक्तो वीर्य्योष्णः सुखदर्शनः॥

अस्य मूलस्वरसो ग्राह्यः, तन्मात्रा २ माषकौ।

ज्योतिष्मती।

ज्योतिष्मती स्यात्कटभी ज्योतिष्का कङ्गनीति च।
पारावतपदी पण्या लता प्रोक्ता ककुन्दनी॥
ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित्।
अत्युष्णा वामनी तीक्ष्णा वह्निवृद्धिस्मृतिप्रदा॥

अस्या मूलं ग्राह्यं, तदभावे सर्वांशो ग्रहणीयः। मात्रा १ माषकः।

शणपुष्पी।

शणपुष्पी स्मृता घण्टा शणपुष्पसमाकृतिः।
शणपुष्पी कटुस्तिक्ता वामनी कफपित्तजित्॥

अस्याः फलादिकं ग्राह्यं, मात्रा ६ रक्तयः।

देवदाली। हिन्दी सोनैया।

खखसावत् फलव्रततिः।

देवदाली तु वेणी स्यात्कर्कटी च गरा गरी।
देवताडी वृत्तकोषस्तथा जीमूत इत्यपि॥
पीतापरा खरस्पर्शा विषघ्नी गरनाशिनी॥
देवदाली रसे तिक्ता कफार्शःशोफपाण्डुताः।
नाशयेत् वामनी तिक्ता चयहिक्काक्रिमिज्वरान्॥
देवदालीफलं तिक्तं क्रिमिश्लेष्मविनाशनम्।

स्रंसनं गुल्मशूलघ्नमर्शोघ्नं वातजित्परम् ॥

अस्याः फलादिकं ग्राह्यं, मात्रा १ माषकः ।

कटुतुम्बी ।

कटुतुम्बी तिक्तबीजा राजपुत्री नृपात्मजा ।
तुम्बिनी कटुकालावुरिक्ष्वाकु कटुतिक्तका ॥
तुम्बिनी कटुकोष्णा च वान्तिकृत्कफवातनुत् ।
कासशोथव्रणश्वासविषपाण्डुक्रिमीन् हरेत् ॥

मात्रा २ माषकौ ।

काकनासा ।

काकनासा तु काकाङ्गी काकतुण्डफला च सा ॥
काकनासा कषायोष्णा कटुका रसपाकयोः ।
कफघ्नी वामनी तिक्ता शोथार्शःश्वित्रकुष्ठहृत् ॥

अस्या मूलादिक ग्राह्यं, मात्रा १ माषकः ।

---

## सप्तमोऽध्यायः ।

---

अथ विरेचनीयवर्गः ।

हरीतकी ।

हरीतक्यभया पथ्या कायस्था पूतनामृता ।
हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा ॥
वयस्था विजया चापि जीवन्ती रोहिणीति च ।

विजया रोहिणी चैव पूतना चामृताभया ॥
जीवन्ती चेतकी चेति पर्य्यायाः सप्त जातयः।
अलावुवृत्तविजया वृत्ता सा रोहिणी स्मृता ॥
पूतनास्थिमती सूक्ष्मा कथिता मांसलामृता।
पञ्चरेखाभया प्रोक्ता जीवन्ती स्वर्णवर्णिनी ॥
चेतकी चासिता क्षुद्रा सप्तानामियमाकृतिः।
विजया सर्व्वरोगेषु रोहिणी व्रणरोहिणी ॥
प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता।
अक्षिरोगेऽभया शस्ता जीवन्ती सर्व्वरोगहृत् ॥
चूर्णार्थे चेतकी शस्ता यथायुक्तं प्रयोजयेत्।
सप्तानामपि जातीनां प्रधानं विजया स्मृता ॥
सुखप्रयोगा सुलभा सर्व्वरोगेषु शस्यते।
हरीतकी पञ्चरसा लवणा तुवरा परम् ॥
रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी।
चक्षुष्या लघुरायुष्या वृंहणी चानुलोमिनी ॥
श्वासकासप्रमेहार्शःकुष्ठशोथोदरक्रिमीन्।
वैस्वर्य्यग्रहणीरोगविबन्धविषमज्वरान् ॥
गुल्माध्मानव्रणच्छर्दिं हिक्काकण्डूहृदामयान्।
कामला शूलमानाहं प्लीहानञ्च यकृत्तथा ॥
अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत्।
स्वादुतिक्तकषायत्वात् पित्तहृत् कफहृत् तु सा ॥
कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा।
पित्तकृत् कटुकाम्लत्वाद्वातकृन्न कथं शिवा ॥
पर्य्याया मज्जनि स्वादुः स्नाय्वामम्लो व्यवस्थितः।

वृन्ते तिक्तास्त्वचि कटुरस्थि तु तुवरो रसः ॥
नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता च याम्भसि ।
निमज्जेत् सा प्रशस्ता च कथितातिगुणप्रदा ॥
नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता ।
हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते ॥
चर्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी ।
छिन्ना संग्रहिणी पथ्या भृष्टा प्रोक्ता त्रिदोषनुत् ॥
उन्मीलिनी बुद्धिबलेन्द्रियाणां
निर्मूलिनी पित्तकफानिलानाम् ।
विसर्जिनी मूत्रशकृन्मलानां
हरीतकी स्यात्सह भोजनेन ॥
अन्नपानकृतान् दोषान् वातपित्तकफोद्भवान् ।
हरीतकी हरत्याशु भुक्तस्योपरि योजिता ॥
लवणेन कफं हन्ति पित्तं हन्ति सशर्करा ।
घृतेन वातजान् रोगान् सर्वरोगान् गुडान्विता ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ।
वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥
अध्वातिखिन्नो बलवर्जितश्च
रूक्षः कृशो लङ्घनकर्षितश्च ।
पित्ताधिको गर्भवती च नारी
विमुक्तरक्तस्त्वभयां न खादेत् ॥
पथ्यामज्जा तु चक्षुष्यो वातपित्तहरो गुरुः ॥
हरीतकीनां फलं ग्राह्यं, मात्रा ४ माषकाः ।
विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना

सिन्धौ स्यादथ रोहिणी तु विजया जाता प्रतिस्थानके ।
चम्पायाममृताभया च जनिता देशे सुराष्ट्राह्वये ।
जीवन्तीति हरीतकी निगदिता सा सप्तभेदा बुधैः ॥

स्वर्णपत्रिका ।

कल्याणी हेमपत्री च रेचनी स्वर्णपत्रिका ।
विट्सङ्गं वह्निमान्द्यञ्च यकृद्दाल्युदरं तथा ॥
प्लीहोदरं बद्धगुदमजीर्णं विषमज्वरम् ।
कामलां पाण्डुरोगञ्च कल्याणी नाशयेद्ध्रुवम् ॥

अस्य मात्रा २ माषकौ ।

आरग्वधः ।

आरग्वधो राजवृक्षः सम्पाकश्चतुरङ्गुलः ।
आरवेतो व्याधिघातः कृतमालः सुवर्णकः ।
कर्णिकारो दीर्घफलः स्वर्णाङ्गः स्वर्णभूषणः ॥
आरग्वधो गुरुः स्वादुः शीतलः स्रंसनो गुरुः ।
ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलनुत ॥
तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहम् ।
ज्वरे तु सतत पथ्यं कोष्ठशुद्धिकर परम् ॥

अस्य फलनिर्यासो ग्रहणीयः, मात्रा ४ माषकाः

यवासशर्करा । हिन्दी सीरखेस्ता ।

यवासशर्करा ज्ञेया वृंहणी पित्तहारिणी ।
ज्वरहृद्दीपनी शीता रेचनी सा पुरातनी ॥
नार्य्याश्चापन्नसत्त्वाया दुर्बलस्य तथा शिशोः ।
रेचनार्थं प्रयोज्येयं क्षीणस्य स्थविरस्य च ॥

अस्या मात्रा १ कर्षः ।

इन्द्रवारुणी। हिन्दी इन्द्रायण।

ऐन्द्रीन्द्रवारुणी चित्रा गवाक्षी च गवादनी।
वारुणी च पराप्युक्ता सा विशाला महाफला।
श्वेतपुष्पा मृगाक्षी च मृगैर्वारुमृगादनी॥
गवादिनीद्वयं तिक्तं पाके कटु सरं लघु।
वीर्य्योष्णं कामलापित्तकफप्लीहोदरापहम्॥
श्वासकासापह कुष्ठगुल्मग्रन्थिव्रणप्रणुत्।
प्रमेहमूढ़गर्भामगण्डामयविषापहम्॥

अस्या मूलं फलशस्यञ्च ग्राह्यं, मात्रा ५ रक्तिकाः।

श्यामबीजम्। हिन्दी कालादाना।

उक्तं श्यामलबीजञ्च श्यामबीजं सुमेचकम।
रेचन श्यामबीज स्याच्छोथोदरविनाशनम्॥
ज्वते पुरीषसङ्गे च दारुणे शिरसो गदे।
उदावर्त्ते तथानाहे बुधैरेतत् प्रयुज्यते॥

मात्रा २ माषकौ।

कटुरोहिणी।

कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा।
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी॥
मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी।
कट्वी तु कटुका पाके तिक्ता रूक्षा हिमा लघुः॥
भेदिनी दीपनी हृद्या कफपित्तज्वरापहा।
प्रमेहश्वासकासास्रदाहकुष्ठक्रिमिप्रणुत्॥

अस्या मूलं ग्राह्यं, मात्रा २ माषकौ।

कटुपर्णी चोकम्।

कटुपर्णी हैमवती हेमक्षीरी हिमावती।
हेमाह्वा पीतदुग्धा च तन्मूलञ्चोकमुच्यते॥
हेमाह्वा रेचनी तिक्ता भेदिन्युत्क्लेशकारिणी।
क्रिमिकण्डूविषानाहकफपित्तास्रकुष्ठनुत्॥

मात्रा १ माषकः।

पीतमूली। हिन्दी रेऔचिनि।

गन्धिनी पीतमूली च बल्या सा मृदुरेचनी।
हन्त्यजीर्णमतीसारं वह्निमान्द्यमरोचकम्।
विट्सङ्गं शीतपित्तञ्च दुष्टव्रणविरोहिणी॥

अस्या मूलं ग्राह्यं, मात्रा १० रत्तिकाः।

शुक्लरक्तार्कौ।

अलर्को गणरूपः स्यान्मन्दारो वसुकोऽपि च।
श्वेतपुष्पः सदापुष्पः स बालर्कः प्रतापसः॥
रक्तोऽपरोऽर्कनामा स्यादर्कपर्णो विकीरणः।
रक्तपुष्पः शुक्लफलस्तथा स्फोटः प्रकीर्त्तितः॥
अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान्।
निहन्ति प्लीहगुल्मार्शःश्लेष्मोदरशकृत्क्रिमीन्॥
अलर्ककुसुमं वृष्यं लघु दीपनपाचनम्।
अरोचकप्रसेकार्शःकासश्वासनिवारणम्॥

रक्तार्कपुष्पं मधुरं सतिक्तं
कुष्ठक्रिमिघ्नं कफनाशनञ्च।
अर्शोविषं हन्ति च रक्तपित्तं
संग्राहि गुल्मे श्वयथौ हितं तत्॥

क्षीरमर्कस्य तिक्तोष्णं स्निग्धं सलवणं लघु ।
कुष्ठगुल्मोदरहरं श्रेष्ठमेतद्विरेचनम् ॥
अर्कमूल कफोत्सारि स्वेदन वामनं तथा ।
श्वासकासप्रतीश्यायानतीसारं प्रवाहिकाम् ॥
रक्तपित्तं शीतपित्तं ग्रहणीञ्चाप्यसृग्दरम् ।
नाशयेत् कफजान् रोगान् विषं कीटसमुद्भवम् ॥

अस्य निर्य्यासस्य मात्रा १० विन्दवः, मूलत्वचो वमनार्थं २ माषकौ, वमनवेगस्वेदजननार्थं २ रक्तिके ।

सेहुण्डः । स्नुही ।

सेहुण्डः सिंहतुण्डः स्याद्वज्री वज्रद्रुमोऽपि च ।
सुधा समन्तदुग्धा च स्नुक् स्त्रियां स्यात् स्नुही गुड़ा ॥
सेहुण्डो रेचनस्तीक्ष्णो दीपनः कटुको गुरुः ।
शूलमष्ठीलिकाध्मानकफगुल्मोदरानिलान् ॥
उन्मादमोहकुष्ठार्शःशोथमेदोऽश्मपाण्डुताः ।
व्रणशोथज्वरप्लीहविषदूषीविष हरेत् ॥
उष्णवीर्य्यं स्नुहीक्षीरं स्निग्धञ्च कटुकं लघु ।
गुल्मिनां कुष्ठिनाञ्चापि तथैवोदररोगिणाम् ।
हितमेतद्विरेकार्थे ये चान्ये दीर्घरोगिणः ॥

स्नुह्या मूलत्वङ्निर्य्यासौ ग्राह्यौ, मात्रा २ माषकौ ।

सातला सेहुण्डभेदः ।

सातला अनेनैव नाम्ना प्रसिद्धा ।

सातला सप्तला सारा विमला विदुला च सा ।
तथा निगदिता भूरिफेना चर्म्मकषेत्यपि ॥
सातला कटुका पाके वातला शीतला लघुः ।

तिक्ता शोथकफानाहपित्तोदावर्त्तरक्तजित्॥

अस्य मूलनिर्य्यासो ग्राह्यो, मात्रा १ माषकः।

श्वेता त्रिवृत्।

श्वेता त्रिवृत् त्रिभण्डी स्यात् त्रिवृता त्रिपुटापि च।
सर्वानुभूतिः सरला निशोत्रा रेचनीति च॥
श्वेता त्रिवृद्रेचिनी स्यात् स्वादुरुष्णा समीरहृत्।
रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा॥

अस्या मूलत्वक् ग्राह्या, मात्रा २ माषकौ।

श्यामा त्रिवृत्।

त्रिवृत् श्यामार्द्धचन्द्रा च पालिन्दी च सुषेणिका।
मसूरविदला कालकेषिका कालमेषिका॥
श्यामा त्रिवृत् ततो हीनगुणा तीव्रविरेचनी।
मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी॥

अस्या मूलत्वग् ग्रहणीया, मात्रा १ माषकः।

लघुदन्ती।

लघुदन्ती विशल्या च स्यादुदुम्बरपर्ण्यपि।
तथैरण्डफला शीघ्रा श्येनघण्टा घुणप्रिया॥
वाराहाङ्गी च कथिता निकुम्भश्च मकूलकः।
लघुदन्तीफलन्तु स्यान्मधुरं रसपाकयोः।
शीतलं सृष्टविण्मूत्रं गरशोथकफापहम्॥

लघुदन्त्या मूलं वीजञ्च ग्राह्यं, मात्रा ६ रक्तिकाः।

वृहद्दन्ती।

एरण्डपत्रविटपा।

द्रवन्ती सा वरी चित्रा प्रत्यक्पर्ण्यर्कपर्ण्यपि।

चित्रोपचित्रा न्यग्रोधी प्रत्यक्श्रेण्याखुकर्ण्यपि ॥
जयपाले दन्तीबीजं विख्यातन्तत् तिलीफलम् ।
जयपालो गुरुः स्निग्धो रेची पित्तकफापहः ॥
अस्या बीजं ग्राह्यं, मात्रा पादरक्तिका ।
दन्तीद्वयं सरं पाके रसे च कटु दीपनम् ।
गुदाङ्कुराश्मशूलास्रकण्डूकुष्ठविदाहनुत् ।
तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन् ॥

नीली ।

नीली तु नीलिनी तूली कालदोला च नीलिका ।
रञ्जनी श्रीफली तुच्छा ग्रामीणा मधुपर्णिका ।
क्लीतका कालकेशी च नीलपुष्पा च सा स्मृता ॥
नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा ।
उष्णा हन्त्युदरप्लीहवातरक्तकफानिलान् ।
आमवातमुदावर्त्तं मदं च विषमुद्धतम् ॥

मूलमस्या ग्राह्यं तदभावे सर्वांशो ग्रहणीयः, मात्रा २ माषकौ ।

शरपुङ्खः । हिन्दी शरफाका ।

शरपुङ्खः प्लीहशत्रुर्नीलीवृक्षाकृतिश्च सः ॥
शरपुङ्खो यकृत्प्लीहगुल्मव्रणविषापहः ।
तिक्तः कषायः कासास्रश्वासज्वरहरो लघुः ॥

मात्रा २ माषकौ ।

यवासो दुरालभा च ।

यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ॥
दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी ।

गान्धारी कच्छुरानन्ता कषाया हरविग्रहा ॥
यासः स्वादुः सरस्तिक्तस्तुवरः शीतलो लघुः।
कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित्॥
तृष्णाविसर्पवातास्रवमिज्वरहरः स्मृतः।
यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा ॥

मात्र १ माषकः।

## कुमारी।

कुमारी गृहकन्या च कन्या घृतकुमारिका ॥
कुमारी भेदिनी शीता तिक्ता नेत्रया रसायनी।
मधुरा वृंहणी बल्या वृष्या वातविषप्रणुत्॥
गुल्मप्लीहयकृत्वृद्धिकफज्वरहरी हरेत्।
ग्रन्थ्यग्निदग्धविस्फोटपित्तरक्तत्वगामयान्॥

अस्या निर्य्यासो ग्राह्यः, मात्रा २ माषकौ।

## त्रायमाणा।

बलभद्रा त्रायमाणा त्रायन्ती गिरिसानुजा।
त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा।
ज्वरहृद्रोगगुल्मार्शोभ्रमशूलविषप्रणुत्॥

मात्रा २ माषकौ।

## भूमिवल्ली। हिन्दी भुइँखखसा।

मार्कण्डिका भूमिवल्ली मार्कण्डी मृदुरेचनी ॥
मार्कण्डिका कुष्ठहरी ऊर्द्धाधःकायशोधिनी।
विषदुर्गन्धकासघ्नी गुल्मोदरविनाशिनी ॥

वल्ली भूमिप्रसरणशीला, अस्या मात्रा ४ माषकाः।

कूटशाल्मलिः ।

कुत्सित शाल्मलिः प्रोक्तो रोचनः कूटशाल्मलिः ॥
कूटशाल्मलिकस्तिक्त. कटुकः कफवातनुत् ।
भेद्युष्णः प्लीहजठरयकृद्गुल्मविषापहः ।
भूतानाहविबन्धास्रमेद शूलकफापहः ॥

अस्या वीजं ग्राह्य, मात्रा १ माषकः ।

करीरः । हिन्दी उट्कटार ।

करीरः क्रकरः पत्री ग्रन्थिलो मरुभूरुहः ॥
करीरः कटुकस्तिक्तः स्वेद्युष्णो भेदनः स्मृतः ।
दुर्नामकफवातामगरशोथव्रणप्रणुत् ॥

अस्यास्त्वग् ग्राह्या, मात्रा २ माषकौ ।

---

# अष्टमोऽध्यायः ।

---

अथ संग्राहिवर्ग. ।

अहिफेनम् ।

उक्तं खसफलक्षीरमाफूकमहिफेनकम् ।
आफूक शोधनं ग्राहि श्लेष्मघ्नं वातपित्तलम् ॥
आक्षेपशमनं निद्राजननं मदकारि च ।
स्वेदन वेदनाहृच्च मूत्रातीसारनुत् परम् ॥
कासश्वासातिसारघ्नं शोणितस्रुतिवारणम् ।
तथा खसफलोद्भूतवल्कलप्रायमित्यपि ॥

मात्रा पादरक्तिका ।

खाखसः ।

तिलभेदः खसतिलः खाखसश्चापि स स्मृतः ॥
स्यात् खाखसफलोद्भूतं वल्कलं शीतलं लघु ।
ग्राहि तिक्तं कषायञ्च वातकृत् कफकासहृत् ॥
धातूनां शोषकं रूक्षं मदकृद्वाग्विवर्द्धनम् ।
मुहुर्मोहकरं रुच्यं सेवनात् पुंस्त्वनाशनम् ॥

मात्रा १० रत्तिकाः। कफघ्नत्वाच्छोषकत्वाच्चास्य क्वाथस्वेदो वेदनास्थाने परमोपकारी ।

खाखसवीजम् ।

उच्यन्ते खसवीजानि ते खाखसतिला अपि ॥
खसवीजानि बल्यानि वृष्याणि सुगुरूणि च ।
शमयन्ति कफं तानि जनयन्ति समीरणम् ॥

मात्रा १ माषकः ।

धातकी ।

धातकी धातुपुष्पी च ताम्रपुष्पी च कुञ्जरा ।
सुभिक्षा बहुपुष्पी च वह्निज्वाला च सा स्मृता ॥
धातकी कटुका शीता मदकृत् तुवरा लघुः ।
तृष्णातिसारपित्तास्रविषक्रिमिविसर्पजित् ॥

तिन्दुकफलम् ।

तिन्दुकस्य फलं ग्राहि कषायं लघु शीतलम् ।
आमल हन्त्यतीसारं पित्तमेहमसृग्दरम् ॥
सामर्गिकमिहञ्च घोररूपां प्रवाहिकाम् ।
पक्वन्तु तत्फलं वातश्लेष्मघ्नं गुरु दुर्जरम् ॥
स्निग्धं श्लेष्मकरं पित्तप्रमेहास्रविनाशनम् ।

आमाशयोत्थां हन्ति तत्सारं चिररोगजित् ॥

माचिका ।

माचिका प्रस्थिकाम्बष्ठा तथा चाम्बालिकाम्बिका ।
मयूरविदला केशी सहस्रा बालमूलिका ॥
माचिकाम्ला रसे पाके कषाया शीतला लघुः ।
पक्वातीसारपित्तास्रकफकण्ठामयापहा ॥

अस्याः सर्वांशो ग्राह्यः, मात्रा २ माषकौ ।

मज्जफलम् ।

कीटावासो मज्जफलं ग्राहि बल्यं ज्वरापहम् ।
शोणितस्रुतिहृद्धन्ति मुखदन्तगतान् गदान् ॥
श्वेतप्रदरमर्शांसि योनिकन्दं सुदारुणम् ।
अतीसारं महाघोरं ग्रहणीं सप्रवाहिकाम् ॥

मात्रा १ माषकः ।

पलाशनिर्य्यासः ।

पलाशभवनिर्य्यासो ग्राही स क्षपयेद्ध्रुवम् ।
ग्रहणीं मुखजान् व्याधीन् कासान् स्वेदातिनिर्गमम् ॥

मात्रा १ माषकः ।

सप्तपर्णः ।

सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।
मणिच्छदो गुच्छपुष्पो बृहत्त्वग् बहुपर्णकः ॥
सप्तपर्णस्त्रिदोषघ्नो वीर्य्योष्णोऽग्निप्रदीपनः ।
मदगन्धिर्व्रणहरस्तिक्तः क्रिमिविनाशनः ॥
कुष्ठं जीर्णज्वरं श्वासं गुल्मञ्च ग्रहणीं तथा ।
प्रवाहिका सरक्ताञ्च वातरक्तं विनाशयेत् ।

अस्य त्वग्ग्राह्या, मात्रा १ माषकः ।

विल्वपेशी।

विल्वपेशी लघुर्बल्या ग्राहिणी कफनाशिनी।
प्रवाहिकामतीसारं निहन्याद्ग्रहणीमपि॥

शुष्का विल्वपेशीव्यवह्रियते सदा, मात्रा २माषकौ।

इन्द्रयवम्।

उक्तं कुटजवीजन्तु यवमिन्द्रयवं तथा।
कलिङ्गञ्चापि कालिङ्गं तथा भद्रयव स्मृतम्॥
क्वचिदिन्द्रस्य नामैव भवेत्तदभिधायकम्॥
इन्द्रयवं त्रिदोषघ्नं संग्राहि कटु शीतलम्।
तिक्तं दाहहरं हन्ति रक्तपित्तं प्रवाहिकाम्॥
ज्वरातिसाररक्तार्शःक्रिमिवीसर्पकुष्ठनुत्।
दीपनं गुदकीलास्रवातास्रश्लेषशूलजित्॥

मात्रा १ माषकः।

आम्रवीजम्।

आम्रवीजं कषायं स्याच्छर्द्यतीसारनाशनम्।
ईषदम्लञ्च मधुरं तथा हृदयदाहनुत्॥

मात्रा १ माषकः।

खदिरः।

खदिरो रक्तसारश्च गायत्री दन्तधावनः।
कण्टकी बालपत्रश्च बहुशल्यश्च यज्ञियः॥
खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत्।
तिक्तः कषायो मेदोघ्नः क्रिमिमेहज्वरव्रणान्॥
श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफामयान्।
वह्निमान्द्यमतीसारं प्रदरञ्च विनाशयेत्॥

खदिरकाष्ठस्य मात्रा २ माषकौ, निर्य्यासस्य ६ रत्तिकाः।

श्वेतखदिरः।

खदिरः श्वेतसारोऽन्यः कदरः सोमवल्कलः।
कदरो विशदो वर्ण्यो मुखरोगकफास्रजित्॥

खदिरोऽयमुत्कृष्टगुणः, मात्रा चास्य ६ रत्तिकाः।

उक्तास्त्रिविधः खदिरः संग्राहको रक्तरोधकश्च, अतोऽतिसाराग्नीरक्तपित्तप्रदरक्षतादिरोगशान्त्यर्थं व्यवह्रियते।

इरिमेदः।

इरिमेदो विट्खदिरः कालस्कन्धोऽरिमेदकः॥
इरिमेदः कषायोष्णो मुखदन्तगदास्रजित्।
हन्ति कण्डूविषश्लेष्मक्रिमिकुष्ठविषव्रणान्।
शोथातिसारकासांश्च विसर्पञ्चाप्यसृग्दरम्॥

अस्य वल्कलादिकं ग्राह्यं, मात्रा १ माषकः।

लोध्रः।

लोध्रस्तिरीटकश्चैव शावरो मालवस्तथा।
द्वितीयः पट्टिका लोध्रः क्रमुकः स्थूलवल्कलः।
जीर्णपत्री बृहत्पत्रः पट्टीलाक्षाप्रसादनः॥
लोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत्।
कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत्॥

अधिकन्तु विषघ्नोऽयम्। अस्य त्वग् ग्राह्या, मात्रा १ माषकः।

प्रियङ्गुर्गन्धप्रियङ्गुश्च।

प्रियङ्गुः फलिनी कान्ता लता च महिलाह्वया।

गुन्द्रा गुन्द्रफला श्यामा विष्वक्सेनाङ्गनाप्रिया ॥
प्रियङ्गुः शीतला तिक्ता तुवरानिलपित्तहृत्।
रक्ताभियोगदौर्गन्ध्यस्वेददाहज्वरापहा ॥
वान्तिभ्रान्त्यतिसारघ्नी वक्त्रजाड्यविनाशिनी।
गुल्मतृट्विषमोहघ्नी तद्वद्गन्धप्रियङ्गुका ॥
तत्फलं मधुरं रूक्षं कषायं शीतलं गुरु।
विबन्धाध्मानबलकृत् संग्राही कफपित्तजित् ॥

अस्यास्त्वचो मात्रा १ माषकः, फलस्य ६ रक्तिकाः। फलमेवास्याः सदा व्यवह्रियते।

कुटजः। हिन्दी कोरैया।

कुटजः कूटजः कौटो वत्सको गिरिमल्लिका।
कालिङ्गः शुक्रशाखी च मल्लिकापुष्प इत्यपि।
इन्द्र यवफलः प्रोक्तो वृक्षकः पाण्डुरद्रुमः ॥
कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः।
तिक्तः संग्राहकः प्रोक्तस्त्वग्दोषज्वरनाशनः।
अर्शोऽतिसारपित्तास्रकफतृष्णामकुष्ठनुत् ॥

अस्य त्वग्बीजादिकं ग्राह्यं, त्वचो मात्रा १ माषकः। अस्यैव बीजमिन्द्रयवनाम्नाभिधीयते। तन्मात्रागुणादिकमिन्द्रयवशब्दे द्रष्टव्यम्।

पाठा।

पाठाम्बष्ठाम्बष्ठिका च प्राचीना पापचेलिका।
एकाष्ठीला रसा प्रोक्ता पाठिका वरतिक्तिका ॥
पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरी लघुः।
तिक्ता रुचिकरी चाम्ला भग्नसन्धानकारिणी ॥

हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः ।
दाहकण्डूविषश्वासक्रिमिगुल्मगरव्रणान् ॥

अस्या मूलादिकं ग्राह्यं, मात्रा १ माषक. ।

आकाशवल्ली । हिन्दी अमरवेला ।

आकाशवल्ली तु बुधैः कथिता मरवल्लरी ।
खवल्ली ग्राहिणी तिक्ता पिच्छिला ह्यामयापहा ॥
तुवराग्निकरी हृद्या पित्तश्लेष्मामनाशिनी ॥

अस्याः सर्वांशो ग्राह्यः, मात्रा ४ रक्तिकाः ।

मत्स्याक्षी । हिन्दी मछेछी ।

मत्स्याक्षी वाह्लिका मत्स्यगन्धा मत्स्यादनीति च ।
मत्स्याक्षी ग्राहिणी शीता कुष्ठपित्तकफास्रजित् ।
लघुस्तिक्ता कषाया च स्वाद्वी कटुविपाकिनी ॥

अस्याः सर्वांशो ग्राह्यं, मात्रा ६ रक्तिकाः ।

जलपिप्पली । हिन्दी पनिसगा ।

जलपिप्पल्यभिहिता शारदी शकुलादनी ।
मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि कीर्त्तिता ॥
जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः ।
संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा ।
कटुपाकरसा रुच्या कषाया वह्निवर्द्धिनी ॥

अस्याः सर्वांशो ग्राह्यं मात्रा २ माषकौ ।

वीरतरुः ।

वेल्लन्तरो जगति वीरतरुः प्रसिद्धः
श्वेतासितारुणविलोहितनीलपुष्पः ।
स्याज्जातितुल्यकुसुमः शमिसूक्ष्मपत्रः

स्यात् कण्टकी विजलदेशज एष वृक्षः ॥
वेलान्तरो रसे पाके तिक्तस्तृष्णाकफापहः ।
मूत्राघातश्मजिद्ग्राही योनिमूत्रानिलार्त्तिजित् ॥

अस्य त्वग्ग्राह्या, मात्रा १ माषकः ।

मयूरशिखा ।

मयूराख्यशिखा प्रोक्ता सहस्राहिर्मधुच्छदा ।
नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित् ॥

तस्याः सर्वांशो ग्राह्यः, मात्रा १ माषकः ।

पद्मवीजम् ।

पद्मवीजन्तु पद्माख्यं गालोड्यं पद्मकर्कटी ॥
पद्मवीजं हिमं स्वादु कषायं तिक्तकं गुरु ।
विष्टम्भि वृष्यं रूक्षञ्च गर्भसंस्थापकं परम् ।
कफवातकरं बल्यं ग्राहि पित्तास्रदाहनुत् ॥

मात्रा ८ माषकाः ।

वटः ।

वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः ।
क्षीरी वैश्रवणो वासो बहुपादो वनस्पतिः ॥
वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः ।
वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृत् ॥
स्वादुस्तृषापहो मूर्च्छामेहासृग्दरनाशनः ॥

प्लक्षः । हिन्दी पाकरी ।

प्लक्षो जटी पर्करी च पर्कटी च स्त्रियामपि ॥
प्लक्षः कषायः शिशिरो व्रणयोनिगदापहः ।
दाहपित्तकफास्रघ्नः शोथहा रक्तपित्तहृत् ।

रक्तदोषहरो मूर्च्छाप्रलापभ्रमनाशनः ॥

अस्य त्वग्ग्राह्या, मात्रा २ माषकौ।

वव्वूलः।

वव्वूलः किङ्किरातः स्यात् किङ्किराटः स पीतकः

स एव कथितस्तज्ज्ञैराभा षट्पदमोदिनी ॥

वव्वूलः कफनुद्ग्राही कुष्ठक्रिमिविषापहः ॥

अस्य निर्य्यासत्वगादिकं ग्राह्यं, मात्रा २ माषकौ।

अस्य निर्य्यासगुणाः।

वव्वूलस्य तु निर्य्यासो ग्राही पित्तानिलापहः।

रक्तातीसारपित्तास्रमेहप्रदरनाशनः।

भग्नसन्धायकः शीतः शोणितस्रुतिवारणः ॥

जिङ्गिनी। हिन्दी जिङ्गनिया।

जिङ्गिनी झिङ्गिनी झिङ्गी सुनिर्य्यासा प्रमोदिनी ॥

जिङ्गिनी मधुरा सोष्णा कषाया व्रणशोधिनी।

कटुका व्रणहृद्रोगवातातीसारहृत् कटुः ॥

अस्याः सर्वांशो ग्रहणीयः, मात्रा १ माषकः।

तूणी।

तूणी तुन्नक आपीनस्तुणिकः कच्छकस्तथा।

कुटेरकः कान्तलको नन्दिवृक्षश्च नन्दकः ॥

तुणिरक्तः कटुः पाके कषायो मधुरो लघुः।

तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तजित् ॥

अस्या त्वग् ग्राह्या, मात्रा २ माषकौ।

मोचरसः।

निर्य्यासः शाल्मलेः पिच्छा शाल्मलीवेष्टकोऽपि च।

मोचास्रावो मोचरसो मोचनिर्य्यास इत्यपि ॥
मोचास्रावो हिमो ग्राही स्निग्धो वृष्यः कषायकः ।
प्रवाहिकातिसारामकफपित्तास्रदाहनुत् ॥
अस्य मात्रा १ माषकः ।

लज्जालुः ।

लज्जालुः स्यात् शमीपत्रा समङ्गा जलकारिका ।
रक्तपादी नमस्कारी नाम्ना खदिरिकेत्यपि ॥
लज्जालुः शीतला तिक्ता कषाया कफपित्तजित् ।
रक्तपित्तमतीसारं योनिरोगान् विनाशयेत् ॥
अस्याः सर्वांशो ग्राह्यः, मात्रा २ माषकौ ।

---

# नवमोऽध्यायः ।

---

## अथ स्वेदोपगवर्गः ।

### दारुहरिद्रा ।

दार्व्वी दारुहरिद्रा च पर्ज्जन्या पर्ज्जनीति च ।
कटङ्कटेरी पीता च भवेत् सैव पचम्पचा ॥
सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च ।
पीतद्रुश्च हरिद्रुश्च पीतदारु कपीतकम् ॥
एषोष्णा कटुका तिक्ता नेत्रकर्णास्यरोगनुत् ।
मेहकण्डूविसर्पघ्नी त्वग्दोषव्रणनाशिनी ।

विषघ्नी खेदनी पित्तकफशोथविनाशिनी ॥

अस्याः काष्ठं व्यवहार्य्यं, मात्रा ६ रत्तिकाः ।

रसाञ्जनम् । हिन्दी रसवत् ।

दार्व्वीक्वाथसमं क्षीरं पादं पक्त्वा यथाघनम् ।

तदा रसाञ्जनाख्यं तत् नेत्रयोः परमं हितम् ॥

रसाञ्जनं तार्क्ष्यशैलं रसगर्भञ्च तार्क्ष्यजम् ।

रसाञ्जनं कटु श्लेष्मविषनेत्रविकारनुत् ।

उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत् ।

अस्य मात्रा २ माषकौ ।

अर्कमूलत्वक् ।

वमनोपगवर्गे लिखिता ।

मण्डूकपर्णी ।

रसायन वर्गे लिखिता ।

---

## दशमोऽध्यायः ।

---

अथ शिरोविरेचनीयवर्गः ।

छिक्कनी ।

छिक्कनी क्षवकृच्छीक्ष्णा छिक्किका घ्राणदुःखदा ॥

छिक्कनी कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत् ।

वातरक्तहरी कुष्ठक्रिमिवातकफापहा ।

शिरोविरेचनी प्रोक्ता घोरं जन्तुविकारनुत् ॥

कलञ्जः।

शिरोगदच्छित् च्यवनः कलञ्जो
वम्यो विषं विश्वविषस्य हन्ता।
कलञ्जसंवेष्टनधूमपानात्
स्याद्दन्तशुद्धिर्मुखरोगहानिः॥

गुञ्जाफलम्।

गुञ्जाफल च्यवकरं शिरोऽर्त्तिशमनं मतम्॥

महाच्यवा। हिन्दी भूतराज।

सैमी महाच्यवा ज्ञेया च्यवनी श्लेष्मवारिणी।
वीर्य्योष्णाच्चिशिरःकर्णरुग्हन्त्री नस्ययोगतः॥

जालिनीफलम्।

शिरःपाण्डुर्त्तिशमनं च्यवन जालिनीफलम्॥

---

# एकादशोऽध्यायः।

---

अथ मूत्रविरेचनीयवर्गः

स्थलपद्मम्।

पद्मचारिण्यतिचराव्यथा पद्मा च शारदा॥
पद्मानुष्णा कटुस्तिक्ता कषाया कफवातजित्।
मूत्रकृच्छ्राश्मशूलघ्नी श्वासकासविषापहा॥

अस्य त्वक्पत्रस्वरसा ग्राह्याः, त्वक्पत्रयोर्मात्रा १ माषकः, स्वरसस्य तोलकद्वयम्।

पाषाणभेदकः ।

पाषाणभेदकोऽश्मघ्नो गिरिभिद्भिन्नयाजनी ॥
अश्मभेदो हिमस्तिक्तः कषायो वस्तिशोधनः ।
भेदनो वस्तिदोषार्शोगुल्मकृच्छ्राश्महृद्रुजः ।
योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानि च ॥

अस्य मूलं ग्राह्य, मात्रा १ माषकः ।

सुरप्रियम् । हिन्दी शीतलचिनि ।

सुरप्रियं वृत्तफलं तद्वायुशमनं मतम् ।
श्लेष्मोत्सारणमाग्नेयं मूत्रवृद्धिकरं तथा ॥
औपसर्गिकमेहञ्च शुक्रमेहं सुदारुणम् ।
श्वेतप्रदरमर्शांसि कृच्छ्रञ्चापि विनाशयेत् ॥

मात्रा २ माषकौ ।

कुशद्वयम् ।

कुशः ।

कुशो दर्भस्तथा वर्हिः सूच्यग्रो यज्ञभूषणः ॥

कुशभेदः । हिन्दी डाभ ।

ततोऽन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च ॥
दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम् ।
मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रदरास्रजित् ॥

अनयोर्मूल ग्राह्यं, मात्रा २ माषकौ ।

काशः ।

काशः काशेक्षुरुद्दिष्टः स स्यादिक्षुरसस्तथा ।
इक्ष्वालिकेक्षुगन्धा च तथा पोटगलः स्मृतः ॥
काशः स्यान्मधुरस्तिक्तः स्वादुपाकी हिम. सरः ।

मूत्रकृच्छ्राश्मदाहास्त्रक्षयपित्तजरोगजित्।
वृष्यिदः शुक्रलो बल्यो रुचिकृच्छ्रामयोषहृत्॥
अस्य मूलं ग्राह्य, मात्रा ४ माषकाः।

भद्रमुञ्जः।

भद्रमुञ्जः शरो बाणस्तेजनश्चक्षुवेष्टनः॥

मुञ्जः।

मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेखलः॥
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा।
दाहतृष्णाविसर्पास्रमूत्रकृच्छ्राक्षिरोगजित्।
दोषत्रयहरं वृष्य मेखलासूपयुज्यते॥
अस्य मूलं ग्राह्यं, मात्रा २ माषकौ।

वीरणम्।

स्याद्वीरणं वीरतरु वीरञ्च बहुमूलकम्॥
वीरणम्पाचनं शीतं वान्तिहृल्लघुतिक्तकम्।
स्तम्भनं ज्वरनुद्वान्तिमदजित् कफपित्तहृत्।
तृष्णास्त्रविषवीसर्पकृच्छ्रदाहव्रणापहम्॥
अस्य सर्वांशो ग्राह्याः, मात्रा २ माषकौ।

उशीरम्।

वीरणस्य तु मूलं स्यादुशीरं नलदञ्च तत्।
अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि॥
उशीरम्पाचन शीतं स्तम्भन लघु तिक्तकम्।
मधुरं ज्वरहृद्वान्तिमदनुत् कफपित्तहृत्।
तृष्णास्त्रविषवीसर्पदाहकृच्छ्रव्रणापहम्॥
अस्य मात्रा २ माषकौ।

कृष्णेक्षुमूलम् ।

कृष्णेक्षुमूलं शीतं स्यान्मूत्रलं पित्तनाशनम् ।
वातानुलोमनं मेध्यं दाहकृच्छ्रनिकृन्तनम् ॥

गोक्षुरबीजम् ।

बीजं गोक्षुरकं शीतं मूत्रलं शोथवारणम् ।
वृष्यमायुष्करं शुक्रमेहनुत् कृच्छ्रनाशनम् ॥

वंशमूलम् ।

त्वचि सारशिका ज्ञेया मूत्रकृच्छ्रोथवारिणी ॥

उलूकम् ।

उलूकं स्थूलको दर्भः सूच्यग्रश्च खरच्छदः ।
उलपश्चोलुपस्तत् स्यान्मूत्रलं शोथसंहरम् ॥

लामज्जकम् ।

लामज्जकमुशीरवत् पीतच्छविस्तृणविशेषः ।

लामज्जकं सुनालं स्यादमृणालं लयं लघुः ।
इष्टकापथकं सेव्यं नलदश्चावदातकम् ॥
लामज्जकं हिमं तिक्तं लघु दोषत्रयास्रजित् ।
त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥

अस्य मूलं ग्राह्यं, मात्रा १ माषकः ।

नलः ।

नलः पोटगलः शून्यमध्यश्च धमनस्तथा ।
नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् ।
उष्णो हृद्वस्तियोन्यर्त्तिदाहपित्तविसर्पहृत् ॥

अस्य मूलं ग्राह्यं, मात्रा २ माषकौ ।

गुन्द्रः।

गुन्द्रः पटेरकोऽच्छः स्यात् शृङ्गवेराभमूलकः॥
गुन्द्रः कषायो मधुरः शिशिरः पित्तरक्तजित्।
स्तन्यशुक्ररजोमूत्रशोधनो मूत्रकृच्छ्रहृत्॥
अस्य मूलं ग्राह्यं, मात्रा २ माषकौ।

एरका। हिन्दी मोथी।

एरका गुन्द्रमूला च शिविर्गुन्द्रा शरीति च॥
एरका शिशिरा वृष्या चक्षुष्या वातकोपिनी।
मूत्रकृच्छ्राश्मरीदाहपित्तशोणितनाशिनी॥
अस्या मूलं गृहणीयं मात्रा २ काषकौ।

शार्दूलकन्दः।

शार्दूलकन्दः शोथघ्नो ज्ञेयोऽरण्यपलाण्डुकः।
मूत्रविरेचनः श्लेष्महरणोऽत्युग्र एव च॥
मात्रातिरेकाद्भवति वान्तिकृन्मलभेदनः।
अतिमात्रः प्रयुक्तोऽसौ विषवन्मारयेन्नरम्॥
शोथे श्वासे च कासे च मूत्रमङ्गे प्रयुज्यते।
ज्वरे दाहेऽतिसारे च गृहण्यां नापि शस्यते॥
अस्य मात्रा १ रक्तिका।

नागदमनी।

विज्ञेया नागदमनी बलामोटा विषापहा।
नागपुष्पी नागपत्रा महायोगेश्वरीति च॥
बलामोटा कटुस्तिक्ता लघु पित्तकफापहा।
मूत्रकृच्छ्रव्रणहरा क्षारा वातकफापहा॥
उदराध्मानशमनी कोष्ठशोधनकारिणी।

सर्वग्रहप्रशमनी निःशेषविषनाशिनी ॥
जय सर्वत्र कुरुते धनदा सुमतिप्रदा ॥
अस्याः पत्रं ग्राह्यं मात्रा ६ रक्तिकाः ।

पत्रषल्लक् ।

पत्रषल्लक् प्रमेहघ्नी योनिमेढ्रप्रदाहनुत् ।
मूत्रदोषप्रशमनी शीता पित्तानिलापहा ॥

श्रीवाससारः । हिन्दी गन्धविरोजा ।

श्रीवाससारः कफनुन्मूत्रलो ज्वरसंहरः ।
शोथविम्लापनो लेपात् क्रिमिहृद्वेदनापहः ॥

वरुणः ।

वरुणो वरुणः सेतुस्तिक्तशाकः कुमारकः ॥
वरुणः पित्तलो भेदी श्लेष्मकामलमारुतान् ।
निहन्ति गुल्मवातास्रक्रिमींश्चोष्णोऽग्निदीपनः ॥
कषायो मधुरस्तिक्तः कटुको रूक्षको लघुः ।
अश्मरीं मूत्रकृच्छ्रञ्च विद्रधिञ्च विनाशयेत् ॥

वटपत्री ।

वटपत्रामरा प्रोक्ता व्रणसन्धायिनी हिमा ।
मूत्रविरेचनी ज्ञेया शोणितस्रुतिवारिणी ॥
अस्याः स्वरसो ग्राह्यः, तस्य मात्रा १ कर्षः ।

पिच्छिला ।

पिच्छिला पिच्छिलफलं योनिशिश्नप्रदाहनुत् ।
विषदोषप्रमेहास्रपित्तहृद्बलपुष्टिकृत् ॥

मात्रा १ तोलकः ।

——

# द्वादशोऽध्यायः।

---

## अथ मूत्रसंग्रहणीयवर्गः।

### उडुम्बरः।

उडुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः॥
उदुम्बरो हिमो रूक्षो गुरुः पित्तकफास्रजित्।
मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपणः॥
मूर्च्छादाहास्रपित्तघ्नो मूत्रातीसारनाशनः।
कषाया शीतला वृष्या त्वगस्य व्रणनाशिनी॥

अस्य फलादिकं ग्राह्यं, मात्रा १ माषकः।

### काकोडुम्बरः। हिन्दी गुलार।

काकोडुम्बरिका फल्गुर्मलपूर्जघनेफला॥
मलपूः स्तम्भकृत् स्वाद्वी शीतला तुवरा जयेत्।
कफपित्तव्रणश्वित्रकुष्ठपाण्ड्वर्शःकामलाः॥
गुणाश्चोडुम्बरस्येव किन्तु हीनास्ततो मताः॥

मात्रा २ माषकौ।

### धवः।

धवो धटो नन्दितरुः स्थिरो गौरो धुरन्धरः॥
धवः शीतः प्रमेहार्शः पाण्डुपित्तकफापहः।
मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक्॥

अस्य त्वक्निर्य्यासौ ग्राह्यौ, मात्रा १ माषकः।

कोषातकीफलम् ।

कोषातकीफलं शीतमाध्मानापहरं मतम् ।
वातपित्तकफघ्नञ्च बहुमूत्रनिवारणम् ॥

---

# त्रयोदशोऽध्यायः ।

---

अथ आर्त्तवप्रवर्त्तकवर्गः ।

सहासारः ।

वीरास्त्रावः सहासारः कुमारीरससम्भवः ॥
सहासारोऽग्निजननः पित्तनिर्हरणो मतः ।
बलहृद्रेचनः पुष्पजननो गर्भपातनः ॥
विट्सङ्गे क्रिमिरोगे च सन्न्यासेऽपस्मृतौ तथा ।
लुप्ते रजसि नारीणां शीतपित्ते शिरोरुजि ॥
ज्वरे श्लेष्मोद्भवे प्लीह्नि मन्देऽग्नौ च प्रयुज्यते ॥
अर्शसस्तं न सेवेत नान्तर्वत्नी न पुष्पिणी ।
नचाश्मर्दरिणी नापि यकृत्कादिरोगवान् ॥
अस्य मात्रा २ रत्तिके ।

रेणुका ।

रेणुका राजपुत्री च नन्दिनी कपिला द्विजा ।
भस्मगन्धा पाण्डुपुत्री स्मृता कौन्ती हरेणुका ॥
रेणुका कटुका पाके तिक्तानुष्णा कटुर्लघुः ।

पित्तला दीपनी मेध्या पाचनी गर्भपातिनी।
बलासवातकृच्चैव हृट्‌कण्डूविषदाहनुत्॥

अस्या मात्रा ६ रत्तिका'।

लाङ्गली।

कलिहारी तु हलिनी लाङ्गली शुक्रपुष्प्यपि।
विशल्याग्निशिखानन्ता वह्निवक्त्रा च गर्भनुत्॥
कलहारी सरा कुष्ठशोफार्शोव्रणशूलजित्।
सक्षारा श्लेष्मजित् तिक्ता कटुका तुवरापि च।
तीक्ष्णोष्णा क्रिमिहृल्लघ्वी पित्तला गर्भपातिनी॥

अस्या मूलं ग्राह्यं, मात्रा ६ रत्तिकाः।

टङ्गनः।

टङ्गनो वह्निकृद्रूक्षो व्रणघ्नः कफनाशनः।
स्त्रीपुष्पजननो रूक्षो मूढ़गर्भविकर्षण'॥

मात्रा ६ रत्तिकाः।

पीवरी। हिन्दी शीलटकम्बल।

पीवरी योषिणी सा स्याद्योनिव्यापद्विनाशिनी।
रजोदोषप्रशमनी प्रदरार्शोनिवारिणी॥

मूलमस्या ग्राह्य, मात्रा १ माषकः।

स्नाविका। हिन्दी धन्वजिया।

सर्षपी पाटला रौद्री स्नाविका धन्वजापि सा।
रजःप्रवर्त्तिनी रौद्री मूढ़गर्भविकर्षिणी॥
गर्भपातानन्तरीत्थशोणितस्रुतिवारिणी।
वारयेच्छोणितोद्वान्तिं रक्तमूत्रादिकं तथा॥
श्वेतप्रदरमेकाङ्गं शुक्रमेहञ्च दारुणम्।

मात्रातिरेकाद्विषवत् क्रियां संजनयेद्ध्रुवम् ॥

मात्रा ६ रत्तिकाः ।

अरिष्टकः ।

अरिष्टकस्तु माङ्गल्यः कृष्णवर्णोऽर्थसाधनः ।
रक्तबीजः पीतफेनः फेनिलो गर्भपातनः ॥

अस्य फल ग्राह्यं, मात्रा १ माषकः ।

---

## चतुर्दशोऽध्यायः ।

---

अथ आर्त्तवसंग्राहिवर्गः ।

अशोकः ।

अशोको हेमपुष्पश्च वञ्जलस्ताम्रपल्लवः ।
कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा ॥
अशोकः शीतलस्तिक्तो ग्राही वर्ण्यः कषायकः ।
दोषापचितृषादाहकृमिशोषविषास्रजित् ॥

अस्य त्वग् ग्राह्या, मात्रा १ माषकः ।

लाक्षाः ।

लाक्षा पलङ्कषालक्तो यावो वृक्षामयी जतुः ॥
लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः ।
अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् ।
व्रणोरःक्षतवीसर्पकृमिकुष्ठगदापहा ॥
अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः ॥

मात्रा १ माषकः ।

अलक्तकः।

अलक्तको रजोरोधी रक्तपित्तक्षयापहः।
प्रदरञ्चाप्यतीसारं सरक्तं क्षपयेद्ध्रुवम्॥

कुसुम्भम्।

स्यात् कुसुम्भं वह्निशिखं वस्त्ररञ्जकमित्यपि॥
कुसुम्भं मधुरं रूच्चं वह्निकृद्रोचनं मतम्।
विण्मूत्रदोषशमन कटूष्णं गुरु पित्तलम्।
क्रिमिहृद्वातलं कृच्छ्ररक्तपित्तकफापहम्॥

मात्रा १ माषकः।

लक्ष्मणा।

पुत्त्रकाकारा रक्ताल्पविन्दुभिर्लाञ्छिता सदा।
लक्ष्मणा पुत्त्रजननी वस्तगन्धाकृतिर्भवेत्॥
दोषघ्नी मधुरा शीता वृष्या बल्या रसायनी।
कथिता पुत्त्रदावश्यं लक्ष्मणा मुनिपुङ्गवैः॥

अस्या मूलं ग्राह्यं, मात्रा २ माषकौ।

रक्तोत्पलमूलम्।

मूलं रक्तोत्पलस्य स्याद्रजोरोध्यस्रपित्तनुत्।
शीतवीर्य्यं प्रमेहघ्न वातपित्तप्रणाशनम्।

मात्रा ४ माषकाः।

तण्डुलीयकमूलम्।

तण्डुलीयकमूल स्यादुष्णं श्लेष्मविनाशनम्।
रजोरोध करं रक्तपित्तप्रदरसंहरम्॥

मात्रा २ माषकौ।

## पीतचन्दनम् ।

कालीयकन्तु कालीयं पीताभं हरिचन्दनम् ।
हरिप्रियं कालसारं तथा कालानुसार्य्यकम् ॥
कालीयकं रक्तगुणं विशेषाद्व्यङ्गनाशनम् ॥

अस्य काष्ठं ग्राह्यं, मात्रा १ माषक ।

## रक्तचन्दनम् ।

रक्तचन्दनमाख्यात रक्ताङ्गं क्षुद्रचन्दनम् ।
तिलपर्णं रक्तसारं तत् प्रवालफलं मतम् ॥
रक्तं शीतं गुरु स्वादु छर्द्दितृष्णास्रपित्तहृत् ।
तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम् ॥

मात्रा १ माषकः ।

## पत्तङ्गम् ।

पत्तङ्गं रक्तसारञ्च सुरङ्गं रञ्जनं तथा ।
पट्टरञ्जकमाख्यातं पत्तूरञ्च कुचन्दनम् ॥
पत्तङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत् ।
हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम् ॥
चन्दनानि तु सर्वाणि सदृशानि रसादिभिः ।
गन्धेन तु विशेषोऽस्ति पूर्वः श्रेष्ठतमो गुणैः ॥

मात्रा १*माषकः ।

## शाखोटः ।

शाखोटः पीतफलको भूतावासः खरच्छदः ।
शाखोटो रक्तपित्तार्शोवातश्लेष्मातिसारजित् ॥

अस्य पत्रं तत्स्वरसश्च गृह्यते, मात्रा १ माषकः

कुकुन्दरः।

कुकुन्दरः पीतपुष्पः कुक्कुरद्रुस्तु दुच्छदः॥
कुकुन्दरः कटुस्तिक्तो ज्वररक्तकफापहः।
रक्तपित्तमतीसारं दाहं घोरं निहन्ति च॥

अस्य सर्वांशो ग्राह्यः, मात्रा २ माषकौ।

जवा त्रिसन्ध्या च।

ऊर्द्ध्वपुष्पज्जवा चाथ त्रिसन्ध्या सारुणा सिता॥
जवा सग्राहिणी केश्या त्रिसन्ध्या कफवातजित्।
इन्द्रलुप्तमतीसारं प्रमेहान् विंशति हरेत्॥

मात्रा २ माषकौ।

अश्वत्थः।

बोधिद्रुः पिप्पलोऽश्वत्थश्चलपत्रो गजाशनः॥
पिप्पलो दुर्जरः शीतः पित्तश्लेष्मव्रणास्रजित्।
गुरुस्तुवरको रूक्षो वर्ण्यो योनिविशोधनः॥
अश्वत्थस्य फलं पक्वं योनिदोषहरं हिमम्।
छर्दिशोषारुचिहरं विषघ्नं रक्तपित्तनुत्॥

अस्य त्वचो मात्रा १ माषकः, पक्वफलस्य च ४ माषकाः।

नन्दीवृक्षः।

नन्दीवृक्षोऽश्वत्थभेदः प्ररोही गजपादपः।
स्थालीवृक्षः क्षयतरुः क्षीरी च स्याद्वनस्पतिः॥
नन्दीवृक्षो लघुः स्वादुस्तिक्तस्तुवर उष्णकः।
कटुपाकरसो ग्राही विषपित्तकफास्रजित्॥

अस्य त्वग् ग्राह्या, मात्रा १ माषकः।

विशल्यकरणी।

विशल्यकरणी बल्या व्रणसन्धानकारिणी।
वारयेच्छोणितस्राव रक्तातिसारमुल्वणम्॥

अस्याः पत्रं ग्राह्यं, मात्रा २ माषकौ।

शाल्मलीपुष्पम्।

शाल्मलीपुष्पशाकन्तु घृतसैन्धवसाधितम्।
प्रदरं नाशयत्येव दुःसाध्यञ्च न संशयः॥
रसे पाके च मधुरं कषायं शीतलं गुरु।
कफपित्तास्रजिद्ग्राहि वातलञ्च प्रकीर्त्तितम्॥

कञ्चटम्।

पानीयतण्डुलीयन्तु कञ्चटं समुदाहृतम्।
कञ्चटं तिक्तक रक्तपित्तानिलहर लघु॥

जलतण्डुलीयं शास्त्रे कञ्चटमिति प्रसिद्धम्।
चवराइभेदः। मात्रा २ माषकौ।

---

# पञ्चदशोऽध्यायः।

---

अथ दीपनपाचनवर्गः।

आर्द्रकम्।

अर्द्रकं शृङ्गवेरं स्यात्कटुभद्रं तथार्द्रिका।
आर्द्रिका भेदिनी गुर्वी तीक्ष्णोष्णा दीपनी मता॥

कटुका मधुरा पाके रूक्षा वातकफापहा।
ये गुणाः कथिताः शुण्ठ्यास्तेऽपि सन्त्यार्द्रकेऽखिलाः॥
भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्।
अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम्॥
कुष्ठपाण्ड्वामये कृच्छ्रे रक्तपित्ते व्रणे ज्वरे।
दाहे निदाघशरदोर्नैव पूजितमार्द्रकम्॥

अस्य मूलं ग्राह्यं, मात्रा २ माषकौ।

## गजपिप्पली।

चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली।
कपिवल्ली कोलवल्ली श्रेयसी वशिरश्च सा॥
गजकृष्णा कटुर्वातश्लेष्महृद्वह्निवर्द्धिनी।
उष्णा निहन्त्यतीसारं श्वासकण्ठामयक्रिमीन्॥

मात्रा ६ रक्तिकाः।

## चित्रकः।

चित्रकोऽनलनामा च पीठो व्यालस्तथोषणः॥
चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः।
रूक्षोष्णो ग्रहणीकुष्ठशोथार्शःक्रिमिकासनुत्॥
वातश्लेष्महरो ग्राही वातार्शःश्लेष्मपित्तहृत्।
प्रलेपाच्चित्रकत्वक् स्याद्दाहिनी व्रणकारिणी॥

अस्य मूलं ग्राह्यं, मात्रा ४ रक्तिकाः।

## यमानी।

यवानिकोग्रगन्धा च ब्रह्मदर्भाऽजमोदिका।
सैवोक्ता दीप्यका दीप्या तथा स्याद्यवसाह्वया॥
यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः।

दीपनी च तथा तिक्ता पित्तला वान्तिशूलहृत्।
वातश्लेष्मोदरानाहगुल्मप्लीहक्रिमिप्रणुत्॥

मात्रा २ माषकौ।

अजमोजा।

अजमोदा खराश्वा च मयूरो दीप्यकस्तथा।
तथा ब्रह्मकुशा प्रोक्ता कारवी च समस्तका॥
अजमोदा कटुस्तीक्ष्णा दीपनी कफवातनुत्।
उष्णा विदाहिनी हृद्या वृष्या बलकरी लघुः।
नेत्रामयकफच्छर्दिहिक्कावस्तिरुजो हरेत्॥

वीजमस्या गृह्यते, मात्रा २ माषकौ।

पारसीकयमानी।

पारसीकयमानी तु यमानीसदृशी गुणैः।
विशेषात् पाचनी रुच्या ग्राहिणी मादिनी गुरु.॥

मात्रा २ माषकौ।

शतपुष्पा मिश्रेया च।

शतपुष्पा शताह्वा च मधुरा कारवी मिसिः।
अतिलम्बी सितच्छत्रा संहिता छत्रिकापि च॥
छत्रा शालेयशालीनौ मिश्रेया मधुरा मिसिः।
शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः॥
उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत्।
मिश्रेया तद्गुणा प्रोक्ता विशेषाद्योनिशूलनुत्॥
अग्निमान्द्यहरी हृद्या बद्धविट्क्रिमिशूलहृत्।
रूक्षोष्णा पाचनी कासवमिश्लेष्मानिलान् हरेत्॥

अनयोर्मात्रा माषकौ।

हिङ्गु।

सहस्रवेधि जतुकं वाह्लीकं हिङ्गु रामठम्।
हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासहृत्॥
शूलगुल्मोदरानाहक्रिमिघ्नं पित्तवर्द्धनम्।
स्त्रीपुष्पजननं बल्यं मूर्च्छापस्मारहृत्परम्॥
मात्रा ४ रक्तिकाः।

हवुषाद्वयम्।

तन्मध्ये प्रथमं फलं मत्स्यसदृशं विस्रगन्धम्।
द्वितीयमश्वत्थफलसदृशं मत्स्यगन्धं तयोर्नामानि गुणाश्च।
हवुषा वपुषा विस्रा पराश्वत्थफला मता।
मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वाङ्क्षनाशिनी॥
हवुषा दीपनी तिक्ता मृदूष्णा तुवरा गुरुः।
पित्तोदरसमीरार्शोग्रहणीगुल्मशूलहृत्॥
पराप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि।
हवुषाया अलाभे तु चविका तत्र युज्यते॥
सदा हवुषानाम्ना यद्विक्रियते तत्र हवुषा, तत्तु सुर-
प्रियं मरिचद्वन्तं वा।

तेजवती। तेजवल्फल् इति च।

तेजस्विनी तेजवती तेजोह्वा तेजनी तथा॥
तेजस्विनी कफश्वासकासास्यामयवातहृत्।
पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी॥
मात्रा १ माषकः।

वालम्।

वालं क्रीवेरबर्हिष्ठोदीच्यङ्केश्याम्बुनाम च॥

बालकं शीतलं रूक्षं लघुदीपनपाचनम् ।
हृल्लासारुचिविसर्पहृद्रोगामातिसारजित् ॥
मात्रा १ माषकः ।

हिङ्गुपत्री ।

हिङ्गुपत्री तु कवरी पृथ्विका पृथुका पृथुः ॥
हिङ्गुपत्री भवेद्धृद्या तीक्ष्णोष्णा पाचनी कटु ।
हृद्वस्तिरुग्विबन्धार्शःश्लेष्मगुल्मानिलापहा ।
मात्रा २ माषकौ ।

वंशपत्री ।

वंशपत्री वेणुपत्री पिण्डा हिङ्गुशिवाटिका ।
हिङ्गुपत्रीगुणा विज्ञैर्वंशपत्री च कीर्त्तिता ॥

चाङ्गेरी ।

चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ।
अश्मन्तकस्तु शफरी पिमली चाम्लपत्रकः ॥
चाङ्गेरी दीपनी रुच्या रूक्षोष्णा कफवातनुत् ।
पित्तलाम्ला ग्रहण्यर्शःकुष्ठातीसारनाशिनी ॥
मात्रा ४ माषकाः ।

रोचनी ।

रोचनी वह्निजननी वक्त्रजाड्यनिसूदनी ।
कफवातहरी बल्या छर्द्यरोचकवारिणी ॥
मात्रा २ माषकौ ।

# षोड़शोऽध्यायः।

---

## अथ समुत्तेजनीयवर्गः।

### कुपीलुः।

सतिन्दुकश्च कथितो जलदो दीर्घपत्रकः।
कुपीलुः कुलकः कालस्तिन्दुकः कालपीलुकः।
काकेन्दुर्विषतिन्दुश्च तथा मर्कटतिन्दुकः।
कुपीलु शीतलं तिक्तं वातलं मदकृल्लघु॥
परं व्यथाहरं ग्राहि कफपित्तास्रनाशनम्।
मूत्रप्रवर्त्तनं वल्यं वह्निकृत् कामदीपनम्॥
शूलमैकाङ्गरोगञ्च शुक्रमेहमपस्मृतिम्।
ग्रहणीमतिसारञ्च गुदभ्रंशं मदात्ययम्।
सर्वाङ्गकम्पं दौर्बल्यं न चिरेण विनाशयेत्॥

अस्य वीजं ग्राह्यं, मात्रा २ रक्तिके।

### भङ्गा

भङ्गा पत्रा मातुलानी मादिनी विजया जया।
भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः॥
तीक्ष्णोष्णा पित्तला मोहमदवाग्वह्निवर्द्धिनी।
मदनोद्दीपनी निद्राजननी हर्षदायिनी॥
धनुस्तम्भं जलत्रासं विसूचीञ्च मदात्ययम्।
प्रवृत्तिं रजसो बह्वीं हन्त्यपत्यप्रसूतिकृत्।

मात्रा ४ रक्तिका.।

### संविदामञ्जरी। हिन्दी गञ्जा।

संविदामञ्जरी चोग्रा मादिनी हर्षिणी तथा।
आग्नेयी हर्षिणी वल्या मन्मथोद्दीपनी च सा॥
निद्राप्रजननी गर्भपातिनी च विकाशिनी।
वेदनाक्षेपहरणी ज्ञेया च मदकारिणी॥
श्वसृगालादिदष्टोत्थं तोयातङ्कं निवारयेत्।
बाह्याभ्यन्तरामयौ विसूचीमपि दारुणाम्॥
मदात्ययं महाघोरं शूलञ्चैवाम्लपित्तकम्।
अग्निमान्द्यं हरेच्चापि रजोऽस्रमतिसंस्रुतम्॥
ज्ञेयश्च संविदासारो हर्षिणीसदृशो गुणैः।
तथाच हर्षिणीस्थाने योजयेदेनमेव च॥
अस्याः मात्रमात्राद्धरक्तिका।

### धुस्तूरः।

धुस्तूरधूर्त्तधुस्तूरा उन्मत्तः कनकाह्वयः।
देवता कितवस्तूरी महामोही शिवप्रियः।
मातुली मदनश्चास्य फले मातुलपुत्रकः॥
धुस्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत्।
कषायो मधुरस्तिक्तो यूकालिक्षाविनाशकः॥
उष्णो गुरुर्व्रणश्लेष्मकण्डूक्रिमिविषापहः।
वेदनाहरणो निद्राजननो मूत्रवर्द्धनः॥
समन्ततः प्रलेपेन नेत्रतारापसारणः।
धुस्तूरधूमपानेन श्वासस्तूर्णं प्रशाम्यति॥
अस्य मूलपत्रादिकं ग्राह्यं, मात्रा १ रक्तिका।

बोलम्।

बोलं गन्धरसः प्राणपिण्डगोपरसाः समाः॥
बोलं रक्तहरं शीतं मेध्यं दीपनपाचनः।
मधुरं कटुतिक्तञ्च ग्रहस्वेदत्रिदोषजित्।
ज्वरापस्मारकुष्ठघ्नो गर्भाशयविशुद्धकृत्॥

मात्रा १ माषकः।

शाखिमूलः।

शाखिमूलो मलयभूरब्धिवृक्षोऽपि स स्मृत.।
बल्यो वातबलासघ्नो ज्वरहृच्छीतवारणः॥

अस्य मूलत्वक् ग्राह्या, मात्रा १ माषकः।

धूनराजः। हिन्दी रुमिमस्तुकी।

धूनराजः पीतरसो भङ्गुरा गन्धिनी स्त्रियाम्॥
मूत्रलो धूनराजः स्याद्ग्राहकः कफनाशकः।
दन्तरोगहरो बल्यो मेहासृग्दरशातनः॥

मात्रा २ माषकौ।

म्लेच्छफलम्। हिन्दी काशोया।

क्लीवे म्लेच्छफलं प्रोक्तमतन्त्री च स्त्रिया मता।
अतन्त्री कफनुद्बल्या निद्रातन्द्राविघातिनी॥
स्नायुनां बलदा प्रोक्ता श्वासकासज्वरामयान्।
अर्द्धावभेदकं जाड्यमतीसारञ्च नाशयेत्॥

अस्य फाण्टः सैव्यश्चूर्णमपि व्यवह्रियते।

कटुवीरा। हिन्दी लङ्कामिरिच।

कटुवीरोज्ज्वला तीक्ष्णा तीव्रशक्त्यजडे तथा।
कटुवीराग्निजननी बलामघ्नी च दाहिनी॥

हृल्यजीर्णं विसूचीञ्च व्रणं क्लीवं सुदारुणम् ।
तन्द्रां मोहं प्रलापञ्च स्वरभेदमरोचकम् ॥
नरं लुप्तधरं चीणं सन्निपातनिपीडितम् ।
नष्टेन्द्रियगणं तीक्ष्णा मृत्योराकृष्य जीवयेत् ॥
अस्याः फलं ग्राह्यं, मात्रा १ रक्तिका ।

---

## सप्तदशोऽध्यायः ।

---

अथ गन्धवर्गः ।

कस्तूरी ।

मृगनाभिर्मृगमदः कथितस्तु सहस्रभि ।
कस्तूरिका च कस्तूरी वेधमुख्या च सा स्मृता ॥
कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् ।
काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा स्मृता ॥
कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् ।
काश्मीरदेशसम्भूता कस्तूरी ह्यधमा मता ॥
कस्तूरिका कटुस्तिक्ता चारोष्णा शुक्रला गुरुः ।
कफवातविषच्छर्दिशीतदौर्गन्ध्यशोषहृत् ॥
आक्षेपहरणः स्वेदजननः कामदीपनः ।
हिक्काघ्नो मूत्रलो बल्यः किञ्चिन्मदकरः स्मृतः ॥
मात्रा २ रक्तिके ।

कर्पूरम् ।

पुंसि क्लीबे च कर्पूरः सिताभ्रो हिमवालुकः ।
घनसारश्चन्द्रसंज्ञो हिमनामापि स स्मृतः ॥
कर्पूरं शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः ।
सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः ॥
दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशकः ।
आक्षेपशमनो निद्राजननो घर्म्मवर्द्धनः ।
वेदनाहारकः कामशान्तिकृच्छुक्रमेहहृत् ॥
कर्पूरो द्विविधः प्रोक्तः पक्वापक्वप्रभेदतः ।
पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम् ॥
मात्रा ४ रक्तिकाः ।

चीनकर्पूरम् ।

चीनाकसंज्ञः कर्पूरः कफक्षयकरः स्मृतः ।
कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः ॥

कुङ्कुमम् ।

कुङ्कुमं घुसृणं रक्तं काश्मीरं पीतकं वरम् ।
सङ्कोचं पिशुनं धीरं वाह्लीकं शोणिताभिधम् ॥
काश्मीरदेशजे क्षेत्रे कुङ्कुमं यद्भवेद्धि तत् ।
सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम् ॥
वाह्लीकदेशसञ्जातं कुङ्कुमं पाण्डुरस्मृतम् ।
केतकीगन्धयुक्तं तन्मध्यमं सूक्ष्मकेशरम् ॥
कुङ्कुमम्पारसीकं यन्मधुगन्धि तदीरितम् ।
ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम् ॥
कुङ्कुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित् ।

तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम् ॥

मात्रा ६ रक्तिकाः ।

चन्दनम् ।

श्रीखण्डं चन्दनं न स्त्री भद्रश्रीस्तैलपर्णिकः ।
गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः ॥
स्वादे तिक्तं कषे पीतं छेदे रक्तं ततो सितम् ।
ग्रन्थिकोठरसंयुक्तं चन्दनं श्रेष्ठमुच्यते ॥
चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु ।
श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहनुत् ॥

अस्य काष्ठं ग्राह्यं, मात्रा ६ रक्तिकाः ।

अगुरु ।

अगुरु प्रवरं लोहं राजार्हं योगजं तथा ।
वंशिकं क्रिमिजं वापि क्रिमिजग्धमनार्य्यकम् ॥
अगुरूष्णं कटु त्वच्यं तिक्तं तीक्ष्णञ्च पित्तलम् ।
लघु कर्णाक्षिरोगघ्नं शीतवातकफप्रणुत् ॥
कृष्णं गुणाधिकं तत्तु लोहवद्वारि मज्जति ।
अगुरुप्रभवः स्नेहः कृष्णागुरुसमः स्मृतः ॥

अस्य काष्ठं ग्राह्यं, मात्रा ६ रक्तिकाः ।

श्रीवासः ।

श्रीवासः सरलः स्राव श्रीवेष्टो वृक्षधूपक ॥
श्रीवासो मधुरस्तिक्तः स्निग्धोष्णस्तुवरः सर ।
पित्तलो वातमूर्द्धाक्षिस्वररोगकफापहः ॥
रक्षोघ्नः स्वेददौर्गन्ध्यक्रिमिकण्डूव्रणप्रणुत् ।
स्वेदनश्च कफोत्सारी शोणितस्रुतिवारणः ॥

आक्षेपहरणी मूत्रजननी ज्वरनाशनः।
वेदनाशमनी बल्य आमवातप्रशान्तिकृत्॥

मात्रा १ माषक।

स्थूलैला।

एला स्थूला च बहुला पृथ्वीका त्रिपुटापि च।
भद्रैला बृहदेला च चन्द्रबाला च निष्कुटिः॥
स्थूलैला कटुका पाके रसे चानलकृल्लघुः।
रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा।
हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत्॥

अस्या वीजं ग्राह्यं, मात्रा १ माषकः।

सूक्ष्मैला।

सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी द्राविडी त्रुटिः॥
एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रहृत्।
रसे तु कटुका शीता लघ्वी वातहरी मता॥

अस्या वीज ग्रहणीयं, मात्रा १ माषकः।

त्वक्पत्रम्। हिन्दी तज्।

त्वक्पत्रञ्च वराङ्गं स्याद्भृङ्गं चोदस्तथोत्कटम्॥
त्वच लघूष्णं कटुक स्वादु तिक्तञ्च रूक्षकम्।
पित्तलं कफवातघ्नं कण्डूामारुचिनाशनम।
हृद्वस्तिरोगवातार्शःक्रिमिपीनसशुक्रहृत्॥

त्वक्।

त्वक् स्वाद्वी तु गुडत्वक् स्यात्तथा दारुसिता मता॥
उक्ता दारुसिता स्वाद्वी तिक्ता चानिलपित्तहृत्।
सुरभि शुक्रला वर्ण्या मुखशोषतृषापहा॥

### जातीफलम्।

जातीफलं जातिकोषं मालतीफलमित्यपि॥
जातीफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु।
कटुकं दीपनं ग्राहि स्वर्य्यं श्लेष्मानिलापहम्॥
निहन्ति मुखवैरस्य मलदौर्गन्ध्यकृष्णताः।
क्रिमिकासवमिश्वासशोषपीनसहृद्रुजः॥

### लवङ्गम्।

लवङ्गं देवकुसुमं श्रीसञ्ज्ञं श्रीप्रसूनकम्।
लवङ्गं कटुकं तिक्तं लघु नेत्रहितं हिमम्।
दीपनं पाचनं रूच्यं कफपित्तास्रनाशकृत्॥
तृष्णां छर्दिं तथाध्मानं शूलमाशु विनाशयेत्।
कासं श्वासञ्च हिक्काञ्च क्षयं क्षपयति ध्रुवम्॥

मात्रा १ माषकः।

### जटामांसी।

जटामांसी भूतजटा जटिला च तपस्विनी॥
मांसी तिक्ता कषाया च मेध्या कान्तिबलप्रदा।
स्वाद्वी हिमा त्रिदोषास्रदाहापस्मारकुष्ठनुत्।
लेपनाद्रूक्षता हन्ति ज्वरं चर्मोद्भवं गदम्॥

अस्या मूलं ग्रहणीयं, मात्रा ६ रक्तिकाः।

### मुरामांसी।

मुरा गन्धकटी दैत्या सुरभिः शालपर्णिका॥
मुरा तिक्ता हिमा स्वाद्वी लघ्वी पित्तानिलापहा।
ज्वरासृग्भूतरक्षोघ्नी कुष्ठकासविनाशिनी॥

मात्रा ६ रक्तिकाः।

## कर्चूर।

कर्चूरो वेधमुख्यश्च द्राविड कल्पक शठी॥
कर्चूरो दीपनो रुच्यः कटुकस्तिक्त एव च।
सुगन्धिः कटुपाकः स्यात् कुष्ठार्शोव्रणकासनुत्॥
उष्णो लघुः हरेच्छ्वास गुल्मवातकफक्रिमीन्।
गलगण्ड गण्डमालामपचीं मुखजाड्यहृत्॥

अस्या मूल ग्राह्य, मात्रा ६ रत्तिकाः।

## पलाशीशठी।

गन्धपलाशी सुगन्धद्रव्यमिदं
काश्मीरे प्रसिद्धम्।

शटीपलाशी षड्ग्रन्था सुव्रता गन्धमूलिका।
गन्धारिका गन्धवधूर्वधू पृथुपलाशिका॥
भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघु।
तिक्ता तीक्ष्णा च कटुकानुष्णास्यमलनाशिनी।
शोथकासव्रणश्वासशूलहिक्काग्रहापहा॥

अस्या मूलं ग्रहणीयं, मात्रा ६ रत्तिकाः।

## जातीपत्री।

जातीफलस्य त्वक् प्रोक्ता जातीपत्री भिषग्वरैः॥
जातिपत्री लघुः स्वादु कटूष्णा रुचिवर्णकृत्।
कफकासवमिश्वासतृष्णाक्रिमिविषापहा।
वक्तवैशद्यजननी तिक्ता दोर्गन्ध्यहारिणी॥

मात्रा ४ रत्तिकाः।

## कङ्कोलम्।

कङ्कोल कोलक प्रोक्त तथा कोषफलं स्मृतम्॥

कक्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदम्।
आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्यहृत्॥

मात्रा ६ रक्तिकाः।

गन्धकोकिला गन्धमालती च।

स्निग्धोष्णा कफहृत् तिक्ता सुगन्धा गन्धकोकिला।
गन्धकोकिलया तुल्या विज्ञेया गन्धमालती॥

मात्रा ४ रक्तिकाः।

पत्रकम्।

पत्रन्तमालपत्रञ्च तथा स्यात् पत्रनामकम्।
पत्रकं मधुरं किञ्चित्तीक्ष्णोष्णं पिच्छिलं लघु।
निहन्ति कफवातार्शोहृल्लासारुचिपीनसान्॥

मात्रा १ माषकः।

लताकस्तूरिका।

लताकस्तूरिका तिक्ता स्वाद्वी वृष्या हिमा लघुः।
चक्षुष्या छेदिनी श्लेष्मतृष्णावस्त्यास्यरोगहृत्॥

अस्या वीजं ग्राह्यं, मात्रा ६ रक्तिकाः।

खट्टाशी।

गन्धमार्जारवीर्य्यन्तु वीर्य्यकृत् कफवातहृत्।
कण्डूकुष्ठहरं नेत्र्यं सुगन्धं स्वेदगन्धनुत्॥

अस्या अभ्यन्तरस्थो रेणुर्मृगनाभेरभावे तु प्रयुज्यते।
मात्रा ४ रक्तिकाः।

शल्लकीनिर्य्यासः। हिन्दी कुन्दुरखोटी।

कुन्दुरुस्तु सुकुन्दः स्यात् सुगन्धः कुन्द इत्यपि॥
कुन्दुरुर्मधुरस्तिक्तस्तीक्ष्णस्त्वच्यः कटुर्हरेत्।

ज्वरश्वेदग्रहालक्ष्मीमुखरोगकफानिलान् ।
दाहप्रदरपित्तार्त्तीर्लिपनाच्छैत्यदः स्मृतः ॥
मात्रा ६ रत्तिकाः ।

## देवदारु ।

देवदारु स्मृतं दारु भद्रदार्विन्द्रदारु च ।
मस्तदारु द्रुकिलिमं किलिमं सुरभूरुहः ॥
देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकि च ।
विबन्धाध्मानशोथामतन्द्राहिक्काज्वरास्रजित् ।
प्रमेहपीनसश्लेष्मकासकण्डूसमीरनुत् ॥
अस्य काष्ठं ग्राह्यं, मात्रा ६ रत्तिकाः ।

## तुम्बुरुफलम् ।

तुम्बुरु सौरभः सौरो वनजः सानुजोऽन्धकः ॥
तुम्बुरु प्रथितं तिक्तं कटु, पाकेऽपि तत्कटु ।
रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च ॥
वातश्लेष्माक्षिकर्णौष्ठशिरोरुग्गुरुताक्रिमीन् ।
कुष्ठशूलारुचिश्वासप्लीहकृच्छ्राणि नाशयेत् ॥
अस्य बीजं ग्राह्यं, मात्रा १ माषक. ।

## नखम् ।

नखं व्याघ्रनखं व्याघ्रायुधन्तच्चक्रकारकम् ।
नखं स्वल्पं नखी प्रोक्ता हनुर्हट्टविलासिनी ॥
नखद्वयं ग्रहश्लेष्मवातास्रज्वरकुष्ठहृत् ।
लघूष्णं शुक्रलं वर्ण्यं स्वादुव्रणविशापहम् ।
अलक्ष्मीमुखदौर्गन्ध्यहृत् पाकरसयोः कटुः ॥

मात्रा २ रक्तिके। अस्याभ्यन्तरिकः प्रयोगोऽति-विरलः।

मुस्तकं नागरमुस्तकञ्च।

मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकम्।
कुरुविन्दश्च संख्यातोऽपरः क्रोडकसेरुकः॥
भद्रमुस्तश्च गुन्द्रा च तथा नागरमुस्तकः॥
मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम्।
कषायं कफपित्तासृग्ज्वरातिसारजन्तुहृत्॥
आनूपदेशे यज्जात मुस्तकं तत् प्रशस्यते।
तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम्॥

अस्य मूलं ग्राह्यं, मात्रा १ माषक।

मेथिका वनमेथिका च।

मेथिका मेथिनी मेथी दीपनी बहुपत्रिका।
बोधिनी बहुबीजा च जातिर्गन्धफला तथा॥
वल्लरी च काममन्या मिश्रपुष्पा च कैरवी।
कुञ्चिका बहुपर्णी च पित्तजित् वायुनुत् द्विधा॥
मेथिका वातशमनी श्लेष्मघ्नी ज्वरनाशिनी।
रुचिप्रदा दीपनी च रक्तपित्तप्रकोपिनी॥
ततः स्वल्पगुणा वन्या वाजिनां सा तु पूजिता॥

अनयोर्वीजं ग्राह्यं, मात्रा २ माषकौ।

शुक्लजीरः कृष्णजीरः कालाजाजी च।

जीरको जरणोऽजाजी कणा स्याद्दीर्घजीरकः।
कृष्णजीरः सुगन्धश्च तथैवोद्गारशोधनः॥
कालाजाजी तु सुषवी कालिका चोपकालिका।

पृथ्वीका कारवी पृथ्वी पृथुकृष्णोपकुञ्चिका।
उपकुञ्ची च कुञ्ची च बृहज्जीरक इत्यपि॥
जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु।
संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत्॥
ज्वरघ्नं पाचनं वृष्यं बल्यं रुच्यं कफापहम्।
चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृत्॥
अस्य बीजं ग्राह्यं, मात्रा २ माषकौ।

## सिह्लकः।

सिह्लकस्तु तुरुष्कः स्याज्जातो यवनदेशतः।
कपितैलञ्च संख्यातस्तथा च कपिनामकः॥
सिह्लकः कटुकः स्वादुः स्निग्धोष्णः शुक्रकान्तिकृत्।
वृष्यः कण्ठ्यः स्वेदकुष्ठज्वरदाहग्रहापहः।
मूत्रघाताश्मरीमूत्रकृच्छ्रकण्डूविनाशनः॥
निर्य्यासस्यास्य मात्रा ४ रक्तिकाः।

## शैलेयकम्।

शैलेयन्तु शिलापुष्पं वृद्धं कालानुसार्य्यकम्॥
शैलेयं शीतलं हृद्यं कफपित्तहरं लघु।
कण्डूकुष्ठाश्मरीदाहविषहृन्नुदरक्तहृत्॥

## सरलः।

सरलः पीतवृक्षः स्यात्तथा सुरभिदारुकः॥
सरलो मधुरस्तिक्तो कटुपाकरसो लघुः।
स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृतः।
कफानिलस्वेददाहकासमूर्च्छाव्रणापहः॥

नागकेशरः ।

नागपुष्पः स्मृतो नागः केशरो नागकेशरः ।
चाम्पेयो नागकिञ्जल्कः कथितः काञ्चनाह्वयः ॥
नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम् ।
ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनम् ।
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥

ग्रन्थिपर्णम् ।

ग्रन्थिपर्णं ग्रन्थिकञ्च काकपुच्छञ्च गुच्छकम् ।
नीलपुष्पं सुगन्धञ्च कथितं तैलपर्णकम् ॥
ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनं लघु ।
कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम् ॥

स्थौणेयकम् ।

द्रव्यमिदं ग्रन्थिपर्णस्यैव भेद ईषत्सुगन्धञ्च
थुनेर इति लोके प्रसिद्धम् ।

स्थौणेयकं वर्हिवर्हं शुकवर्हञ्च कुक्कुरम् ।
शीर्णरोम शुकञ्चापि शुकपुष्पं शुकच्छदम् ॥
स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषनुत् ।
मेधाशुक्रकरं रुच्यं रक्षोघ्नं ज्वरजन्तुजित् ।
हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकालकान् ॥

कितवः ।

ग्रन्थिपर्णस्यैव भेदः, भटेउर इति
नेपालदेशे भवति ।

निशाचरो धनहरः कितवो गण्डहासकः ।
रोचको मधुरस्तिक्तः कटुः पाके कटुर्लघुः ॥

तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकण्डूकफानिलान्
रक्षोश्रीस्वेदमोदोऽस्रज्वरगन्धविषव्रणान् ॥

पर्पटी ।

पर्पटी इति पद्मावती इति
च प्रसिद्धम् उत्तरदेशे सुगन्धि द्रव्यम् ।

पर्पटी रञ्जना कृष्णा जतुका जननी जनी ।
जतुकृष्णाग्निसंस्पर्शा जतुकृच्चक्रवर्त्तिनी ॥
पर्पटी तुवरा तिक्ता शिशिरा वर्णकृल्लघुः ।
विषव्रणहरी कण्डूकफपित्तास्रकुष्ठनुत् ॥

नलिका ।

नलिका उत्तरपथे प्रसिद्धा, सुगन्धा प्रवाला-
कृतिर्यवानी इति च क्वचित् प्रसिद्धा ।

नलिका विद्रुमलता कपोतचरणा नटी ।
धमन्यञ्जनकेशी च निर्मथ्या सुषिरा नली ॥
नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् ।
कृच्छ्राश्मवाततृष्णास्रकुष्ठकण्डूज्वरापहा ॥

प्रपौण्डरीकम् ।

प्रपौण्डरीकं सुगन्धद्रव्यं, पुण्डेरी इति
लोके प्रसिद्धम् ।

प्रपौण्डरीकं पौण्डर्य्यं चक्षुष्यं पौण्डरीयकम् ॥
पौण्डर्य्यं मधुरं तिक्तं कषायं शुक्रलं हिमम् ।
चक्षुष्यं मधुरं पाके वर्ण्यं पित्तकफप्रणुत् ॥

स्पृक्का ।

स्पृक्का सुगन्धि द्रव्यं, शाकभेदो लङ्कोदक-
पुरीति लोके प्रसिद्धा ।

स्पृक्कासृक् ब्राह्मणी देवी मरुन्माला लता लघुः ।
समुद्रान्ता वधूः कोटिवर्षा लङ्कायिकेत्यपि ॥
स्पृक्का स्वाद्वी हिमा वृष्या तिक्ता निखिलदोषनुत् ।
कुष्ठकण्डूविषस्वेददाहास्रज्वररक्तहृत् ॥

---

# अष्टादशोऽध्यायः ।

---

ज्वरघ्नवर्गः ।

निम्बः ।

निम्बः स्यात् पिचुमर्दश्च पिचुमन्दश्च तिक्तकः ।
अरिष्टः पारिभद्रश्च हिङ्गुनिर्य्यास इत्यपि ॥
निम्बः रूक्षः कटुर्भेदी कटुपाकोऽग्निवातनुत् ।
अहृद्यः श्रमतृट्कासज्वरारुचिक्रिमिप्रणुत् ।
व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ॥
निम्बपत्रं स्मृतं नेत्र्यं क्रिमिपित्तविषप्रणुत् ।
वातलं कटुपाकञ्च सर्वारोचककुष्ठनुत् ॥
निम्बफलं रसे तिक्तं पाके तु कटु भेदनम् ।
स्निग्धं लघूष्णं कुष्ठघ्नं गुल्मार्शःक्रिमिमेहनुत् ॥

अस्य त्वगादिकं ग्राह्यं, मात्रा १ माषकः ।

किराततिक्तः ।

किराततिक्तः कैरातः कटुतिक्तः किरातकः ।
काण्डतिक्तो नार्य्यतिक्तो भूनिम्बो रामसेनकः ॥
किराततकोऽन्यो नैपालः सोऽर्द्धतिक्तो ज्वरान्तकः ॥
किरातः सारको रूक्षः शीतलस्तिक्तको लघुः ।
सन्निपातज्वरश्वासकफपित्तास्रदाहनुत् ।
कासशोथतृषाकुष्ठज्वरव्रणक्रिमिप्रणुत् ॥
मात्रा १ माषकः ।

गुडूची ।

गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी ।
छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥
जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली ।
चक्रलक्षणिका धीरा विशल्या च रसायनी ।
चन्द्रहासा वयस्था च मण्डली देवनिर्मिता ॥
गुडूची कटुका तिक्ता स्वादुपाका रसायनी ।
संग्राहिणी कषायोष्णा लघ्वी बल्याग्निदीपनी ॥
दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम् ।
कामलाकुष्ठवातास्रज्वरक्रिमिवमीन् हरेत् ।
प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत् ॥
मात्रा २ माषकौ ।

अतिविषा ।

विषा त्वतिविषा विश्वा शृङ्गी प्रतिविषारुणा ।
शुक्लकन्दा चोपविषा भङ्गुरा घुणवल्लभा ॥
विषा सोष्णा कटुस्तिक्ता पाचनी दीपनी हरेत् ।

जीर्णज्वरातिसारामपित्तकासकफक्रिमीन् ॥

अस्या मूलं ग्राह्यं, मात्रा १ माषकः ।

रोहितकः ।

रोहीतको रोहितको रोही दाडिमपुष्पकः ॥
रोहीतकः प्लीहघाती रुच्यो रक्तप्रसादनः ।
कषायः शीतलः स्निग्धो यकृद्गुल्महरो मतः ।
नेत्ररोगप्रशमनः क्रिमिघ्नो व्रणनाशनः ॥

अस्य मूलत्वग्गृहणीया, मात्रा १ माषकः ।

श्वेतपुष्पा नीलपुष्पा च अपराजिता ।

आस्फोता गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता ॥
अपराजिते कटू मेध्ये शीते कण्ठ्य सुदृष्टिदे ।
कुष्ठशूलत्रिदोषामशोथव्रणविषापहे ।
कषाये कटुके पाके तिक्ते च स्मृतिबुद्धिदे ॥

अनयोर्मूलं ग्रहणीयं, मात्रा ४ रक्तिकाः ।

सिन्धुवारः ।

सिन्धुवारः श्वेतपुष्पः सिन्धुकः सिन्दुवारकः ।
नीलपुष्पी तु निर्गुण्डी सेफाली सुवहा च सा ॥
सिन्दुकः स्मृतिदस्तिक्तः कषायः कटुको लघुः ।
केश्यो नेत्रहितो हन्ति शूलशोथाममारुतान् ॥
क्रिमिकुष्ठारुचिश्लेष्मज्वरान्नीलापि तद्विधा ।
सिन्दुवारदलं जन्तुवातश्लेष्महरं लघु ॥

अस्य मूलादिकं ग्राह्यं, मात्रा १ माषकः ।

यवतिक्ता ।

यवतिक्ता महातिक्ता साग्निकृद्बलवर्द्धिनी ।

तिक्ता ज्वरातिसारघ्नी बालानां शुभदा सदा ॥

अस्याः स्वरसो ग्राह्य, मात्रा १ तोलकः।

चम्पकः।

चम्पकः स्वर्णपुष्पश्च चाम्पेयो हेमपुष्पकः।
दीपपुष्पो भृङ्गमोही सुरभिर्भ्रमरातिथिः ॥
वनदीपः पीतपुष्पो हेमाह्वः शीतलच्छदः।
सुभगः स्थिरगन्धश्च सुकुमारोऽतिगन्धकः ॥
चम्पकः शीतलः स्वादुः कटुस्तिक्तः कषायकः।
बल्यो विषक्रिमिहरः कफपित्तप्रणाशनः।
दाहवातास्रकण्डूश्च ज्वरांश्च निखिलान् जयेत् ॥

अस्य त्वक्स्वरसादिकं ग्राह्यं, मात्रा त्वचः १ माषकः, स्वरसस्य च १ तोलकः।

महातिक्ता। मिस्मितिता इतिलोके।

भद्रतिक्ता महातिक्ता रसे तिक्ताग्निवर्द्धिनी।
ज्वरघ्नी पित्तहृद्बल्या श्लेष्माणमपि नाशयेत् ॥

अस्या मात्रा ६ रक्तिका।

---

---

## कासघ्नवर्गः ।

### विभीतकः ।

विभीतकस्त्रिलिङ्गः स्यादक्षः कर्षफलस्तु सः ।
कलिद्रुमो भूतवासस्तथा कलियुगालयः ॥
विभीतकं स्वादुपाकं कषायं कफपित्तनुत् ।
उष्णवीर्य्यं हिमस्पर्शं भेदनं कासनाशनम् ।
रूक्षं नेत्रहितं केश्यं क्रिमिवैस्वर्य्यनाशनम् ॥
विभीतमज्जा तृट्च्छर्द्दिकफवातहरी लघुः ।
कषायो मदकृच्चाथ धात्रीमज्जापि तद्गुणः ॥

अस्य फलं तन्मज्जा च गृह्यते । मात्रा २ माषकौ ।

### पिप्पली ।

पिप्पली मागधी कृष्णा वैदेही चपला कणा ।
उपकुल्योषणा शौण्डी कोला स्यात् तीक्ष्णतण्डुला ॥
पिप्पली दीपनी वृष्या स्वादुपाका रसायनी ।
अनुष्णा कटुका स्निग्धा वातश्लेष्महरी लघुः ॥
पिप्पली रेचनी हन्ति श्वासकासोदरज्वरान् ।
कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् ॥
आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः ।
पित्तप्रशमनी सा तु शुष्का पित्तप्रकोपिणी ॥
पिप्पली मधुसंयुक्ता मेदःकफविनाशिनी ।

श्वासकासज्वरहरा वृष्या मेध्याग्निवर्द्धिनी ॥
जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुड़पिप्पली ।
कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत् ॥
द्विगुणपिप्पलीचूर्णाद्गुड़ोऽत्र भिषजा मतः ॥
पिप्पलीफलस्य मात्रा १ माषकः ।

## वंशरोचना ।

स्याद्वंशरोचना वांशी तुगाक्षीरी तुगा शुभा ।
त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च वैणवी ॥
वंशजा वृंहणी वृष्या बल्या स्वाद्वी च शीतला ।
तृष्णा कषाया पित्तघ्नी दुष्टशोणितशोधिनी ॥
तृष्णाकासज्वरश्वासक्षयपित्तास्रकामलाः ।
हरेत् कुष्ठं व्रणं पाण्डुं दाहनुद्वातकृच्छ्रजित् ॥
अस्या मात्रा ६ रक्तिकाः ।

## कर्कटशृङ्गी ।

शृङ्गी कर्कटशृङ्गी च स्यात् कुलीरविषाणिका ।
अजशृङ्गी च वक्रा च कर्कटाख्या च कीर्त्तिता ॥
शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान् ।
श्वासोर्द्ध्ववाततृट्कासहिक्कारुचिवमीन् हरेत् ॥
अस्याः फलं ग्राह्यं, मात्रा १ माषकः ।

## कट्फलः ।

कट्फलः सोमवल्कश्च कैटर्य्यः कुम्भिकाऽपि च ।
श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति च ॥
कट्फलस्तुवरस्तिक्तः कटुर्वातकफज्वरान् ।

हन्ति श्वासप्रमेहार्शः कासकण्ड्वामयारुचीः॥
अस्य त्वग्ग्राह्या, मात्रा ६ रत्तिकाः।

भार्गी।

भार्गी भृगुभवा पद्मा फञ्जी ब्राह्मणयष्टिका।
ब्राह्मण्यङ्गारवल्ली च खरशाका च हञ्जिका॥
भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी लघुः।
दीपनी तुवरा गुल्मरक्तनुन्नाशयेद्ध्रुवम्।
शोथकासकफश्वासपीनसज्वरमारुतान्॥
सर्वाङ्गोऽस्या ग्राह्यं, मात्रा १ माषकः।

वासकः।

वासको वासिका वासा भिषङ्माता च सिंहिका।
सिंहास्यो वाजिदन्तः स्यादाटरूषोऽटरूषकः।
अटरूषो वृषस्ताम्रः सिंहपर्णश्च स स्मृतः॥
वासको वासकृत् स्वर्य्यः कफपित्तास्रनाशनः।
तिक्तस्तुवरको हृद्यो लघुः शीतस्तृडर्त्तिहृत्॥
श्वासकासज्वरच्छर्दिमेहकुष्ठक्षयापहः॥
अस्य मूलत्वग्ग्राह्या, मात्रा १ माषकः।

मेषशृङ्गी।

मेषशृङ्गी विषाणी स्यान्मेषवल्लयजशृङ्गिका॥
मेषशृङ्गी रसे तिक्ता वातला श्वासकासहृत्।
रूक्षा पाके कटुस्तिक्ता व्रणश्लेष्माक्षिशूलनुत्॥
मेषशृङ्गीफलं तिक्तं कुष्ठमेहकफप्रणुत्।
दीपनं स्रंसनं कासक्रिमिव्रणविषापहम्॥
अस्याः फलं ग्राह्यं, मात्रा १ माषकः।

भूम्यामलकी ।

भूम्यामलकिका प्रोक्ता शिवा तामलकीति च ।
बहुपत्रा बहुफला बहुवीर्य्यजटापि च ॥
भूधात्री वातकृत् तिक्ता कषाया मधुरा हिमा ।
पिपासाकासपित्तास्रकफकण्डूक्षतापहा ॥

सर्वांशोऽस्या ग्राह्यं, माता १ तोलकः ।

शमी ।

शमी शक्तुफला तुङ्गा केशहन्त्री शिवा ।
मङ्गल्या च तथा लक्ष्मीः शमीरा शिवा मृता ॥
शमी तिक्ता कटुः शीता कषाया लघु ।
कफकासभ्रमश्वासकुष्ठार्शःक्रिमिजित् स्मृता ॥

अस्या मूलत्वग् ग्राह्या, माता १ तोलकः ।

वचा ।

वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ।
क्षुद्रपत्री च मङ्गल्या जटिलोग्रा च लोमशा ॥
वचोग्रगन्धा कटुका तिक्तोष्णा वान्तिवह्निकृत् ।
विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी ।
अपस्मारकफोन्मादभूतजन्त्वनिलान् हरेत् ॥

पारसीकवचा ।

पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा ।
हैमवत्युदिता तद्वत्तं हन्ति विशेषतः ॥

सुगन्धा वचा ।

यस्य लोके कुलिञ्जन इति नामान्तरम् ।
सुगन्धाप्युग्रगन्धा च विशेषात् कासकारानुत् ।

सुस्वरत्वकरी रुच्या हृत्कण्ठमुखशोधिनी ॥
स्थूलग्रन्थिः यस्या लोके महावरी इति नाम ।
स्थूलग्रन्थिः सुगन्धा स्यात् ततो हीनगुणा स्मृता ॥
सर्वासां मात्रा १ माषकः ।

कुष्ठम् ।

कुष्ठरोगाह्वयं वाप्यं पारिभव्यन्तथोत्पलम् ॥
कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु ।
हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान् ॥

कुष्ठभेदः पुष्करमूलम् ।

उक्तं पुष्कर [illegible] पौष्करं पुष्करञ्च तत् ।
पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः ॥
पौष्करं कटु कतिक्तमुष्णं वातकफज्वरान् ।
हन्ति शोथारुचिश्वासान् विशेषात् पार्श्वशूलनुत् ॥
अनयोर्मूलं ग्राह्यं, मात्रा ६ रक्तिकाः ।

श्यामपर्णी । चा इति लोके ।

स्त्री सारिर्गिरिभिच्छ्यामपर्णं तन्द्री स्त्रियामुभे ॥
स्त्री स्यारिपत्रं कफहृत् स्वेदनं बलवर्द्धनम् ।
प्रतिश्यायहरं प्रोक्तं ज्वरघ्नं कामदीपनम् ॥
काससंहरणं वह्निदीपनं जाड्यनाशनम् ।
फाण्टोऽस्य सितया युक्तः सेव्यो नैरुज्यमिच्छता ॥

तालीशम् ।

तालीशमुक्तं पत्राख्यं धात्रीपत्रञ्च तत् स्मृतम् ॥
तालीशं लघु तीक्ष्णोष्णं श्वासकासकफानिलान् ।

निहन्त्यश्विगुल्मामवह्निमान्द्यचयामयान् ॥

पत्रस्यास्य मात्रा १ माषकः ।

---

# विंशोऽध्यायः ।

---

## कण्डूघ्नवर्गः ।

### चक्रमर्द्दः ।

चक्रमर्द्दः प्रपुन्नाटो दद्रुघ्नो मेषलोचनः ।
पद्माटः स्यादेड़गजश्चक्रो पुन्नाट इत्यपि ॥
चक्रमर्द्दो लघुः स्वादू रूक्षः पित्तानिलापहः ।
हृद्यो हिमः कफश्वासकुष्ठदद्रुक्रिमीन् हरेत् ॥
हन्त्युष्णं तत्फलं कुष्ठकण्डूदद्रुविषानिलान् ।
गुल्मकासक्रिमिश्वासनाशनं कटुकं स्मृतम् ॥

### महानिम्बः ।

वकायन इति लोके प्रसिद्धः ।

महानिम्बः स्मृतो नेता रम्यको विषमुष्टिकः ।
केशमुष्टिर्निम्बकश्च कार्मुको जीव इत्यपि ॥
महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषायकः ।
कफपित्तभ्रमच्छर्द्दिकुष्ठहृल्लासरक्तजित् ।
प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशनः ॥

मञ्जिष्ठा ।

मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ।
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ॥
रसायन्यरुणा काला रक्ताङ्गी रक्तयष्टिका ।
भण्डीतकी च गण्डीरी मञ्जूषा वस्त्ररञ्जिनी ॥
मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् ।
गुरुरुष्णा विषश्लेष्मशोथयोन्यक्षिकर्णरुक् ।
रक्तातीसारकुष्ठास्रवीसर्पव्रणमेहनुत् ॥

मात्रा १ माषकः ।

हरिद्रा ।

हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी ।
क्रिमिघ्नी हलदी योषित्प्रिया हट्टविलासिनी ॥
हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत् ।
वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा ॥

मात्रा २ माषकौ ।

वनहरिद्रा आम्रगन्धिहरिद्रा च ।

अरण्यहलदीकन्दः कुष्ठवातास्रनाशनः ॥
आम्रगन्धिहरिद्रा या सा शीता वातला मता ।
पित्तहृन्मधुरा तिक्ता सर्वकण्डूविनाशिनी ॥

अनयोर्मात्रा २ माषकौ ।

पद्मकम् ।

पद्मकं पद्मगन्धि स्यात्तथा पद्माह्वयं स्मृतम् ॥
पद्मकन्तुवरन्तिक्तं शीतलं वातलं लघु ।
वीसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तनुत् ।

गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत् ॥

काष्ठमस्य ग्राह्यं, मात्रा १ माषकः ।

गोरोचना ।

गोरोचना तु मङ्गल्या बन्ध्या गौरी च रोचना ॥
गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिदा ।
विषालक्ष्मीपस्मारोन्मादगर्भस्रावक्षतास्रहृत् ॥

एलवालुकम् ।

एलवालुकमैलेयं सुगन्धि हरिवालुकम् ।
एलवालुकमैलाखु कपित्थपत्रमीरितम् ॥
एलालु कटुकं पाके कषायं शीतलं लघु ।
हन्ति कण्डूव्रणच्छर्दिंतृट्कासारुचिहृद्रुजः ।
बलासविषपित्तास्रकुष्ठमूत्रगदक्रिमीन् ॥

मात्रा १ माषकः ।

कुटन्नटम् ।

गुड़त्तजी इति च द्रव्यन्तु वितुन्नकनाम्नो
वृक्षस्य त्वक् मुस्ताकृतिः ।

कुटन्नटं दासपूरं वालेयं परिपेलवम् ।
प्लवगोपुरगोनर्दकैवर्त्तमुस्तकानि च ॥
मुस्तावत् पेलवपुटं शुक्लाभं स्याद्वितुन्नकम् ॥
वितुन्नकं हिमं तिक्तं कषायं कटु कान्तिदम् ।
कफपित्तास्रवीसर्पकुष्ठकण्डूविषप्रणुत् ॥

मात्रा १ माषकः ।

कुष्ठवैरी । हिन्दी चालमुगरा ।

कुष्ठवैरी मैलरोघ्नी महागन्धी मनोरुह ।

वैवस्वतद्रुमः स स्याद्वलक्षश्च रसायनः ॥
पामाविचर्चिकाकण्डूसिध्मोदर्दविपादिकाः ।
हन्त्यामवातं वातास्रं कुष्ठानि च विशेषतः ॥

अस्य फलस्य बीजं तत्तैलञ्च ग्रहणीयं, बीजस्य मात्रा ६ रत्तिकाः, तैलस्य ४ बिन्दवः ।

अगदः ।

अगदो दद्रुमर्दी स्यात् कीटारिश्चाढसुन्दरः ।
दद्रुमर्दी हरेद्दद्रुपामाकण्डूविचर्चिकाः ॥

श्वेता रक्ता च गुञ्जा ।

श्वेता गुञ्जा घटा प्रोक्ता कृष्णला चापि सा स्मृता ॥
रक्ता सा काकचिञ्ची स्यात् काकनन्ती च रत्तिका ।
काकादनी काकपीलुः सा स्मृता काकवल्लरी ॥
गुञ्जाद्वयन्तु केश्यं स्यात् वातपित्तज्वरापहम् ।
मुखशोषभ्रमश्वासतृष्णामदविनाशनम् ॥
नेत्रामयहरं वृष्यं बल्यं कण्डूं व्रणं हरेत् ।
क्रिमीन्द्रलुप्तकुष्ठानि रक्ता च धवलापि च ॥

श्वेतो रक्तश्च करवीरः ।

करवीरः श्वेतपुष्पः श्वेतकुम्भोऽश्वमारकः ।
द्वितीयो रक्तपुष्पश्च चण्डातो लगुडस्तथा ।
करवीरद्वयं तिक्तं कषायं कटुकञ्च तत् ।
व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ॥
वीर्य्योष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥

एतयोर्मूलं ग्राह्यम् । मात्रा पादरत्तिका ।

काञ्चनारः कोविदारश्च।

काञ्चनारः काञ्चनको गण्डारिः शोणपुष्पकः॥
कोविदारश्च मरिकः कुद्दालो युग्मपत्रकः।
कुण्डली ताम्रपुष्पाश्चाश्मन्तकः स्वल्पकेशरी॥
काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत्।
क्रिमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः॥
कोविदारोऽपि तद्वत् स्यात्तयोः पुष्पं लघु स्मृतम्।
रूक्षं संग्राहि पित्तास्रप्रदरक्षयकासनुत्॥

उभयोस्त्वग्ग्राह्या, मात्रा १ माषकः।

शिरीषः।

शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः।
शुकपुष्पः शुकतरुर्मृदुपुष्पः शुकप्रियः॥
शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः।
दोषशोथविसर्पघ्नः कासव्रणविषापहः॥

अस्य वीजं ग्राह्यं, मूलत्वग् च गृह्णीया, मात्रा १ माषकः।

शिरीषिका।

शिरीषिका टिण्टिरिका दुर्बलाम्बुशिरीषिका।
त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका॥

सर्वांशोऽस्या ग्राह्यः, मात्रा १ माषकः।

शालः।

शालस्तु सर्जकश्चाश्वकर्णिका शस्यसम्बरः॥
अश्वकर्णः कषायः स्याद्व्रणस्वेदकफक्रिमीन्।

अश्मविद्रधिवाधिर्य्ययोनि गदान् हरेत् ॥

त्वगस्य गृह्यते, म माषकौ ॥

त ।

तमालः शालवद्द्वेयो द विस्फोटहृत् पुनः ॥

सर्ज्जकः शालभेदः ।

सर्ज्जोऽजकर्णः स्याच्छाला मरिचपत्रकः ॥

अजकर्णः कटुस्तिक्तः कषायोष्णा व्यपोहति ।

कफपाण्डुश्रुतिगदान् मेहकुष्ठविषव्रणान् ॥

त्वगस्य ग्राह्या, मात्रा २ माषकौ ।

शल्लकी । हिन्दी शलाइ ।

शल्लकी गजभक्ष्या च सुवहा सुरभी रसा ।

महेरुणा कुन्दुरुकी वल्लकी च बहुस्रवा ॥

शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् ।

रक्तपित्तव्रणहरी पुष्टिकृत् समुदीरिता ॥

अस्या मूलत्वग् ग्राह्या, मात्रा २ माषकौ ।

शिंशपा ।

शिंशपा पिच्छिला श्यामा कृष्णसारा च सागुरुः ।

कपिला सैव मुनिभिर्भस्मगर्भेति कीर्त्तिता ॥

शिंशपा कटुका तिक्ता कषाया दोषहारिणी ।

उष्णवीर्य्या हरेन्मेदःकुष्ठश्वित्रवमिक्रिमीन् ।

वस्तिरुग्व्रणदाहास्रबलासान् गर्भपातिनी ॥

अस्या त्वग्ग्राह्या पत्रञ्च गृहणीयं, मात्रा १ माषकः ।

असनः ।

वीजकः पीतसारश्च पीतशालक इत्यपि ।

बन्धूकपुष्पः प्रियकः सर्जकश्चासनः स्मृतः॥
वीजकः कुष्ठवीसर्पश्चित्रमेहगुदक्रिमीन्।
हन्ति श्लेष्मास्रपित्तांश्च त्वच्यः केश्यो रसायनः॥

अस्य मूलत्वग्ग्राह्या, मात्रा २ माषकौ।

इङ्गुदः।

इङ्गुदीऽङ्गारवृक्षश्च तिलकस्तापसद्रुमः॥
इङ्गुदः कुष्ठभूतादिग्रहव्रणविषक्रिमीन्।
हन्त्युष्णः श्वित्रशूलघ्नस्तिक्तकः कटुपाकवान्॥

अस्य मूलत्वग्ग्राह्या, मात्रा १ माषकः।

---

# एकविंशोऽध्यायः।

---

## क्रिमिघ्नवर्गः।

### विडङ्गः।

पुंसि क्लीवे विडङ्गः स्यात् क्रिमिघ्नो जन्तुनाशनः।
तण्डुलश्च तथा वेल्लममोघा चित्रतण्डुला॥
विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु।
आतिक्तं विषसंहारी श्लेष्मदोषनिकृन्तनम्।
शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत्॥

अस्य फलं ग्राह्यं, मात्रा २ माषकौ।

पारिभद्रः।

पारिभद्रो निम्बतरुर्मन्दारः पारिजातकः॥
पारिभद्रोऽनिलश्लेष्मशोथमेदःक्रिमिप्रणुत्।
तत्पत्रं पित्तरोगघ्नं कर्णव्याधिविनाशनम्॥

अस्य त्वक्चूर्णादिकं ग्राह्यं, मात्रा त्वक्चूर्णस्य ६ रत्तिकाः पत्रादिस्वरसस्य च ४ माषकाः।

सोमराजी।

अवल्गुजो वाकुची स्यात् सोमराजी सुपर्णिका।
शशिलेखा कृष्णफला सोमा पूतिफलीति च।
सोमवल्ली कालमेषी कुष्ठघ्नी च प्रकीर्त्तिता॥
वाकुची मधुरा तिक्ता कटुपाका रसायनी।
विष्टम्भहृत् हिमा रुच्या सरा श्लेष्मास्रपित्तनुत्।
रूक्षा हृद्या श्वासकुष्ठमेहज्वरक्रिमिप्रणुत्॥
तत्फलं पित्तलं कुष्ठकफानिलहरं कटु।
केश्यं त्वच्यं वमिश्वासकासशोथामपाण्डुनुत्॥

अस्या वीजं ग्राह्यं, मात्रा १ माषकः।

काम्पिल्लः।

काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनोऽपि च॥
काम्पिल्लः कफपित्तास्रक्रिमिगुल्मोदरव्रणान्।
हन्ति रेची कटूष्णश्च मेहानाहविषाश्मनुत्॥

अस्य मात्रा ६ रत्तिकाः।

सर्पाक्षी। हिन्दी सरहटी। गण्डिमी।

सर्पाक्षी स्यात्तु गण्डाली तथा नाडीकपालकः॥
सर्पाक्षी कटुका तिक्ता सोष्णा क्रिमिनिकृन्तनी।

वृश्चिकोन्दुरसर्पाणां विषघ्नी व्रणरोपिणी ॥

सर्वांशोऽस्या ग्राह्यः, मात्रा २ रत्तिके ।

अर्कपुष्पी ।

अर्कपुष्पी क्रूरकर्मा पयस्या जलकामुका ।

अर्कपुष्पी क्रिमिश्लेष्ममेहपित्तविकारजित् ॥

सर्वांशोऽस्या ग्राह्यः, मात्रा १ माषकः ।

मुसाकर्णी ।

आखुकर्णी त्वाखुकर्णः पर्णिका भूदरीभवा ॥

आखुकर्णी कटुस्तिक्ता कषाया शीतला लघुः ।

विपाके कटुका मूत्रकफामयक्रिमिप्रणुत् ॥

सर्वांशोऽस्या ग्रहणीयः, मात्रा १ माषकः ।

पलाशः ।

पलाशः किंशुकः पर्णो यज्ञिको रक्तपुष्पकः ।

चारश्रेष्ठो वातहरो ब्रह्मवृक्षः समिद्वरः ॥

पलाशो दीपनो वृष्यः सरोष्णः व्रणगुल्मजित् ।

काषायः कटुकस्तिक्तः स्निग्धो गुदजरोगजित् ।

भग्नसन्धानकृद्दोषग्रहण्यर्शःक्रिमीन् हरेत् ॥

तत्पुष्पं स्वादु पाके तु कटु तिक्तं कषायकम् ।

वातलं कफपित्तास्रकृच्छ्रजिद्ग्राहि शीतलम् ।

तृड्दाहशमकं वातरक्तकुष्ठहरं परम् ॥

फलं लघूष्णं मेहार्शःक्रिमिवातकफापहम् ।

विपाके कटुकं रूक्षं कुष्ठगुल्मोदरप्रणुत् ॥

अस्य त्वग्बीजादिकं ग्राह्यं मात्रा १ माषकः ।

क्रिमिरोगे बीजमेवास्य सदा व्यवह्रियते ।

# द्वाविंशोऽध्यायः ।

---

## सन्धानीयवर्गः ।

### धनुर्वृक्षः ।

धन्वङ्गस्तु धनुर्वृक्षो गोत्रवृक्षः सुतेजनः ॥
धन्वङ्गः कफपित्तास्रकासहृत्तुवरो लघुः ।
हृद्यो बलकृद्रूक्षः सन्धिकृद्व्रणरोपणः ॥
अस्य त्वग् गृह्णीया, मात्रा १ माषकः ।

### अर्जुनः ।

ककुभोऽर्जुननामा च नदीसर्जश्च कीर्त्तितः ।
इन्द्रद्रुर्वीरवृक्षश्च वीरश्च धवलः स्मृतः ॥
ककुभः शीतलो हृद्यः क्षतक्षयविषास्रजित् ।
मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत् ।
कोपनो वायुरोगस्य भग्नसन्धायको मतः ॥
अस्य त्वग् गृह्णीया, मात्रा २ माषकौ ।

### अस्थिसंहारकः ।

ग्रन्थिमानस्थिसंहारी वज्राङ्गी वास्थिशृङ्खला ॥
अस्थिसंहारकः प्रोक्तो वातश्लेष्महरोऽस्थियुक् ।
उष्णः सरः कृमिघ्नश्च दुर्नामघ्नोऽक्षिरोगजित् ।
रूक्षः स्वादुर्लघुर्वृष्यः पाचनः पित्तलः स्मृतः ॥
काण्डं त्वग्विरहितमस्थिशृङ्खलाया
माषार्द्धं द्विदलमकञ्चुकं तदर्द्धम् ।

सम्पिष्टं तदनु ततस्तिलस्य तैले
सम्पक्कं वटकमतीव वातहारि ॥

अस्या लताया सर्वांशो ग्राह्यः, मात्रा १ माषकः।

राल:।

शालस्तु शालनिर्य्यासस्तथा सर्जरसः स्मृतः।
देवधूपो यक्षधूपस्तथा सर्वरसश्च सः॥
रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत्।
दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः :
ग्रहभग्नाग्निदग्धाशोशूलातीसारनाशनः॥

मात्रा ६ रत्तिकाः।

---

## त्रयोविंशोऽध्यायः।

---

लतघ्नवर्गः।

श्वेतैरण्ड:।

स्याच्चुक्रः काननैरण्डः श्वेतैरण्डो व्यडम्बनः॥
श्वेतैरण्डः कटुस्तिक्तो वीर्य्योष्णः कफरोगनुत्।
शूलवायुकफध्वंसी शुक्लं [illegible]स्य तु॥
निर्य्यासः लतहृत् [illegible]त्तामयविनाशनः।
आमवातञ्च वि[illegible] [illegible]ञ्चापि सुदारुणम्।
निहन्ति कफक[illegible] [illegible] [illegible] वामनभेदनम्॥

अध्यायस्य [illegible] [illegible]ः परिशिष्टे विवृतः।

# चतुर्विंशोऽध्यायः ।

---

## पुष्पवर्गः ।

### पद्मम् ।

वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ।
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥
पङ्केरुहन्तामरसं सारसं सरसीरुहम् ।
विसप्रसूनराजीवपुष्कराम्भोरुहाणि च ॥
कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् ।
तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥
विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् ।
रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥
धवलं कमलं शीतं मधुरं रक्तपित्तजित् ।
तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकम् ॥

### पद्मिनी ।

मूलनालदलोत्फुल्लफलैः समुदिता पुनः ।
पद्मिनी प्रोच्यते प्राज्ञैर्विसिन्यादि च सा स्मृता ॥
पद्मिनी शीतला गुर्वी मधुरा लवणा च सा ।
पित्तासृक्कफनुद्रूक्षा वातविष्टम्भकारिणी ॥
आदिशब्दान्नलिनी कमलिनीत्यादि ।

### पद्मस्य नवपत्रादि ।

संवर्त्तिका नवदलं वीजकोषस्तु कर्णिका ।

किञ्जल्कः केशरः प्रोक्तो मकरन्दो रसः स्मृतः ॥
पद्मनालं मृणालं स्यात्तथा विसमिति स्मृतम् ॥
संवर्त्तिका हिमा तिक्ता कषाया दाहतृट्प्रणुत् ।
मूत्रकृच्छ्रगुदव्याधिरक्तपित्तविनाशिनी ॥
पद्मस्य कर्णिका तिक्ता कषाया मधुरा हिमा ।
मुखवैशद्यकृल्लघ्वी तृष्णास्रकफपित्तनुत् ॥
किञ्जल्कः शीतलो वृष्यः कषायो ग्राहकोऽपि सः ।
कफपित्ततृषादाहरक्तार्शोविषशोथजित् ॥
मृणालं शीतलं वृष्यं पित्तदाहास्रजिद् गुरु ।
दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् ।
संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम् ॥

## कुमुदम् ।

श्वेतं कुवलयं प्रोक्तं कुमुदं कैरवं तथा ।
कुमुदं पिच्छिलं स्निग्धं मधुरं ह्लादि शीतलम् ॥

## कुमुदिनी ।

कुमुद्वती कैरविका तथा कुमुदिनीति च ।
सा तु मूलादिसर्वाङ्गैरुक्ता समुदिता बुधैः ॥
पद्मिन्या ये गुणाः प्रोक्ताः कुमुदिन्याश्च ते स्मृताः ॥

## सेवती ।

शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा ।
महाकुमारी गन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥
शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः ।
दोषत्रयास्रजिद्वर्ण्या तिक्ता कट्वी च पाचनी ॥

वासन्ती ।

नेपाली कथिता तज्ज्ञैः सप्तला नवमालिका ।
वासन्ती शीतला लघ्वी तिक्ता दोषत्रयास्रजित् ॥

जाती स्वर्णजाती च ।

जातिर्जाती च सुमना मालती राजपुत्रिका ।
चेतिका हृद्यगन्धा च सा पीता स्वर्णजातिका ॥
जातीयुगं तिक्तमुष्णं तुवरं लघु दोषजित् ।
शिरोऽक्षिमुखदन्तार्त्तिविषकुष्ठानिलास्रजित् ॥

यूथिका स्वर्णयूथिका च ।

यूथिका गणिका स्वष्ठा सा पीता हेमपुष्पिका ॥
यूथियुगं हिमं तिक्तं कटु पाकरसं लघु ।
मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम् ।
व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम् ॥

चम्पकः ।

चाम्पेयश्चम्पकः प्रोक्तो हेमपुष्पश्च स स्मृतः ।
एतस्य कलिका गन्धफलीति कथिता बुधैः ॥
चम्पकः कटुकस्तिक्तः कषायो मधुरो हिमः ।
विषक्रिमिहरः कृच्छ्रकफवातास्रपित्तजित् ॥

वकुलः ।

वकुलो मधुगन्धश्च सिंहकेशरकस्तथा ॥
वकुलस्तुवरोऽनुष्णः कटुपाकरसो गुरुः ।
कफपित्तविषश्वित्रक्रिमिदन्तगदापहः ॥

शिवमल्ली।

बृहद्वकुल इत्यस्या नामान्तरम्।

शिवमल्ली पाशुपत एकाष्ठीलो वुको वसुः॥
वुकोऽनुष्णः कटुस्तिक्तः कफपित्तविषापहः।
योनिशूलतृषादाहकुष्ठशोथास्रनाशनः॥

कदम्बः।

कदम्बः प्रियको नीपो वृत्तपुष्पो हलिप्रियः॥
कदम्बो मधुरः शीतो कषायो लवणो गुरुः।
सरो विष्टम्भकृद्रूक्षः कफस्तन्यानिलप्रदः॥

वार्षिकी।

श्रीपदी षट्पदानन्दा वार्षिकी मुक्तबन्धना॥
वार्षिकी शीतला लघ्वी तिक्ता दोषत्रयापहा।
कर्णाक्षिमुखरोगघ्नी तत्तैलं तद्गुणं स्मृतम्॥

मल्लिका।

मल्लिका मदयन्ती च शीतभीरुश्च भूपदी॥
मल्लिकोष्णा लघुर्वृष्या तिक्ता च कटुका हरेत्।
वातपित्तास्यदृग्व्याधिकुष्ठारुचिविषव्रणान्॥

माधवी।

माधवी स्यात्तु वासन्ती पुण्ड्रको मण्डकोऽपि च।
अतिमुक्तो विमुक्तश्च कामुको भ्रमरोत्सवः॥
माधवी मधुरा शीता लघ्वी दोषत्रयापहा॥

केतकः सुवर्णकेतकी च।

केतकः सूचिकापुष्पो जम्बुकः क्रकचच्छदः।
सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी॥

केतकः कटुकः स्वादुर्लघुस्तिक्तः कफापहः ।
उष्णा तिक्तरसा ज्ञेया चक्षुष्या हैमकेतकी ॥

किङ्किरातः ।

किङ्किरातो हेमगौरः पीतकः पीतभद्रकः ॥
किङ्किरातो हिमस्तिक्तः कषायश्च हरेदसौ ।
कफपित्तपिपासास्रदाहशोषवमिक्रिमीन् ॥

कर्णिकारः ।

कर्णिकारः परिव्याधः पादपोत्पल इत्यपि ॥
कर्णिकारः कटुस्तिक्तस्तुवरः शोधनो लघुः ।
रञ्जनः सुखदः शोथश्लेष्मास्रव्रणकुष्ठजित् ॥

अम्लाटनः ।

गौरादिदेशेऽय बाणपुष्पनाम्ना प्रसिद्ध. ।
अम्लातोऽम्लाटनः प्रोक्तस्तथाम्लातक इत्यपि ।
कुरण्टको वर्णपुष्पः स एवोक्तो महासहः ॥
अम्लाटनः कषायोष्णः स्निग्धः स्वादुश्च तिक्तकः ॥

कुन्दम् ।

कुन्दन्तु कथितं माध्यं सदापुष्पश्च तत् स्मृतम् ।
कुन्दं शीतं लघु श्लेष्मशिरोरुग्विषपित्तहृत् ॥

मुचुकुन्दः ।

मुचुकुन्दः क्षत्रवृक्षश्चित्रकः प्रतिविष्णुकः ।
मुचुकुन्दः शिरःपीडापित्तास्रविषनाशनः ॥

तिलकः ।

तिलकः क्षुरकः श्रीमान् सुपुष्पस्थलपुष्पकः ॥

तिलकः कटुकः पाके रसे चोष्णो रसायनः ।
कफकुष्ठक्रिमीन् वस्तिमुखदन्तगदान् हरेत् ॥

बन्धूकः ।

बन्धूको बन्धुजीवश्च रक्तो माध्याह्निकोऽपि च ।
बन्धूकः कफकृद्ग्राही वातपित्तहरो लघुः ॥

अगस्तिः ।

अथागस्तिर्वङ्गसेनो मुनिपुष्पो मुनिद्रुमः ॥
अगस्तिः पित्तकफजिच्चातुर्थकहरो हिमः ।
रूक्षो वातकरस्तिक्तः प्रतिश्यायनिवारणः ॥

सिन्दूरी । हिन्दी सिन्दुरिया ।

सिन्दूरी रक्तबीजा च रक्तपुष्पा सुकोमला ।
सिन्दूरी विषपित्तास्रतृष्णावान्तिहरी हिमा ॥

कुब्जकः । हिन्दी कूजा ।

कुब्जको भद्रतरणिर्बृहत्पुष्पाऽतिकेशरः ।
महासहा कण्टकाढ्या नीलालिकुलसङ्कुला ॥
कुब्जकः सुरभिः स्वादुः कषायानुरसः सरः ।
त्रिदोषशमनो वृष्यः शीतहर्त्ता च स स्मृतः ॥

सैरेयकत्रयम् ।

सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका ।
सहाचरः सहचरः स च भिन्द्यपि कथ्यते ॥
कुरण्टकोऽत्र पीते स्याद्रक्ते कुरवकः स्मृतः ।
नीलवर्णो बुधैरुक्तो दासः आर्त्तगलश्च सः ॥
सैरेयः कुष्ठवातास्रकफकण्डूविषापहः ।

तिक्तोष्णो मधुरो दन्त्यः सुस्निग्धः केशरञ्जनः ॥
एतेषां सर्वांशो गृह्यते, मात्रा २ माषकौ ।

---

## पञ्चविंशोऽध्यायः ।

---

### फलवर्गः ।

#### आम्रः ।

आम्रः प्रोक्तो रसालश्च सहकारोऽतिसौरभः ।
कामाङ्गो मधुदूतश्च माकन्दः पिकवल्लभः ॥
आम्रपुष्पमतीसारकफपित्तप्रमेहनुत् ।
असृग्दुष्टिहरं शीतं रुचिकृद्ग्राहि वातलम् ॥
आम्रं बालं कषायाम्लं रुच्यं मारुतपित्तनुत् ।
तरुणन्तु तदत्यम्लं रूक्षं दोषत्रयास्रकृत् ॥
आम्रमामं त्वचा हीनमातपेऽतिविशोषितम् ।
अम्लं स्वादु कषायं स्याद्भेदनं कफवातजित् ॥
फलन्तु मधुरं वृष्यं स्निग्धं बलसुखप्रदम् ।
गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम् ॥
कषायानुरसं वह्निश्लेष्मशुक्रविवर्द्धनम् ।
तदेव वृक्षसंपक्वं गुरु वातहरं परम् ।
मधुराम्लरसं किञ्चिद्भवेत् पित्तप्रकोपनम् ॥
आम्रं कृत्रिमपक्वञ्च तद्भवेत् पित्तनाशनम् ।

रसस्याम्लस्य हीनत्वात् माधुर्य्याच्च विशेषतः॥
उषितं तत् परं रुच्यं बल्यं वीर्य्यकरं लघु।
शीतलं शीघ्रपाकि स्यात् वातपित्तहरं सरम्॥
तद्रसो गलितो बल्यो गुरुर्वातहरः सरः।
अहृद्यस्तर्पणोऽतीवहृंहणः कफवर्द्धनः॥
तस्य खण्डं गुरु परं रोचनं चिरपाकि च।
मधुरं वृंहणं बल्यं शीतलं वातनाशनम्॥
वातपित्तहरं रुच्यं वृंहणं बलवर्द्धनम्।
वृष्यं वर्णकरं स्वादु दुग्धाम्लं गुरु शीतलम्॥

मन्दानलत्वं विषमज्वरञ्च
रक्तामयं बद्धगुदोदरञ्च।
आम्रातियोगो नयनामयं वा
करोति तस्मादति तानि नाद्यात्॥

एतदम्लाम्रविषयं मधुराम्लपरं न तु।
मधुरस्य परं नैव हितास्वाद्या गुणा यतः॥
शुण्ठ्यम्भसोऽनुपानं स्यादाम्राणामतिभक्षणे।
जीरकं वा प्रयोक्तव्यं सह सौवर्चलेन च॥

आम्रावर्त्तः।

पक्कस्य सहकारस्य पटे विस्तारितो रसः।
घर्मशुष्को मुहुर्दत्त आम्रावर्त्त इति स्मृतः॥
आम्रावर्त्तस्तृषाच्छर्दिवातपित्तहरः सरः।
रुच्यः सूर्य्यांशुभिः पाकाल्लघुश्च स हि कीर्त्तितः॥

नवपल्लवम्।

आम्रस्य पल्लवं रुच्यं कफपित्तविनाशनम्॥

राजाम्रः।

राजाम्रष्टङ्क आम्रातः कामाङ्गो राजपुत्रकः॥
राजाम्रन्तुवरं स्वादु विशदं शीतलं गुरु।
ग्राहि रूक्षं विबन्धाध्मवातकृत् कफपित्तनुत्॥

पणशः।

पणसः कण्टकिफलः पनसोऽतिबृहत्फलः॥
पणशं शीतलं पक्वं स्निग्धं पित्तानिलापहम्।
तर्पणं बृंहणं स्वादु मांसलं श्लेष्मलं भृशम्।
बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतव्रणान्॥
आमं तदेव विष्टम्भि वातलं तुवरं गुरु।
दाहकृन्मधुरं बल्यं कफमेदोविवर्द्धनम्॥
पणशोद्भूतबीजानि वृष्याणि मधुराणि च।
गुरूणि बद्धविट्कानि सृष्टमूत्राणि संवदेत्॥
अन्यच्च। मज्जा पणशजो वृष्यो वातपित्तकफापहः।
विशेषात् पणशो वर्ज्यः गुल्मिभिर्मन्दवह्निभिः॥

लकुचः।

लकुचः क्षुद्रपणशो लकुचो डहुरित्यपि॥
आमं लकुचमुष्णञ्च गुरु विष्टम्भकृत्तथा।
मधुरञ्च तथाम्लञ्च दोषत्रितयरक्तकृत्।
शुक्राग्निनाशनं वापि नेत्रयोरहितं स्मृतम्॥
सुपक्वन्तत्तु मधुरमम्लञ्चानिलपित्तहृत्।
कफवह्निकरं रुच्यं वृष्यं विष्टम्भकञ्च तत्॥

कोशाम्रः कोशम्भ इति च।

कोशाम्र उक्तः क्षुद्राम्रः क्रिमिवृक्षः सुकोशकः।

कोशाम्रः कुष्ठशीतास्रपित्तव्रणकफापहः ॥
तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम् ।
पक्वन्तु दीपनं रुच्यं लघूष्णं कफवातनुत् ॥

कालिन्दम् ।

कालिन्दं कृष्णवीजं स्यात् कालिङ्गञ्च सुवर्त्तुलम् ।
कालिन्दं ग्राहि दृक्पित्तशुक्रहृच्छीतलं गुरु ।
पक्वन्तु सोष्णं सक्षारं पित्तलं कफवातजित् ॥

खर्वुजम् ।

दशाङ्गुलन्तु खर्वुजं कथ्यते तद्गुणा अथ ।
खर्वुजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरुः ॥
स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् ।
तेषु यच्चाम्लमधुरं सक्षारञ्च रसाद्भवेत् ।
रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरं परम् ॥

त्रपुषम् ।

त्रपुषं कण्टकिफलं सुधावासः सुशीतलम् ॥
त्रपुषं लघु नीलञ्च नवं तृट्क्लमदाहजित् ।
स्वादु पित्तापहं शीतं रक्तपित्तहरं परम् ॥
तत् पक्वमम्लमुष्णं स्यात् पित्तलं कफवातनुत् ।
तद्बीजं मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ॥

चिर्भिटम् ।

चिर्भिटं धेनुदुग्धञ्च तथा गोरक्षकर्कटी ॥
चिर्भिटं मधुरं रूक्षं गुरु पित्तकफापहम् ।
अनुष्णं ग्राहि विष्टम्भि पक्वं तृष्णञ्च पित्तलम् ॥

गुवाकः ।

घोरण्टः पूगी पूगश्च गुवाकः क्रमुकोऽस्य तु ।
फलं पूगीफलं प्रोक्तमुद्वेगञ्च तदीरितम् ॥
पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित् ।
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ॥
आर्द्रं तत्तु विभिष्यन्दि वह्निदृष्टिहरं स्मृतम् ।
स्विन्नं दोषत्रयच्छेदि दृढ़मध्यन्तदुत्तमम् ॥

तालम् ।

तालन्तु लेखपत्रः स्यात् तृणराजो महोन्नतः ॥
पक्वं तालफलं पित्तरक्तश्लेष्मविवर्द्धनम ।
दुर्जरं बहुमूत्रञ्च तन्द्राभिष्यन्दशुक्रदम् ॥
तालमज्जा तु तरुण किञ्चिन्मदकरो लघुः ।
श्लेष्मलो वातपित्तघ्नः स स्नेही मधुरः सरः ॥

तालजतोयम् ।

तालजं तरुणं तोयमतीवमदकृन्मतम् ।
अम्लीभूतं तदा तु स्यात् पित्तकृद्वातदोषहृत् ॥

कपित्थम् ।

कपित्थन्तु दधित्थः स्यात् तथा पुष्पफलः स्मृतः ।
कपिप्रियो दधिफलस्तथा दन्तशठोऽपि च ॥
कपित्थमाम संग्राहि कषायं लघु लेखनम् ।
पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित ।
स्वाद्वम्लं तुवरं कण्ठशोधनं ग्राहि दुर्जरम् ॥

जम्बुः ।

क्षुद्रजम्बुः स्थूलपत्रा नादेयी जलजम्बुका ।

जम्बु: संग्राहिणी रूचा कफपित्तास्रदाहजित् ॥

राजजम्बूः।

फलेन्द्रा कथितानन्दी राजजम्बूर्महाफला।
तथा सुरभिपत्रा च महाजम्बूरपि स्मृता ॥
राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् ॥

बदरः।

पुंसि स्त्रियाञ्च कर्कन्धुर्बदरी कोलमित्यपि।
फेनिलं कुवलं घोंटा सौवीरं बदरं महत्।
अजप्रिया कुहा कोली विषमोभयकण्टका ॥

तत्र बदरविशेषाणां लक्षणानि गुणाश्च।

पच्यमानं सुमधुरं सौवीरं बदरं महत् ॥
सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम्।
बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम् ॥
सौवीरं लघु सम्पक्कं मधुरं कोलमुच्यते ॥
कोलन्तु बदरं ग्राहि रुच्यमुष्णञ्च वातलम्।
कफपित्तकरञ्चापि गुरु सारकमीरितम् ॥
कर्कन्धुः क्षुद्रबदरं कथितं पूर्वसूरिभिः ॥
अम्लं स्यात् क्षुद्रबदरं कषायं मधुरं मनाक्।
स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् ॥
शुष्कं भेद्यग्निकृत् सर्वं लघु तृष्णाक्लमास्रजित् ॥

लवली।

सुगन्धमूला लवली पाण्डुः कोमलवल्कला ॥
लवलीफलमश्मार्शःकफपित्तहरं गुरु।

विष्टम्भि रोचनं रूक्षं स्वाद्वम्लं तुवरं रसे ॥

करमर्दः ।

करमर्दः सुषेणः स्यात् कृष्णपाकफलस्तथा ।
तस्माल्लघुफला या तु सा ज्ञेया करमर्दिका ॥
करमर्दद्वयं त्वाममम्लं गुरु तृषाहरम् ।
उष्णं रुचिकरं प्रोक्तं रक्तपित्तकफप्रदम् ।
तत् पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ॥

पियालम् ।

पियालस्तु खरस्कन्धश्चारो बहुलवल्कलः ।
राजादनस्तापसेष्टः सन्नकद्रुर्धनुष्पटः ॥
चारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु ।
स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् ॥
पियालमज्जा मधुरो वृष्यः पित्तानिलापहः ।
हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः ॥

राजादनः ।

राजादनः फलाध्यक्षो राजन्या क्षीरकापि च ॥
क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु ।
तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित् ॥

विकङ्कतः ।

विकङ्कतः स्रुवावृक्षो ग्रन्थिलः स्वादुकण्टकः ।
स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि ॥
विकङ्कतफलं पक्वं मधुरं सर्वदोषजित् ॥

मधूकः ।

मधूको गुडपुष्पः स्यान्मधुपुष्पो मधुस्रवा ।

वानप्रस्थो मधुष्ठीलो जलजोऽत्र मधूलकः ॥
मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम् ।
बलशुक्रकरं प्रोक्तं वातपित्तविनाशनम् ॥
फलं शीतं गुरु स्वादु शुक्रलं वातपित्तनुत् ।
अहृद्यं हन्ति तृष्णासृग्दाहश्वासक्षतक्षयान् ॥

परूषकम् ।

परूषकन्तु परूषमल्पास्थि च परापरम् ॥
परूषकं कषायाम्लमामं पित्तकरं लघु ।
तत् पक्कं मधुरं पाके शीतं विष्टम्भि बृंहणम् ।
हृद्यन्तु पित्तदाहासृग्ज्वरक्षयसमीरहृत् ॥

तूतः ।

तूतः स्थूलश्च पूगश्च क्रमुको ब्रह्मदारु च ॥
तूतं पक्कं गुरु स्वादु हिमं पित्तानिलापहम् ।
तदेवामं गुरु सरमम्लोष्णं रक्तपित्तकृत् ॥

दाडिमः ।

दाडिमः करको दन्तबीजो लोहितपुष्पकः ।
तत्फलं त्रिविधं स्वादु स्वादम्लं केवलाम्लकम् ॥
तत्तु स्वादु त्रिदोषघ्नं तृड्दाहज्वरनाशनम् ।
हृत्कण्ठमुखरोगघ्नं तर्पणं शुक्रलं लघु ॥
कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम् ।
स्वादम्लं दीपनं रुच्यं किञ्चित् पित्तकरं लघु ॥
अम्लन्तु पित्तजननमम्लं वातकफापहम् ॥

बहुवारः ।

बहुवारस्तु शीतः स्यादुद्दालो बहुवारकः ।

शेलुः श्लेष्मातकश्चापि पिच्छिलो भूतवृक्षकः ॥
बहुवारो विषस्फोटव्रणवीसर्पकुष्ठनुत्।
मधुरस्तुवरस्तिक्तः केश्यश्च कफपित्तहृत् ॥
फलमामन्तु विष्टम्भि रूक्षं पित्तकफास्रजित्।
तत् पक्वं मधुरं स्निग्धं श्लेष्मल शीतलं गुरु ॥

कतकः।

पयःप्रसादि कतकं कतकं तत्फलञ्च तत्।
कतकस्य फलं नेत्र्य जलनिर्मलताकरम्।
वातश्लेष्महरं शीतं मधुरं तुवरं गुरु ॥

क्षुद्रखर्जूरी पिण्डखर्जूरी छोहारा च।

भूमिखर्जूरिका स्वाद्वी दुरारोहा मृदुच्छदा।
तथा स्कन्धफला काककर्कटी स्वादुमस्तका ॥
पिण्डखर्जूरिका त्वन्या स्याद्देशे पश्चिमे भवेत् ॥
खर्जूरी गोस्तनाकारा परद्वीपादिहागता।
जायते पश्चिमे देशे स्याच्छोहारेति कीर्त्यते ॥
खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः।
स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ॥
तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम्।
कोष्ठमारुतहृद्बल्यं वान्तिवातकफापहम् ॥
ज्वरातिसारक्षुत्तृष्णाकासश्वासनिवारकम्।
मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् ॥
महतीभ्यां गुणैरल्पा स्वल्पखर्जूरिका स्मृता ॥
खर्जूरीतरुतोयन्तु मदपित्तकर भवेत्।
वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् ॥

सुलेमानी पिण्डखर्जूरीभेदः ।

सुलेमानी तु मृदुला दलहीनफला च सा ।
सुलेमानी श्रमभ्रान्तिदाहमूर्च्छास्रपित्तहृत् ॥

द्राक्षा ।

द्राक्षा स्वादुफला प्रोक्ता तथा मधुरसापि च ।
मृद्वीका हारहूरा च गोस्तनी चापि कीर्त्तिता ॥
द्राक्षा पक्का सरा शीता चक्षुष्या बृंहणी गुरुः ।
स्वादुपाकरसा स्वर्य्या तुवरा सृष्टमूत्रविट् ॥
कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा ।
हन्ति तृष्णाज्वरश्वासवातवातास्रकामलाः ॥
कृच्छ्रास्रपित्तसंमोहदाहशोषमदात्ययान् ।
आमा स्वल्पगुणा गुर्व्वी सैवाम्ला रक्तपित्तकृत् ॥
वृष्या स्याद्गोस्तनीद्राक्षा गुर्वी च कफपित्तनुत् ।
अबीजान्या स्वल्पतरा गोस्तनीसदृशी गुणै. ॥
द्राक्षा पर्वतजा यादृक् तादृशी करमर्दिका ॥

गोस्तनी मुनक्का इति लोके। अबीजा बेदाना किसिमिस इति लोके। पर्वतजा वहावीर इति लोके। करमर्दिका करौंदी इति लोके।

अमृतफलम् ।

यत् बदकशानकाबिलप्रभृतिषु देशेषु नासपातीति प्रसिद्धम् ।

अमृतफलं लघु वृष्यं सुस्वादु त्रीन् हरेत् दोषान् ।
देशेषु सुलभमिदं बहुलं नासपातं लोकाः ॥

सेवम् ।

मुष्टिप्रमाणं वदरं सेवं सिवितिकाफलम् ॥
सेवं समीरपित्तघ्नं वृंहणं कफकृद्गुरु ।
रसे पाके च मधुरं शिशिरं रुचिशुक्रकृत् ॥

प्राचीनामलकम् ।

प्राचीनामलकं लोके पानीयामलकं स्मृतम् ।
प्राचीनामलकं दोषत्रयजिज्ज्वरघाति च ॥

वातादः ।

वातादो वातवैरी स्यान्नेत्रोपमफलस्तथा ।
वाताद उष्णः सुस्निग्धो वातघ्नः शुक्रकृद्गुरुः ॥
वातादमज्जा मधुरो वृष्यः पित्तानिलापहः ।
स्निग्धोष्णः कफकृन्नेष्टो रक्तपित्तविकारिणाम् ॥

पीलुः ।

पीलुर्गुडफलः स्रंसी तथा शीतफलोऽपि च ॥
पीलुः श्लेष्मसमीरघ्नं पित्तलं भेदि गुल्मनुत् ।
स्वादु तिक्तञ्च यत् पीलु तन्नात्युष्णं त्रिदोषहृत् ॥

अक्षोटः ।

पीलुः शैलभवोऽक्षोटः कर्परालश्च कीर्त्तितः ।
अक्षोटकोऽपि वातादसदृशः कफपित्तकृत् ॥

निम्बुः ।

निम्बुः स्त्री निम्बुकं क्लीवे निम्बूकमपि कीर्त्तितम् ।
निम्बूकमम्लं वातघ्नं दीपनं पाचनं लघु ॥
अन्यच्च । निम्बूकं क्रिमिसमूहनाशनं
तीक्ष्णमम्लमुदरग्रहापहम् ।

वातपित्तकफशूलिने हितं
कष्टनष्टरुचिरोचनं परम्॥
त्रिदोषवह्निक्षयवातरोग-
निपीड़ितानां विषविह्वलानाम्।
मन्दानले बद्धगुदे प्रदेयं
विसूचिकायां मुनयो वदन्ति॥

मिष्टनिम्बु।

मिष्टनिम्बुफलं स्वादु गुरुमारुतपित्तनुत्।
गररोगविषध्वंसि कफोत्क्लेशि च रक्तहृत्।
शोषारुचितृषाच्छर्दिहरं बल्यञ्च बृंहणम्॥

बीजपूरः।

बीजपूरो मातुलुङ्गो रुचकः फलपूरकः॥
बीजपूरफलं स्वादु रसेऽम्लं दीपनं लघु।
रक्तपित्तहरं कण्ठजिह्वाहृदयशोधनम्।
श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम्॥

मधुकर्कटिका।

बीजपूरोऽपरः प्रोक्तो मधुरो मधुकर्कटी॥
मधुकर्कटिका स्वाद्वी रोचनी शीतला गुरुः।
रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा॥

जम्बीरद्वयम्।

स्याज्जम्बीरो दन्तशठो जम्भजम्भीरजम्भलाः॥
जम्बीरमुष्णं गुर्वम्लं वातश्लेष्मविबन्धनुत्।
शूलकासकफोत्क्लेशच्छर्दितृष्णामदोषजित्।
आस्यवैरस्यहृत्पीड़ावह्निमान्द्यक्रिमीन् हरेत्॥

स्वल्पजम्बीरिका तद्वत् तृष्णाच्छर्दिनिवारणी ॥

वृक्षाम्लम् । हिन्दी महादा ।

वृक्षाम्लं तिन्तिड़ीकञ्च चुक्रं स्यादम्लवृक्षकम् ॥

वृक्षाम्लमाममम्लोष्णं वातघ्नं कफपित्तलम् ।

पक्कन्तु गुरु संग्राहि कटुकन्तुवरं लघु ॥

अम्लोष्णं रोचनं रूक्षं दीपनं कफवातकृत् ।

तृष्णार्शोग्रहणीगुल्मशूलहृद्रोगजन्तुजित् ॥

अम्लवेतसः ।

स्यादम्लवेतसश्चुक्रं शतवेधि सहस्रनुत् ॥

अम्लवेतसमत्यम्लं भेदनं लघु दीपनम् ।

हृद्रोगशूलगुल्मघ्नं पित्तलं लोमहर्षणम् ॥

रूक्ष विण्मूत्रदोषघ्नं प्लीहोदावर्त्तनाशनम् ।

हिक्कानाहारुचिश्वासकासाजीर्णवमिप्रणुत् ॥

कफवातामयध्वंसि छागमांसद्रवत्वकृत् ।

अण कास्लगुणं ज्ञेय लौहसूचीद्रवत्वकृत् ॥

चतुरम्लपञ्चाम्लयोर्लक्षणम् ।

अम्लवेतसवृक्षाम्लवृहज्जम्बीरनिम्बुकैः ।

चतुरम्लं हि पञ्चाम्लं बीजपूरयुतैर्भवेत् ॥

तिन्तिड़ी ।

अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च ।

अम्ला च चिञ्चिका चिञ्चा तिन्तिड़ीका च तिन्तिड़ी ।

अम्लिकाम्ला गुरुर्वातहरी पित्तकफास्रकृत् ।

पक्का तु दीपनी रूक्षा सरोष्णा कफवातनुत् ॥

कर्म्मरङ्गम् ।

कर्म्मरङ्गं हिमं ग्राहि स्वाद्वम्ल कफवातकृत् ॥

---

# षड्विंशोऽध्यायः ।

---

अथ शाकवर्गः ।

शाकम् ।

पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥
प्रायशाकानि सर्वाणि विष्टम्भीनि गुरूनि च ।
रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ॥
शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रम् ।
वर्णं विनाशयति रक्तमथापि शुक्रम् ॥
प्रज्ञाक्षयञ्च कुरुते पलितञ्च नूनम् ।
हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः ॥

शाकेषु सर्वेषु वसन्ति रोगा-
स्ते हेतवो देहविनाशनाय ।
तस्माद्बुधः शाकविवर्जनन्तु
कुर्य्यात्तथाम्लेषु स एव दोषः ॥

एतानि शाकनिन्दकानि वचनानि सामान्यानि ।
अथ शाकेषु विशिष्टानि वचनानि ।

## पत्रशाकानि।

### वास्तुकद्वयम्।

वास्तूक वास्तुकञ्च स्यात् चारपत्रञ्च शाकराट्।
तदेव तु वृहत्पत्र रक्तं स्याद्गौड़वास्तुकम्॥
प्रायशो यवसाध्ये स्याद्यवशाकमतः स्मृतम्।
वास्तूकद्वितयं स्वादु चारं पाके कटूदितम्॥
दीपन पाचनं रुच्यं लघु शुक्र बलप्रदम्।
सरं प्लीहास्रपित्तार्शःक्रिमिदोषत्रयापहम्॥

### पोतकी।

पोतक्युपोदिका सा तु मालवाम्तवल्लरी॥
पोतकी शीतला स्निग्धा श्लेष्मला वातपित्तनुत्॥
अकण्ठ्या पिच्छिला निद्रा शुक्रदा रक्तपित्तजित्।
बलदा रुचिकृत् पथ्या वृंहणी तृप्तिकारिणी॥

### मारिषः।

मारिषो वाष्पको मार्षः श्वेतो रक्तश्च स स्मृतः॥
मारिषो मधुरः शीतो विष्टम्भी पित्तनुद्गुरुः।
वातश्लेष्मकरो रक्तपित्तनुद्विषमाग्निजित्॥
रक्तमार्षो गुरुर्नाति सचारो मधुरः सरः।
श्लेष्मल. कटुकः पाके स्वल्पदोष उदीरित.॥

### तण्डुलीयः।

तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः।
भण्डीरस्तण्डुलीबीजो विषघ्नश्चाल्पमारिषः॥
तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित्।
सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः॥

पलक्या।

पलक्या वास्तुकाकारा क्षुरिका चीरितच्छदा॥
पलक्या वातला शीता श्लेष्मला भेदिनी गुरुः।
विष्टम्भिनी मदश्वासपित्तरक्तकफापहा:॥

नारिकम्।

नाडिकं कालशाकञ्च श्राद्धशाकञ्च कालकम्॥
कालशाकं सरं रुच्यं वातकृत् कफशोथ हृत्।
बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम्॥

पट्टशाक।

पट्टशाकस्तु नाडीको नाडीशाकश्च स स्मृत:।
नाड़िको रक्तपित्तघ्नो विष्टम्भी वातकोपन.॥

कलम्बी।

कलम्बी शतपर्वी च कथ्यन्ते तद्गुणा अथ।
कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी॥

लोणी वृहल्लोणी च।

लोणा लोणी च कथिता वृहल्लोणी तु घोटिका॥
लोणी रूचा स्मृता गुर्वी वातश्लेष्महरी पटु:।
अर्शोघ्नी दीपनी चाम्ला मन्दाग्निविषनाशिनी॥
घोटिकाम्ला सरा चोष्णा वातकृत् कफपित्त हृत्।
वाग्दोषव्रणगुल्मघ्नी श्वासकासप्रमेहनुत्।
शोथे लोचनरोगे च हिता तज्ज्ञै रुदाहृता॥

चुक्रिका।

चुक्रिका स्यात् तु पत्राम्ला रोचिनी शतवेधिनी॥
चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत्।

रुच्या लघुतरा पाके कट्वी च नाति रोचनी ॥

चिञ्चा । नाडीचवत् ।

चिञ्चा चञ्चुश्चञ्चुकी च दीर्घपत्रा सतिक्तता ॥
चञ्चुः शीता रसा रुच्या स्वादी दोषत्रयापहा ।
धातुपुष्टिकरी बल्या मेध्या पिच्छिलका च सा ॥

हिलमोचिका ।

ब्राह्मी शङ्खधरा चारी ब्राह्मी च हिलमोचिका ।
शोथं कुष्ठं कफं पित्तं हरते हिलमोचिका ॥

शितिवारः ।

शितिवारः शितिवरः स्वस्तिकः सुनिषण्णकः ।
श्रीवारकः सूचिपत्रः पर्णकः कुक्कुटः शिखी ॥
चाङ्गेरीसदृशः पत्रैश्चतुर्दल इतीरितः ।
शाको जलान्विते देशे चतुःपत्रीति चोच्यते ॥
सुनिषण्णो हिमो ग्राही मोहदोषत्रयापहः ।
अविदाही लघुः स्वादुः कषायो रूक्षदीपनः ।
वृष्यो रुच्यो ज्वरश्वासमेहकुष्ठभ्रमप्रणुत् ॥

मूलकपत्रम् ।

पाचनं लघु रुच्योष्णं पत्रं मूलकजं नवम् ।
स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत् ॥

द्रोणपुष्पीपत्रम् ।

द्रोणपुष्पीदलं स्वादु रूक्षं गुरु च पित्तकृत् ।
भेदनं कामलाशोथमेहज्वरहरं कटु ॥

यवानीपत्रम् ।

यवानीशाकमाग्नेयं रुच्यं वातकफप्रणुत् ।

उष्णं कटु च तिक्तं च पित्तलं लघु शूलहृत् ॥

चक्रमर्दः।

दद्रुघ्नपत्रं दोषघ्नमामवातकफापहम्।
कण्डूकासक्रिमिश्वासदद्रुकुष्ठप्रणुल्लघु ॥

सेहुण्डः।

सेहुण्डस्य दलं तीक्ष्णं दीपनं रोचनं हरेत्।
आध्मानाष्ठीलिकागुल्मशूलशोथोदराणि च ॥

पर्पटः।

पर्पटो हन्ति पित्तास्रज्वरतृष्णाकफभ्रमान्।
संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः ॥

गोजिह्वा। हिन्दी गोजिया शाक।

गोजिह्वा कुष्ठमेहास्रकृच्छ्रज्वरहरी लघुः ॥

पटोलपत्रम्।

पटोलपत्रं पित्तघ्नं दीपनं पाचनं लघु।
स्निग्धं वृष्यं तथोष्णञ्च ज्वरकासक्रिमिप्रणुत् ॥

गुडूचीपत्रम्।

गुडूचीपत्रमाग्नेयं सर्वज्वरहरं लघु।
कषायं कटु तिक्तञ्च स्वादुपाकं रसायनम् ॥
बल्यमुष्णञ्च संग्राहि हन्याद्दोषत्रयं तृषाम्।
दाहप्रमेहवातास्रकामलाकुष्ठपाण्डुताः ॥

कासमर्दः।

कासमर्दोऽरिमर्दश्च कासारिः कर्कशस्तथा ॥
कासमर्ददलं रुच्यं वृष्यं कासविषास्रनुत्।
मधुरं कफवातघ्नं पाचनं कण्ठशोधनम्।

विश्लेषितः कासहरं पित्तघ्नं ग्राहकं लघु ॥

चणकपत्रम् ।

हृद्यञ्चणकशाकं स्याद्दुर्जरं कफवातकृत् ।
अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथहृत् ॥

कलायपत्रम् ।

कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित् ॥

सर्षपपत्रम् ।

कटुकं सार्षपं शाकं सृष्टमूत्रमलं गुरु ।
अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषजित् ॥
सक्षारं लवणं तीक्ष्णं स्वादु शाकेषु निन्दितम् ।

अथ पुष्पशाकानि ।

अगस्तिपुष्पम् ।

अगस्तिकुसुमं शीतं चातुर्थकनिवारणम् ।
नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च ।
पीनसश्लेष्मपित्तघ्नं वातघ्नं मुनिभिर्मतम् ॥

कदलीपुष्पम् ।

कदल्याः कुसुमं स्निग्धं मधुरं तुवरं गुरु
वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत् ।
बहुमूत्रापहं हृद्यं शुक्रकृद्बलवर्द्धनम् ॥

शोभाञ्जनपुष्पम् ।

शिग्रोः पुष्पन्तु कटुकं तीक्ष्णोष्णं स्नायुशोथहृत् ।
क्रिमिहृत् कफवातघ्नं विद्रधिप्लीहगुल्मजित् ॥
मधुशिग्रोस्त्वक्चिहितं रक्तपित्तप्रसादनम् ॥

अथ फलशाकानि।

कुष्माण्डम्।

कुष्माण्डं स्यात् पुष्पफलं पीतपुष्पं बृहत्फलम्॥
कुष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातनुत्।
बालं पित्तापहं शीतं मध्यमं कफकारकम्॥
वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु।
वस्तिशुद्धिकरं चेतोरोगहृत् सर्वदोषजित्॥

कुष्माण्डी।

कुष्माण्डी तु भृशं लघ्वी कर्कारुरपि कीर्त्तिता॥
कर्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः।
पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत्॥

पीतकुष्माण्डम्।

अपरं पीतकुष्माण्डं गुरु पित्तकरं परम्।
अग्निमान्द्यकरं स्वादु श्लेष्मघ्नं वातकोपनम्॥

अलावुः।

अलावुः कथिता तुम्बी द्विधा दीर्घा च वर्त्तुला।
मिष्टतुम्बी फलं हृद्यं पित्तश्लेष्मापहं गुरु।
वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनम्॥

इक्ष्वाकुः।

इक्ष्वाकुः कटुतुम्बी स्यात् सा तुम्बी च महाफला॥
कटुतुम्बी हिमा हृद्या पित्तकासविषापहा।
तिक्ता कटुर्विपाके च वातपित्तज्वरान्तकृत्॥

एर्वारुः।

एर्वारुः कर्कटी प्रोक्ता कथ्यन्ते तद्गुणा अथ॥

ककटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः ।
रुच्या पित्तहरा सामा पक्वा तृष्णाग्निपित्तकृत् ॥

चिचिण्डः ।

चिचिण्डः श्वेतराजिः स्यात् सुदीर्घो गृहकूलकः ॥
चिचिण्डो वातपित्तघ्नो बल्यः पथ्यो रुचिप्रदः ।
शोषिणोऽतिहितः किञ्चिद् गुणैर्न्यूनः पटोलतः ॥

कारवेल्लं कारवेल्ली च ।

कारवेल्लं कठिल्लं स्यात् कारवेल्ली ततो लघुः ॥
कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् ।
ज्वरपित्तकफास्रघ्नं पाण्डुमेहक्रिमीन् हरेत् ॥
तद्गुणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः ॥

महाकोषातकी ।

महाकोषातकी प्रोक्ता हस्तिघोषा महाफला ।
धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः ॥
महाकोषातकी स्निग्धा रक्तपित्तानिलापहा ॥

राजकोषातकी ।

धामार्गवः पीतपुष्पो जालिनी कृतवेधना ।
राजकोषातकी चेति तथोक्ता राजिमत्फला ॥
राजकोषातकी शीता मधुरा कफवातला ।
पित्तघ्नी दीपनी श्वासज्वरकासक्रिमिप्रणुत् ॥

पटोलः ।

पटोलः कूलकस्तिक्तः पाण्डुकः कर्कशच्छदः ।
राजीफलः पाण्डुफलो राजेयश्चामृताफलः ।
बीजगर्भः प्रतीकश्च कुष्ठहा कासभञ्जनः ॥

पटोलं पाचनं हृद्यं वृष्यं लघ्वग्निदीपनम् ।
स्निग्धोष्णं हन्ति कासास्रज्वरदोषत्रयक्रिमीन् ॥
पटोलस्य भवेन्मूलं विरेचनकरं सुखात् ।
नालं श्लेष्महरं पत्रं पित्तहारि फलं पुनः ।
दोषत्रयहरं प्रोक्तं तद्वत्तिक्ता पटोलिका ॥

विम्बी ।

विम्बी रक्तफला तुण्डी तुण्डिकेरी च विम्बिका ।
ओष्ठोपमफला प्रोक्ता पीलुपर्णी च कथ्यते ॥
विम्बीफलं स्वादु शीतं गुरु पित्तास्रवातजित् ।
स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम् ॥

शिम्बीद्वयम् ।

शिम्बीः शिम्बी पुस्तशिम्बी तथा पुस्तकशिम्बिका ॥
शिम्बीद्वयञ्च मधुरं रसे पाके हिमं गुरु ।
बल्यं दाहकरं प्रोक्तं श्लेष्मलं वातपित्तजित् ॥

कोलशिम्बिः ।

कोलशिम्बिः कृष्णफला तथा पर्य्यङ्कपट्टिका ॥
कोलशिम्बिः समीरघ्नी गुर्व्युष्णा कफपित्तकृत् ।
शुक्राग्निसादकृद्रूक्षा रुचिकृद्बन्धविड्गुरुः ॥

शोभाञ्जनफलम् ।

शोभाञ्जनफलं स्वादु कषाय कफपित्तनुत् ।
शूलकुष्ठक्षयश्वासगुल्महृद्दीपनं परम् ॥

वार्त्ताकु. ।

वृन्ताकं स्त्री तु वार्त्ताकुर्भण्टाकी भाण्टिकापि च ॥
वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम् ।

ज्वरवातबलासघ्नं दीपनं शुक्रलं लघु ॥
तद्वालं कफपित्तघ्नं वृद्धं पित्तकरं लघु ।
वृन्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम् ॥
कफमेदोऽनिलामघ्नमत्यर्थं लघु दीपनम् ।
तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् ॥
अपरं श्वेतवृन्ताकं कुक्कुटाण्डसमं भवेत् ।
तदर्शःसु विशेषेण हितं हीनञ्च पूर्वतः ॥

डिण्डिशः ।

डिण्डिशो रोमशफलो मुनिनिर्म्मित इत्यपि ॥
डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः ।
सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ॥

पिण्डारम् ।

जलशाकविशेषः ।

पिण्डारं शीतलं बल्यं पित्तघ्नं रुचिकारकम् ।
पाके लघु विशेषेण विषशान्तिकरं स्मृतम् ॥

कर्कोटिका ।

कर्कोटिका पीतपुष्पा महाजालीति चोच्यते ॥
कर्कोटी मलहृत् कुष्ठहृल्लासारुचिनाशिनी ।
श्वासकासज्वरान् हन्ति कटुपाका च दीपनी ॥

डोडिका ।

डोडिका विषमुष्टिश्च डोडीत्यपि सुमुष्टिका ॥
डोडिका पुष्टिदा वृष्या रुच्या वह्निप्रदा लघुः ।
हन्ति पित्तकफार्शांसि क्रिमिगुल्मविषामयान् ॥

कण्टकारीफलम् ।

कण्टकारीफलं तिक्तं कटुकं दीपनं लघु ।
रूक्षोष्णं श्वासकासघ्नं ज्वरानिलकफापहम् ॥

अथ नालशाकानि ।

सर्षपनालम् ।

तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्मव्रणापहम् ।
कण्डूक्रिमिहरं दद्रुकुष्ठघ्नं रुचिकारकम् ॥

अथ कन्दशाकानि ।

सूरणः ।

सूरणः कन्द ओलश्च कन्दलोऽर्शोघ्न इत्यपि ॥
सूरणो दीपनो रूक्षः कषायः कण्डुकृत् कटुः ।
विष्टम्भी विशदो रुच्यः कफार्शःकृन्तनो लघुः ॥
विशेषादर्शसे पथ्यः प्लीहगुल्मविनाशनः ।
सर्वेषां कन्दशाकानां सूरणः श्रेष्ठ उच्यते ॥
दद्रूणां रक्तपित्तानां कुष्ठिनां न हितो हि सः ।
सन्धानयोगं सम्प्राप्तः सूरणो गुणवत्तरः ॥

आलुकम् ।

आरुकमप्यालुकं तत् कथितम् ।
काष्ठालुकशङ्खालुकहस्त्यालुकानि कथ्यन्ते ।
पिण्डालुकमध्वालुकरक्तालुकानि चोक्तानि ॥
आलुकं शीतलं सर्वं विष्टम्भि मधुरं गुरु ।
सृष्टमूत्रमलं रूक्षं दुर्जरं रक्तपित्तनुत् ।
कफानिलकरं बल्यं वृष्यं स्वल्पाग्निवर्धनम् ॥

आलुकी।

रक्तालुकभेदे पाटिया तन्वी च प्रथितालुकी॥
आलुकी बलकृत् स्निग्धा गुर्वी हृत्कफनाशिनी।
विष्टम्भकारिणी तैले लालितातिरुचिप्रदा॥

लशुनः।

लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम्।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः॥
पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः।
तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः॥
कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः।
नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः।
बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः॥
रसोनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः।
रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः॥
भग्नसन्धानकृत् कण्ठ्यो गुरुः पित्तास्रवृद्धिदः।
बलवर्णकरो मेधाहितो नेत्र्यो रसायनः॥
हृद्रोगजीर्णज्वरकुक्षिशूल-
विबन्धगुल्मारुचिकासशोफान्।
दुर्नामकुष्ठानलसादजन्तु-
समीरणश्वासकफांश्च हन्ति॥
मद्यं मांसं तथाम्लञ्च हितं लशुनसेविनाम्।
व्यायाममातपं रोषमतिनीरं पयो गुडम्।
रसोनमश्नन् पुरुषस्त्यजेदेतान्निरन्तरम्॥

पलाण्डुः ।

पलाण्डुर्यवनेष्टश्च दुर्गन्धो मुखदूषकः ।
पलाण्डुस्तु गुणैर्ज्ञेयो रसोनसदृशो गुणैः ॥
स्वादुः पाके रसेऽनुष्णः कफकृन्नातिपित्तलः ।
हरते केवलं वातं बलवीर्य्यकरो गुरु ॥

मूलकम् ।

मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम् ।
शालमर्कटकं विस्रं शालेयं मरुसम्भवम् ॥
चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका ।
नेपालमूलकं चान्यत् तद्भवेत् गजदन्तवत् ॥
लघुमूलं कटूष्णं स्याद्रुच्यं लघु च पाचनम् ।
दोषत्रयहरं स्वर्य्यं ज्वरश्वासविनाशनम् ॥
नासिकाकण्ठरोगघ्नं नयनामयनाशनम् ।
महत्तदेव रूक्षोष्णं गुरु दोषत्रयप्रदम् ॥
स्नेहसिद्धं तदेव स्याद्दोषत्रयविनाशनम् ॥

गाजरम् ।

गाजरं गृञ्जनं प्रोक्तं तथा नारङ्गवर्णकम् ॥
गाजरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु ।
संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित् ॥

कदलीकन्दः ।

शीतलः कदलीकन्दो बल्यः केश्योऽम्लपित्तजित् ।
वह्निकृद्दाहहारी च मधुरो रुचिकारकः ॥

मानकः ।

मानकः स्यान्महापत्रः कथ्यन्ते तद्गुणा अथ ।

मानकः शीतहृच्छीतः पित्तरक्तहरो लघुः ॥

वाराहीकन्दः ।

वाराही पित्तला बल्या कट्वी तिक्ता रसायनी ।
आयुःशुक्राग्निकृन्मेहकफकुष्ठानिलापहा ॥

हस्तिकर्णी ।

गजकर्णी तु तीक्ष्णोष्णा तथा वातकफाञ्जयेत् ।
शीतज्वरहरो स्वादुः पाके तस्यास्तु कन्दकः ॥
पाण्डुशोथक्रिमिप्लीहगुल्मानाहोदरापहः ।
ग्रहण्यर्शोविकारघ्नो वनसूरणकन्दवत् ॥

केमुकम् ।

केमुकं कटुकं पाके तिक्तं ग्राहि हिमं लघु ।
दीपनं पाचनं हृद्यं कफपित्तज्वरापहम् ।
कुष्ठकासप्रमेहास्रनाशनं वातलं कटु ॥

कसेरुद्वयम् ।

कसेरु द्विविधं तत्तु महद्राजकसेरुकम् ।
मुस्ताकृति लघु स्याद्यत्तच्चिचोडमिति स्मृतम् ॥
कसेरुकद्वयं शीतं मधुरं तुवरं गुरु ।
पित्तशोणितदाहघ्नं नयनामयनाशनम् ।
ग्राहि शुक्रानिलश्लेष्मरुचिस्तन्यकरं स्मृतम् ॥

पद्मादिकन्दः ।

पद्मादिकन्दः शालूकं करहाटश्च कथ्यते ।
मृणालमूलं भिस्साण्डं शालूकं तत् प्रकथ्यते ॥
शालूकं शीतलं वृष्यं पित्तदाहास्रनुद्गुरु ।
दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् ॥

तथाहि मधुरं रूक्षं भिस्माण्डमपि तद्गुणम् ।
बालं ह्यनार्त्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ॥
कन्दं विवर्जयेत् सर्वं यद्वाग्न्यादिविदूषितम् ।
अतिजीर्णमकालोत्थं रूक्षं सिन्धुप्रदेशजम् ॥
कर्कशं कोमलं चातिशीतव्यालादिदूषितम् ।
संशुष्कं सकलं शाकं नाश्नीयान्मूलकं विना ॥

संस्वेदजम् ।

उक्तं संस्वेदजं शाकं भूमिच्छत्रं शिलीन्ध्रकम् ।
क्षितिगोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत् ॥
सर्वे संस्वेदजाः शीता दोषला पिच्छलाश्च ते ।
गुरवश्छर्द्यतीसारज्वरश्लेष्मामयप्रदाः ॥
श्वेताः शुभ्रस्थलीकाष्ठवंशगोव्रजसम्भवाः ।
नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः ॥

---

# सप्तविंशोऽध्यायः ।

---

अथ धान्यवर्गः ।

तत्र धान्यानां भेदाः ।

शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम् ।
शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् ॥
शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः ।

यवादिकं शूकधान्यं मुद्गाद्य शिम्बिधान्यकम् ।
कङ्ग्वादिकं क्षुद्रधान्य तृणधान्यञ्च तत् स्मृतम् ॥

तत्र शालिधान्यस्य लक्षणं गुणाश्च ।

कण्डनेन विना शुक्ला हैमन्ताः शालयः स्मृताः ॥

तत्र शालीनां नामानि ।

रक्तशालि स कलम पाण्डुकः शकुनाहृतः ।
सुगन्धकः कर्द्दमको महाशालिश्च दूषकः ॥
पुष्पाण्डकः पुण्डरीकस्तथा महिषमस्तकः ।
दीर्घशूक काञ्चनको हायनो लोध्रपुष्पकः ॥
इत्याद्याः शालयः सन्ति बहवो बहुदेशजाः ।
ग्रन्थविस्तरभीतेस्ते समस्ता नात्र भाषिताः ॥

तेषां गुणाः ।

शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्चसः ।
कषाया लघवो रुच्याः स्वर्य्या वृष्याश्च बृंहणाः ॥
अल्पानिलकफा शीताः पित्तघ्ना मूत्रलास्तथा ।
शालयो दग्धमृज्जाताः कषाया लघुपाकिनः ॥
सृष्टमूत्रपुरीषाश्च रूक्षाः श्लेष्मापकर्षणाः ।
कैदारा (१) वातपित्तघ्ना गुरव कफशुक्रलाः ॥
कषाया अल्पवर्चस्का मेध्याश्चैव बलावहाः ।
स्थलजा (२) स्वादवः पित्तकफघ्ना वातपित्तदाः ॥
किञ्चित् तिक्ता कषायाश्च विपाके कटुका अपि ।
वापिता मधुरा वृष्या बल्याः पित्तप्रणाशनाः ॥

---

(१) कैदारा क्षेत्रजा शाः ।

(२) वापिताः क्षेत्रे अक्षेत्रे च ।

स्वेमलाश्चाल्पवर्चस्काः कषाया गुरवो हिमाः ।
वापितेभ्यो (२) गुणैः किञ्चिद्धीनाः प्रोक्ता अवापिताः ॥
रोपितास्तु नवा वृष्याः पुराणा लघवः स्मृताः ।
तेभ्यस्तु रोपिता भूयः शीघ्रपाका गुणाधिकाः ॥
छिन्नरूढ़ा हिमा रूक्षा बल्याः पित्तकफापहाः ।
बन्धविट्काः कषायाश्च लघवश्चाल्पतिक्तकाः ॥

रक्तशालिः ।

रक्तशालिर्वरस्तेषु बल्यो वर्ण्यस्त्रिदोषजित् ।
चक्षुष्यो मूत्रलः स्वर्य्यः शुक्रलस्तृड्ज्वरापहः ॥
विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः ।
तस्मादल्पान्तरगुणाः शालयो महदादयः ॥

रक्तशालिः दाउदखानि इति लोके मगधदेशे प्रसिद्धः ।

व्रीहिधान्यम् ।

वार्षिकाः कण्डिताः शुक्ला व्रीहयश्चिरपाकिनः ।
कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि ॥
शालामुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ।
कृष्णव्रीहिः स विज्ञेयो यः कृष्णतुषतण्डुलः ॥
पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते ।
कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते ॥
शालामुखः कृष्णशूकः कृष्णतण्डुल उच्यते ।
लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः ॥
व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः ।

(२) कृष्टचेत्रे अकृष्टचेत्रे वा ।

अल्पाभिष्यन्दिनो बद्धवर्चस्का षष्टिकैः समाः ।
कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे ॥

षष्टिका ।

गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः ।
षष्टिकं शतपुष्पश्च प्रमोदकमुकुन्दकौ ॥
महाषष्टिक इत्याद्या षष्टिकाः समुदाहृताः ।
एतेऽपि व्रीहयः प्रोक्ता व्रीहिलक्षणदर्शनात् ॥
षष्टिका मधुराः शीता लघवो बद्धवर्चसः ।
वातपित्तप्रशमना शालिभिः सदृशा गुणैः ॥
षष्टिका प्रवरा तेषां लघ्वी स्निग्धा त्रिदोषजित् ।
स्वाद्वी मृद्वी ग्राहिणी च बलदा ज्वरहारिणी ।
रक्तशालिगुणैस्तुल्या ततः स्वल्पगुणाः परे ॥
षष्टिका साटी इति लोके ।

क्षुद्रधान्यम् ।

क्षुद्रधान्यं कुधान्यञ्च तृणधान्यमिति स्मृतम् ॥
क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम् ।
मधुरं कटुकं पाके रूक्षञ्च क्लेदशोषकम् ।
वातकृद्बद्धविट्कञ्च पित्तरक्तकफापहम् ॥

कङ्गुः । हिन्दी कङ्गुनी ।

स्त्रियां कङ्गुप्रियङ्गू द्वे कृष्णा रक्ता सिता तथा ।
पीता चतुर्विधा कङ्गुस्तासां पीता वरा स्मृता ॥
कङ्गुस्तु भग्नसन्धानवातकृद्‌बृंहणी गुरुः ।
रूक्षा श्लेष्महरातीव वाजिनां गुणकृद्भृशम् ॥

चीनकः । हिन्दी चाना ।

चीनकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद्गुणैः ॥

श्यामाकः ।

श्यामाकः शोषणो रूक्षो वातलः कफपित्तहृत् ॥

कोद्रवः ।

कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः ॥

कोद्रवो वातलो ग्राही हिमः पित्तकफापहः ।

उद्दालस्तु भवेदुष्णो ग्राही वातकरो भृशम् ॥

चारुकः ।

चारुकः शरबीजं स्यात् कथ्यन्ते तद्गुणा अथ ॥

चारुको मधुरो रूक्षो रक्तपित्तकफापहः ।

शीतलो लघुरुष्यश्च कषायो वातकोपनः ॥

वंशबीजम् ।

यवा वंशभवा रूक्षाः कषायाः कटुपाकिनः ।

बद्धमूत्राः कफघ्नाश्च वातपित्तकराः सराः ॥

शूकधान्यम् ।

यवः ।

यवस्तु सितशूकः स्यान्निःशूकोऽतियवः स्मृतः ।

तोक्यस्तद्वत् स हरितस्तनुः स्वल्पश्च कीर्त्तितः ॥

यवः कषायो मधुरः शीतलो लेखनो मृदुः ।

व्रणेषु तिलवत् पथ्यो रूक्षो मेधाग्निवर्द्धनः ॥

कटुपाकोऽनभिष्यन्दी स्वर्य्यो बलकरो गुरुः ।

बहुवातमलो वर्ण्यः स्थैर्य्यकारी च पिच्छिलः ॥

कण्ठत्वगामयश्लेष्मपित्तमेदःप्रणाशनः ।

पीनसश्वासकासोरुस्तम्भलोहिततृट्प्रणुत् ।
तस्मादतियवो न्यूनस्तोक्यो न्यूनतरस्ततः ॥

गोधूमः ।

गोधूमः सुमनोऽपि स्यात् त्रिविधः स च कीर्त्तितः ।
महागोधूम इत्याख्यः पश्चाद्देशात् समागतः ॥
मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा ।
निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः ॥
गोधूमो मधुरः शीतो वातपित्तहरो गुरुः ।
कफपित्तप्रदो बल्यः स्निग्धः सन्धानकृत् सरः ।
जीवनो बृंहणो वर्ण्यो व्रण्यो रुच्यः स्थिरत्वकृत् ॥

कफप्रदो नवीनो नतु पुराणः पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुगिति वाग्भटेन वसन्ते गृहीतत्वात् ।

मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः ।
शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखः स्मृतः ॥

शिम्बीधान्यम् ।

शमीजाः शिम्बिजाः शिम्बीभवाः सूप्याश्च वैदलाः ॥
वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः ।
वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः ।
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारिणः ॥

मुद्गमसूरयोराध्मानकारित्वमन्यवैदलापेक्षया नतु सर्वथा एतयोरपि किञ्चिदाध्मानकारित्वात् ।

मुद्गः ।

मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः ।

स्वादुरल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा ॥
मुद्गो बहुविधः श्यामो हरितः पीतकस्तथा ।
श्वेतो रक्तश्च तेषान्तु पूर्वः पूर्वो लघुः स्मृतः ॥
सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः
चरकादिभिरप्युक्त एष एव गुणाधिकः ॥

माषः ।

माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः ।
स्रंसनस्तर्पणो बल्यः शुक्रलो बृंहणः परः ॥
भिन्नमूत्रमलस्तन्यो मेदःपित्तकफप्रदः
गुदकीलार्दितश्वासपंक्तिशूलानि नाशयेत् ॥
कफपित्तकरा माषाः कफपित्तकरं दधि ।
कफपित्तकरा मत्स्या वृन्ताकं कफपित्तकृत् ॥

राजमाषः ।

बोडा यस्य च वैरातरा लोबिया

इत्यादयो भेदाः ।

राजमाषो महामाषश्चपलश्चवलः स्मृतः ॥
राजमाषो गुरुः स्वादुस्तुवरस्तर्पणः सरः ।
रूक्षो वातकरो रुच्यः स्तन्यभूरिबलप्रदः ॥
श्वेतो रक्तस्तथा कृष्णस्त्रिविधः स प्रकीर्त्तितः ।
यो महांस्तेषु भवति स एवोक्तो गुणाधिकः ॥

निष्पावः ।

स तु राजशिम्बी बीजं भेटवासु इति लोके ।

निष्पावो राजशिम्बिः स्याद्वल्लकः श्वेतशिम्बिकः ॥
निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः ।

कषायः स्तन्यपित्तास्रमूत्रवातविबन्धकृत्।
विदाह्युष्णो विषश्लेष्मशोथहृच्छुक्रनाशनः॥

मकुष्टकः।

मकुष्टो वनमुद्गः स्यान्मकुष्ठकमुकुष्टकौ॥
मकुष्टो वातलो ग्राही कफपित्तहरो लघुः।
वान्तिजिन्मधुरः पाके क्रमिकृज्ज्वरनाशनः॥
तथा कषायत्वं रक्तपित्तहरत्वं पथ्यत्वञ्चाप्यस्य गुणाः।

मसूरः। हिन्दी मसूरी।

मङ्गल्यको मसूरः स्यान्मङ्गल्या च मसूरिका॥
मसूरो मधुरः पाके संग्राही शीतलो लघुः।
कफपित्तास्रजिद्रूक्षो वातलो ज्वरनाशनः॥

आढ़की। हिन्दी रहरी।

आढ़की तुवरी चापि सा प्रोक्ता शणपुष्पिका॥
आढ़की तुवरा रूक्षा मधुरा शीतला लघुः।
ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित्॥

चणकः।

चणको हरिमन्थः स्यात् सकलप्रिय इत्यपि॥
चणकः शीतलो रूक्षः पित्तरक्तकफापहः।
लघुः कषायो विष्टम्भी वातलो ज्वरनाशनः॥
स चाङ्गारेण संभृष्टस्तैलभृष्टस्तु तद्गुणः।
आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तितः॥
शुष्कभृष्टोऽतिरूक्षश्च वातकुष्ठप्रकोपणः।
स्विन्नः पित्तकफं हन्यात् सूपः क्षोभकरो मतः॥
आर्द्रोऽतिकोमलो रुच्यः पित्तशुक्रहरो हिमः।

कषायो वातलो ग्राही कफपित्तहरो लघुः ॥

कलायः ।

कलायो वर्त्तुलः प्रोक्तः स तिलश्च हरेणुकः ।
कलायो मधुरः स्वादुः पाके रूक्षश्च शीतलः ॥

त्रिपुटः ।

त्रिपुटः खण्डिकोऽपि स्यात् कथ्यन्ते तद्गुणा अथ ।
त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् ॥
कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा ।
किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ॥

कुलत्थः ।

कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथः ॥
कुलत्थः कटुकः पाके कषायः पित्तरक्तकृत् ।
लघुर्विदाही वीर्य्योष्णः श्वासकासकफानिलान् ॥
हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान् ।
स्वेदसंग्राहको मेदोज्वरक्रिमिहरः परः ॥

कुसुम्भवीजम् ।

कुसुम्भवीजं वरटा सैव प्रोक्ता वरट्टिका ॥
वरटा मधुरा स्निग्धा-रक्तपित्तकफापहा ।
कषाया शीतला गुर्वी स्याद्बल्यानिलापहा ॥

गवेधुका ।

गवेधुका तु विद्वद्भि र्गवेधुः कथिता स्त्रियाम् ।
गवेधुः कटुका स्वाद्वी कार्श्यकृत् कफनाशिनी ॥

तिलः ।

तिलः कृष्णः सितो रक्तः स वन्योऽल्पतिलः स्मृतः ॥

तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः
विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत्।
बल्यः केश्यो हिमस्पर्शस्त्वच्यः स्तन्यो व्रणे हितः।
दन्त्योऽल्पमूत्रकृद्‌ग्राही वातघ्नोऽग्निमतिप्रदः॥
कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः।
अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः॥

अतसी।

अतसी नीलपुष्पी च पार्व्वती स्यादुमा क्षुमा।
अतसी मधुरा तिक्ता स्निग्धा पाके कटुर्गुरुः।
उष्णा दृक्शुक्रवातघ्नी कफपित्तविनाशिनी॥

सर्षपः।

सर्षपः कटुकः स्नेहस्तुन्तुभश्च कदम्बकः।
गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते॥
सर्षपस्तु रसे पाके कटुः स्निग्धः स तिक्तकः।
तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः॥
रूक्षो हरेद्‌ग्रहं कण्डूं कुष्ठकोष्ठक्रिमिग्रहान्।
यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः॥

राजिका।

राजी तु राजिका तीक्ष्णगन्धा क्षुज्जनिकासुरी।
क्षवः क्षुताभिजनकः क्रिमिहृत् कृष्णसर्षपः।
राजिका कफपित्तघ्नी तीक्ष्णोष्णा रक्तपित्तकृत्।
किञ्चिद्रूक्षाग्निदा कण्डूकुष्ठकोष्ठक्रिमीन् हरेत्।
अतितीक्ष्णा विशेषेण तद्वत् कृष्णापि राजिका

नूतनपुरातनधान्यानां गुणाः ।

धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम् ।
तत्तु वर्षोषितं पथ्यं यतो लघुतरं हि तत् ॥
वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति ।
न तु त्यजति वीर्य्यं स्वं क्रमान्मुञ्चत्यतः परम् ॥
एतेषु यवगोधूमतिलमाषा नवा हिताः ।
पुराणा विरसा रूक्षा न तथा गुणकारिणः ॥

पुराणा वर्षद्वयादुपरिस्थिताः । यवादयो नवाः स्वस्थान् प्रति हिताः । पथ्याशिनान्तु पुराणा हिताः ।

निवारः । हिन्दी तीनी ।

प्रसाधिका तु नीवारस्तृणान्नमिति च स्मृतम् ।
नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ॥

यवनालः ।

यवनालो हिमः स्वादुर्लोहितः श्लेष्मपित्तजित् ।
अवृष्यस्तुवरो रूक्षः क्लेदकृत् कथितो लघुः ॥

लाजाः ।

येषां स्युस्तण्डुलास्तानि धान्यानि सतुषाणि च ।
भृष्टानि स्फुटितान्याहुर्लाजानिति मनीषिणः ॥
लजाः स्युर्मधुराः शीता लघवो दीपनाश्च ते ।
स्वल्पमूत्रमला रूक्षा बल्या पित्तकफच्छिदः ।
छर्द्यतीसारदाहास्रमेहमेदस्तृषापहाः ॥

चिपिटकः ।

शालयः सतुषा आर्द्रा भृष्टा अस्फुटिताश्च तत् ।
कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि ॥

पृथुका गुरवो वातनाशनाः श्लेष्मला अपि ।
सक्षीरा बृंहणा वृष्या बल्याः संग्राहिणश्च ते ॥

## अष्टाविंशोऽध्यायः ।

### अथ मांसवर्गः ।

मांसं तु पिशितं क्रव्यमामिषं पललं पलम् ॥
मांसं वातहरं सर्वं बृंहणं कफपुष्टिकृत् ।
प्रीणनं गुरु हृद्यञ्च मधुरं रसपाकयोः ॥

### जाङ्गलाः ।

मांसवर्गोऽत्र जाङ्गला बिलस्थाश्च गुहाशयाः ।
तथा पर्णमृगा ज्ञेया विष्किरा प्रतुदोऽपि च ।
प्रसहा अथ च ग्राम्या षष्टो जाङ्गलजातयः ॥
जाङ्गला मधुरा रूक्षास्तुवरा लघवस्तथा ।
बल्यास्ते बृंहणा वृष्या दीपना दोषहारिणः ॥
मूकता मिन्मिनत्वं च गद्गदत्वादितं तथा ।
बाधिर्य्यमरुचिच्छर्दिंप्रमेहान् मुखजान् गदान् ।
श्लीपदं गलगण्डञ्च नाशयत्यनिलामयान् ॥

### आनूपाः ।

कूलेचराः प्लवाश्चापि कोषस्थाः पादिनस्तथा ।
मत्स्या एते समाख्याताः पञ्चधानूपजातयः ॥
आनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः ।

श्लेष्मला पिच्छलाश्चापि मांसपुष्टिप्रदा भृशम्।
तथाभिष्यन्दिनस्ते हि प्रायःपथ्यतमाः स्मृताः॥

जाङ्गलाः।

हरिणैनकुरङ्गर्ष्यपृषतन्यङ्कुसम्बराः।
राजीवोऽपि च मुण्डी चेत्याद्या जङ्गालसंज्ञकाः॥
हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्त्तितः।
कुरङ्ग एष ताम्रः स्यादेणतुल्याकृतिर्महान्॥
ऋष्यो नीलाण्डको लोके सरोहेति कीर्त्तितः।
पृषतश्चन्द्रविन्दुः स्याद्धरिणात् किञ्चिदल्पकः॥
न्यङ्कुर्बहुविषाणोऽथ सम्बरो गवयाकृतिः।
राजीवस्तु मृगः ज्ञेयो राजिभिः परितोवृतः।
यो मृगः शृङ्गहीनः स्यात् स मुण्डीति निगद्यते॥
जाङ्गलाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः।
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः॥

विलेशयाः।

गोधाशशभुजङ्गाखुशल्लक्याद्या विलेशयाः॥
विलेशया वातहरा मधुरा रसपाकयोः।
बृंहणा बद्धविण्मूत्रा वीर्य्योष्णाश्च प्रकीर्त्तिताः॥

गुहाशयाः।

सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा।
बभ्रूजम्बुकमार्जारा इत्याद्याः स्युर्गुहाशयाः॥
स्थूलपुच्छो रक्तनेत्रो बभ्रूभेदः स नाकुलः॥
गुहाशया वातहरा गुरूष्णा मधुराश्च ते।
स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारिणाम्॥

पर्णमृगाः।

वनौकोवृक्षमार्जारवृक्षमर्कटिकादयः।
इति पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः॥
मृताः पर्णमृगा वृष्याश्चक्षुष्याः शोषिणे हिताः।
श्वासार्शःकासशमनाः सृष्टमूत्रपुरीषकाः॥

विष्किराः।

वर्त्तकालाववर्त्तीरकपिञ्जलकतित्तिराः।
कुलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः॥
विकीर्य्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः।
कपिञ्जल इति प्राज्ञैः कथिता गौरतित्तिरिः॥
विष्किरा मधुराः शीताः कषाया कटुपाकिनः।
बल्या वृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः स्मृताः॥

प्रतुदाः।

हारीतो धवलः पाण्डुश्चित्रपक्षो बृहच्छुकः।
पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः॥
प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः॥
प्रतुदा मधुराः पित्तकफघ्नास्तुवरा हिमाः।
लघवो बद्धवर्चस्काः किञ्चिद्वातकराः स्मृताः॥

प्रसहाः।

काको गृध्र उलूकश्च चिल्लश्च शशघातकः।
चासो भासश्च कुरव इत्याद्याः प्रसहाः स्मृताः॥
प्रसहाः कीर्त्तिता एते प्रसह्याच्छिद्य भक्षणात्॥
प्रसहाः खलु वीर्य्योष्णास्तन्मांसं भक्षयन्ति ये।
ते शोषभस्मकोन्मादशुक्रक्षीणा भवन्ति हि॥

ग्राम्याः।

छागमेषवृषाश्वाद्या ग्राम्याः प्रोक्ता महर्षिभिः॥
ग्राम्या वातहराः सर्वे दीपनाः कफपित्तलाः।
मधुरा रसपाकाभ्यां बृंहणा बलवर्द्धनाः॥

कूलेचराः।

लुलापगण्डवाराहचमरीवारणादयः।
एते कूलचराः प्रोक्ताः यतः कूले चरन्त्यपाम्॥
कूलेचरा मरुत्पित्तहरा वृष्या बलावहाः।
धुराश्च शीतलाः स्निग्धा मूत्रलाः श्लेष्मवर्द्धनाः॥

प्लवाः।

हंससारसकारण्डवकक्रौञ्चशरारिकाः।
नन्दीमुखी सकादम्बा बलाकाद्याः प्लवाः स्मृताः।
प्लवन्ति सलिले यस्मादेते तस्मात् प्लवाः स्मृताः॥
स्थूला कठोरवृत्ता च यस्याश्चञ्चूपरिस्थिता।
घटिका जम्बुसदृशी प्रोक्ता नन्दीमुखीति सा॥
प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः।
वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः॥

कोषस्थाः।

शङ्खः शङ्खनखश्चापि शुक्तिशम्बूककर्कटाः।
जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिताः॥
कोषस्था मधुराः स्निग्धा वातपित्तहरा हिमाः।
बृंहणा बहुवर्चस्का वृष्याश्च बलवर्द्धनाः॥

पादिनः।

कुम्भीरकूर्मनक्राश्च गोधामकरशङ्कवः।

घडि्टक. शिशुमारश्चेत्यादय: पादिन: स्मृता ॥
पादिनोऽपि च ये ते तु कोषस्थानां गुणै: समा: ॥

मत्स्य: ।

मत्स्यो मीनो विसारश्च झषो वैसारिणोऽण्डज: ।
शकुली पृथुरोमा च स सुदर्शन इत्यपि ।
रोहिताद्यास्तु ये जीवास्ते मत्स्या: परिकीर्त्तिता: ॥
मत्स्या: स्निग्धोष्णमधुरा गुरव: कफपित्तला: ।
वातघ्ना बृंहणा वृष्या रोचका बलवर्द्धना: ॥
मद्यव्यवायसक्तानां दीप्ताग्नीनाञ्च पूजिता: ।

अथ जाङ्गलादीनां नामानि गुणाश्च ।

हरिण: ।

हरिण शीतलो बद्धविण्मूत्रो दीपनो लघु: ।
रसे पाके च मधुर: सुगन्धि: सन्निपातहा ॥

एण: ।

एण: कषायो मधुर: पित्तास्रकफवातहृत् ।
संग्राही रोचनो बल्यो ज्वरप्रशमन: स्मृत: ॥

कुरङ्ग: ।

कुरङ्गो बृंहणो बल्य: शीतल: पित्तहृद्गुरु: ।
मधुरो वातहृद्ग्राही किञ्चित्कफकर: स्मृत: ॥

ऋष्य: । हिन्दी रोज ।

ऋष्यो नीलाण्डकश्चापि गवयो रोज इत्यपि ।
गवयो मधुरो बल्य: स्निग्धोष्ण: कफपित्तल: ॥

पृषत: । हिन्दी चित्तरि ।

पृषतस्तु भवेत् स्वादुर्ग्राहक: शीतलो लघु: ।

दीपनो रोचनः श्वासज्वरदोषत्रयास्रजित् ॥

न्यङ्कुः । हिन्दी वाराहसिङ्गा ।

न्यङ्कुः स्वादुर्लघुर्बल्यो हृष्यो दोषत्रयापहः ॥

सावरम् ।

सावरं पललं स्निग्धं शीतलं गुरु च स्मृतम् ।
रसे पाके च मधुरं कफदं रक्तपित्तहृत् ॥

राजीवः ।

राजीवस्तु गुणैर्ज्ञेयः पृषतेन समो जनैः ॥

मुण्डी ।

मुण्डी तु ज्वरकासास्रक्षयश्वासापहो हिमः ॥

विलेशयाः ।

शशः ।

लम्बकर्णः शशः शूली लोमकर्णो विलेशयः ॥
शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा हितः ।
वह्निकृत् कफपित्तघ्नो वातसाधारणः स्मृतः ।
ज्वरातिसारदुष्टास्रश्वासामयहरश्च सः ॥

शल्यकः ।

सेधा तु शल्यकः श्वावित् कथ्यन्ते तद्गुणा अथ ।
शल्यकः श्वासकासास्रशोषदोषत्रयापहः ॥

अथ पक्षिणां नामानि गुणाश्च ।

पक्षी खगो विहङ्गश्च विहगश्च विहङ्गमः ।
शकुनिर्विः पतत्री च विष्किरो विकिरोऽण्डजः ॥
धान्वक्षेत्रचरा येऽत्र तेषां मांसं लघूत्तमम् ।
आनूपं बलकृन्मांसं स्निग्धं गुरुतरं स्मृतम् ॥

वर्त्तकः ।

वर्त्तीको वर्त्तकश्चित्रस्ततोऽल्या वर्त्तका स्मृता ॥
वर्त्तकोऽग्निकरः शीतो ज्वरदोषत्रयापहः ।
सुहृद्यः शुक्रदो बल्यो वर्त्तकाल्पगुणा ततः ॥

लावाः ।

लावा विष्किरवर्गेषु ते चतुर्धा मता बुधैः ।
पांशुलो गौरकोऽन्यस्तु पौण्ड्रको दर्भरस्तथा ॥
लावा वह्निकराः स्निग्धा गरघ्ना ग्राहिका हिताः ।
गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् ॥
पौण्ड्रकः पित्तकृत् किञ्चिल्लघुर्वातकफापहः ।
दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः ॥

वर्त्तिचटकः ।

वालीको वर्त्तिचटको वार्त्तीकश्चैव स स्मृतः ।
वालीको मधुरः शीतो रूक्षश्च कफपित्तनुत् ॥

कृष्णतित्तिरिः गौरतित्तिरिश्च ।

तित्तिरिः कृष्णवर्णः स्याच्चित्रोऽन्यो गौरतित्तिरिः ॥
तित्तिरिर्बलदो ग्राही हिक्कादोषत्रयापहः ।
श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः ॥

चटकः ।

चटकः कलविङ्कः स्यात् कुलिङ्गः कालकण्ठकः ॥
कुलिङ्गः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः ।
सन्निपातहरो वेश्मचटकश्चापि शुक्रलः ॥

कुक्कुटवनकुक्कुटौ ।

कुक्कुटः कृकवाकुः स्यात् कलज्ञश्चरणायुधः ।

ताम्रचूडस्तथा दक्षः प्रातर्णादी शिखण्डिकः ॥
कुक्कुटो बृंहणः स्निग्धो वीर्य्योष्णोऽनिलहृद्गुरुः ।
चक्षुष्यः शुक्रकफकृद्बल्यो वृष्यः कषायकः ॥
अरण्यकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः ।
वातपित्तक्षयवमिविषमज्वरनाशनः ॥

प्रतुदयाः ।

हारीतः । हिन्दी हारील् ।

हारीतो रक्तकण्ठः स्याद्धरितोऽपि स कथ्यते ॥
हारीतो रूक्ष उष्णश्च रक्तपित्तकफापहः ।
स्वेदस्वरकरः प्रोक्त ईषद्वातकरश्च सः ॥

पाण्डुधवलपाण्डू ।

पाण्डुस्तु द्विविधो ज्ञेयश्चित्रपक्षः कलध्वनिः ।
द्वितीयो धवलः प्रोक्तः स कपोतः स्फुटस्वनः ॥
चित्रपक्षः कफहरो वातघ्नो ग्रहणीप्रणुत् ।
धवलः पाण्डुरुद्दिष्टो रक्तपित्तहरो हिमः ॥

मयूरः ।

मयूरश्चन्द्रकी केकी मेघरावी भुजङ्गभुक् ।
शिखी शिखावलो वर्ही शिखण्डी नीलकण्ठकः ॥
शुक्लापाङ्गः कलापी च मेघनादानुलास्यपि ।
रसे पाके च मधुरः संग्राही वातशान्तिकृत् ॥

पारावतः ।

पारावतः कलरवः कपोतो रक्तवर्द्धनः ॥
पारावतो गुरुः स्निग्धो रक्तपित्तानिलापहः ।
संग्राही शीतलस्तज्ज्ञैः कथितो वीर्य्यवर्द्धनः ॥

पच्यण्डस्य गुणाः ।

नातिस्निग्धानि वृष्याणि स्वादुपाकरसानि च ।
वातघ्नान्यतिशुक्राणि गुरून्यण्डानि पक्षिणाम् ॥

ग्राम्याः ।

छागः ।

छागलो बर्करश्छागो वस्तोऽजश्छेलकः स्तुभः ।
अजा छागी स्तुभा चापि छेलिका च गलस्तनी ॥
छागमांस लघु स्निग्धं स्वादुपाक त्रिदोषनुत् ।
नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् ॥
परं बलकरं रुच्यं बृंहणं वीर्य्यवर्द्धनम् ।
अजाया अप्रसूता या मांसं पीनसनाशनम् ॥
शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् ।
अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् ॥
हृद्य ज्वरहरं श्रेष्ठं सुखदं बलदं भृशम् ।
मास निष्काशिताण्डस्य छागस्य कफकृद्गुरु ॥
स्रोतःशुद्धिकरं बल्य मांसद वातपित्तनुत् ।
वृद्धस्य वातलं रूक्षं तथा व्याधिमृतस्य च ॥
ऊर्द्ध्वजत्रुविकारघ्नं छागमुण्ड रुचिप्रदम् ।
शुक्रला वृक्ककोषाः स्युर्यकृन्नेत्रहितं मतम् ॥

मेढ्रः ।

मेढ्रो मेढो हुड़ो मेष उरणोऽप्येड़कोऽपि च ।
अविर्वृष्टिस्तथोर्णायुः कथ्यन्ते तद्गुणा अथ ॥
मेषस्य मांसं पुष्टौ स्यात् पित्तश्लेष्मकरं गुरु ।
तस्यैवाण्डविहीनस्य मांसं किञ्चिल्लघु स्मृतम् ॥

एड़कः । हिन्दी दुम्बा ।

एड़कः पृथुशृङ्गः स्यान्मेदःपुच्छस्तु दुम्बकः ।
एड़कस्य पलं ज्ञेयं मेषामिषसमं गुणैः ॥
मेदःपुच्छोद्भवं मांसं हृद्यं वृष्यं श्रमापहम् ।
पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशनम् ॥

बलीवर्दः ।

बलीवर्दस्तु वृषभऋषभश्च तथा वृषः ।
अनड्वान् सौरभेयश्च गौरुक्षा भद्र इत्यपि ॥
सुरभिः सौरभेयी च माहेयी गौरुदाहृता ॥
गोमांसन्तु गुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम् ।
बृंहणं वातहृद्बल्यमपथ्यं पीनसप्रणुत् ॥

घोटकः ।

घोटकः पीतितुरगतुरङ्गाश्च तुरङ्गमः ।
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ॥
अश्वमांसन्तु तुवरं वह्निकृत् कफपित्तलम् ।
वातहृद्बृंहणं बल्यं चक्षुष्यं मधुरं लघु ॥

कूलेचरवर्गः ।

महिषः ।

महिषो घोटकारिः स्यात् कासरश्च रजस्वलः ।
पीनस्कन्धः कृष्णकायो लुलापो यमवाहनः ॥
महिषस्यामिषं स्वादु स्निग्धोष्णं वातनाशनम् ।
निद्राशुक्रप्रदं बल्यं तनुदार्ढ्यकरं गुरु ।
हृष्यञ्च सृष्टविण्मूत्रं वातपित्तास्रनाशनम् ॥

मण्डूकः ।

मण्डूकः प्लवगो भेको वर्षाभूर्दर्दुरो हरिः ।
मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः ॥

कच्छपः ।

कच्छपो गूढपात् कूर्म्मः कमठो दृढपृष्ठकः ।
कच्छपो बलदो वातपित्तनुत् पुंस्त्वकारकः ॥

सद्योहतस्य मांसम् ।

सद्योहतस्य मांसं स्यात् व्याधिघाति यथामृतम् ।
वयस्थं बृंहणं सात्म्यमन्यथा तद्विवर्जयेत् ॥

स्वयंमृतस्य मांसम् ।

स्वयं मृतस्य चाबल्यमतीसारकरं गुरु ॥

वृद्धबालमांसम् ।

वृद्धानां दोषलं मांसं बालानां बलदं लघु ॥

विषादिमृतस्य मांसम् ।

सर्पदष्टस्य मांसञ्च शुष्कमांसं त्रिदोषकृत ।
व्यालदष्टञ्च दुष्टञ्च शुष्कं शूलकरं परम् ।
विषाम्बुरुङ्मृतस्यैतन्मृत्युदोषरुजाकरम् ।
क्लिन्नमुत्क्लेशजनकं कृशं वातप्रकोपनम् ।
तोयपूर्णशिराजालं मृतमप्सु त्रिदोषकृत् ॥
विहङ्गेषु पुमान् श्रेष्ठः स्त्रीचतुष्पदजातिषु ।
परार्द्धं लघु पुंसां स्यात् स्त्रीणां पूर्वार्द्धमादिशेत् ॥
देहमध्यं गुरुप्रायं सर्वेषां प्राणिनां स्मृतम् ।
पक्षक्षेपाद्विहङ्गानां तदेव लघु कथ्यते ॥
गुरुण्यण्डानि सर्वेषां गुर्व्वी ग्रीवा च पक्षिणाम् ।

उर स्कन्धोदर कुक्षी पादौ पाणी कटी तथा ॥
पृष्ठत्वग्यकृदन्त्राणि गुरूणीह यथोत्तरम्।
लघुवातकर मांसं खगानां धान्यचारिणाम् ॥
मत्स्याशिना पित्तकर वातघ्नं गुरु कीर्त्तितम।
फलाशिनां श्लेष्मकर लघु रूक्षमुदीरितम् ॥
बृंहणं गुरु वातघ्नं तेषामेव फलाशिनाम्।
तुल्यजातिष्वल्पदेहा महादेहेषु पूजिताः।
अल्पदेहेषु शस्यन्ते तथैव स्थूलदेहिनः ॥

मत्स्यवर्गः।

रोहितः।

रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः।
क्ष्णपुच्छो ऋटषश्रेष्ठो रोहितः कथितो बुधैः ॥
रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्त्तिजित्।
कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत्।
ऊर्द्ध्वजत्रुगतान्रोगान् हन्याद्रोहितमुण्डकम् ॥

शिलीन्ध्रः।

शिलीन्ध्रः श्लेष्मलो बल्यो विपाके मधुरो गुरुः।
वातपित्तहरो हृद्य आमवातकरश्च सः ॥

भङ्कूरमत्स्य।

भङ्कूरो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः।
विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः ॥

मोचिका।

मोचिका वातहृद्रुच्या बृंहणी मधुरा गुरुः।
पित्तहृत् कटुकहृच्या वृष्या दीप्ताग्नये हिता ॥

पाठीनः ।

पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशनः ।
दूषयेद्रुधिरं पित्तकुष्ठरोगं करोति च ॥

शृङ्गी ।

शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपनी ।
रसे तिक्ता कषाया च लघ्वी रुच्या स्मृता बुधैः ॥

इल्लिशः ।

इल्लिशो मधुरः स्निग्धो रोचनो बलवर्द्धनः ।
कफपित्तकरो वृष्यो दुर्जरस्त्वनिलापहः ॥

शष्कुली ।

शष्कुली ग्राहिणी हृद्या मधुरा तुवरा स्मृता ॥

गर्गरः ।

गर्गरः पित्तलः किञ्चिद्वातजित् कफकोपनः ॥

कविका ।

कविका मधुरा स्निग्धा कफघ्ना रुचिकारिणी ।
किञ्चित् पित्तकरी वातनाशिनी वह्निवर्द्धिनी ॥

वर्मिमत्स्यः ।

वर्म्मिमत्स्यो हरेद्वातपित्तं रुचिकरो लघुः ॥

दण्डमत्स्यः ।

दण्डमत्स्यो रसे तिक्तः पित्तरक्तं कफं हरेत् ।
वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः ॥

एरङ्गः ।

एरङ्गो मधुरः स्निग्धो विष्टम्भी शीतलो लघुः ॥

महाशफरी ।

महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः ।
शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः ॥

गरघ्नी ।

गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत् ।
कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्य्यकृत् ॥

मद्‌गुरः ।

मद्‌गुरो वातहृद्बल्यो वृष्यः कफकरो लघुः ॥

सपादमत्स्यः ।

सपादमत्स्यो मेधाकृन्मेद क्षयकरश्च सः ।
वातपित्तकरश्चापि रुचिकृत् परमो मतः ॥

सफरी ।

प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रघ्नी कफवातजित् ।
स्निग्धास्यकण्ठरोगघ्नी रोचनी च लघुः स्मृतः ॥

क्षुद्रमत्स्याः ।

क्षुद्रा मत्स्याः स्वादुरसा दोषत्रयविनाशनाः ।
लघुपाका रुचिकरा बलदास्ते हिता मताः ॥

अतिक्षुद्रमत्स्याः ।

अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः ॥

मत्स्याण्डः ।

मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो लघुः ।
कफमेदःप्रदो बल्यो ग्लानिकृन्मेहनाशनः ॥

शुष्कमत्स्याः ।

शुष्कमत्स्या हिता न स्युर्दुर्जरा विड्विबन्धिनः ॥

दग्धमत्स्य ।

दग्धमत्स्यो गुणैः श्रेष्ठ पुष्टिकृद्बलवर्द्धन ॥

कूपजादिमत्स्यगुणाः ।

कौपमत्स्या शुक्रमूत्रकुष्ठश्लेष्मविवर्द्धनाः ।

सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः ॥

नादेया वृं हणा मत्स्या गुरवोऽनिलनाशना ।

रक्तपित्तकरा वृष्याः स्निग्धोष्णा रूल्पवर्च्चसः ॥

चौड्या पित्तकरा स्निग्धा मधुरा लघवो हिमा. ।

ताडागा गुरवो वृष्याः शीतला बलमूत्रदाः ॥

ताडागवन्निर्झरजा बलायुर्मतिदृक्कराः ॥

ऋतुविशेषे मत्स्यविशेष ।

हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिता ।

वसन्ते ते तु नादेया ग्रीष्मे चौड्यसमुद्भवा. ॥

तडागजाता वर्षासु तास्वपथ्या नदीभवा. ।

नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः ॥

---

# अनविंशोऽध्यायः ।

---

दुग्धवर्ग. ।

दुग्ध चीर पय स्तन्यं बालजीवनमित्यपि ।

दुग्धं सुमधुर स्निग्धं वातपित्तहरं सरम् ॥

सद्य. शुक्रकरं शीत सात्म्यं सर्वशरीरिणाम् ।

जीवनं वृंहणं बल्यं मेध्यं वाजिकरं परम् ॥
वयःस्थापनमायुष्यं सन्धिकारि रसायनम् ।
विरेकवान्तिवस्तीनां तुल्यमोजोविवर्द्धनम् ॥
जीर्णज्वरे मनोरोगे शोषमूर्च्छाभ्रमेषु च ।
ग्रहण्यां पाण्डुरोगे च दाहे तृषि हृदामये ॥
शूलोदावर्त्तरोगेषु वस्तिरोगे गुदाङ्कुरे ।
रक्तपित्तेऽतिसारे च योनिरोगे श्रमे क्लमे ।
गर्भस्रावे च सततं हितं मुनिवरैः स्मृतम् ॥
वालवृद्धक्षतक्षीणाः क्षुद्व्यवायकृशाश्च ये ।
तेभ्यः सदातिशयित हितमेतदुदाहृतम् ॥

गोदुग्धस्य गुणाः ।

गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः ।
शीतलं स्तन्यकृत् स्निग्धं वातपित्तास्रनाशनम् ॥
दोषधातुमलस्रोतः किञ्चित् क्लेदकरं गुरु ।
जरासमस्तरोगाणां शान्तिकृत् सेविनां सदा ॥

वर्णविशेषेण गुणविशेषाः ।

कृष्णाया गोर्भवेद्दुग्धं वातहारि गुणाधिकम् ।
पीताया हरते पित्तं तथा वातहरं भवेत् ।
श्लेष्मलं गुरु शुक्लाया रक्तपित्तास्रवातहृत् ॥

धेनोर्बालवत्साया विवत्सायाश्च गुणाः ।

बालवत्साविवत्सानां गवां दुग्धं त्रिदोषकृत् ॥

वस्कयिनी ।

वस्कयिन्यास्त्रिदोषघ्नं तर्पणं बलकृत् पयः ॥

देशविशेषचरणाद्गुणविशेषः ।

जङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् ।
पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते ॥

आहारविशेषेण गुणविशेषः ।

स्वल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम् ।
तत्तु बल्यं परं वृष्यं स्वस्थानां गुणदायकम् ।
पलालतृणकार्पासबीजजातं गुणैर्हितम् ॥

माहिषीदुग्धम् ।

माहिषं मधुरं गव्यात् स्निग्धं शुक्रकरं गुरु ।
निद्राकरमभिष्यन्दि क्षुधाधिक्यकरं हिमम् ॥

छागीदुग्धम् ।

छागं कषायं मधुरं शीतं ग्राहि तथा लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ।
स्तोकाम्बुपानाद्व्यायामात् सर्वरोगापहं पयः ॥

मृगीदुग्धम् ।

मृगीणां जङ्गलोत्थानामजाक्षीरगुणं पयः ॥

मेषीदुग्धम् ।

आविकं लवणं स्वादु स्निग्धोष्णञ्चाश्मरीप्रणुत् ।
अहृद्यं तर्पणं वृष्यं शुक्रपित्तकफप्रदम् ।
गुरु कासेऽनिलोद्भूते केवले चानिले वरम् ॥

घोटकीदुग्धम् ।

रूक्षोष्णं वडवाक्षीरं बल्यं शोषानिलापहम् ।
अम्लं पटु लघु स्वादु सर्वमैकशफं तथा ॥

उष्ट्रीदुग्धम्।

औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा।
क्रिमिकुष्ठकफानाहशोथोदरहरं सरम्॥

हस्तिनीदुग्धम्।

बृंहणं हस्तिनीदुग्धं मधुरं तुवरं गुरु।
वृष्यं बल्यं हिमं स्निग्धं चक्षुष्यं स्थिरकारकम्॥

नारीदुग्धम्।

नार्य्या लघु पयः शीतं दीपनं वातपित्तजित्।
चक्षुःशूलाभिघातघ्नं नस्याश्चोतनयोर्वरम्॥

धारोष्णादिदुग्धगुणाः।

धारोष्णं गोपयो बल्यं लघु शीतं सुधासमम्।
दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत्॥
धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम्।
शृतोष्णमाविकं पथ्यं शृतशीतमजापयः॥
आमं क्षीरमभिष्यन्दि गुरु श्लेष्मामवर्द्धनम्।
ज्ञेयं सर्वमपथ्यन्तु गव्यमाहिषवर्ज्जितम्॥
नारीक्षीरं त्वाममेव हितं नतु शृतं हितम्।
शृतोष्णं कफवातघ्नं शृतं शीतन्तु पित्तनुत्॥
अर्द्धोदकं क्षीरशिष्टमामाल्लघुतरं पयः।
जलेन रहितं दुग्धमतिपक्वं यथा यथा।
तथा तथा गुरु स्निग्धं वृष्यं बलविवर्द्धनम्॥

पेयूषकिलाटक्षीरशाकतक्रपिण्ड-
मोरटानां लक्षणानि गुणाश्च।

क्षीरं तत्कालसूताया घनं पेयूषमुच्यते।

नष्टदुग्धस्य पक्कस्य पिण्डः प्रोक्तः किलाटकः ॥
अपक्कमेव यन्नष्टं क्षीरशाकं हि तत् पयः ।
दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा ॥
द्रवभागेन रहितं तक्रपिण्डः स उच्यते ।
नष्टदुग्धभवन्नीरं मोरटञ्चेज्जडोऽब्रवीत् ॥
पेयूषञ्च किलाटश्च क्षीरशाकं तथैव च ।
तक्रपिण्ड इमे वृष्या वृंहणा बलवर्द्धनाः ॥
गुरवः श्लेष्मला हृद्या वातपित्तविनाशनाः ।
दीप्ताग्नीनां विनिद्राणां विद्रधौ चाभिपूजिताः ॥
मुखशोषतृषादाहरक्तपित्तज्वरप्रणुत् ।
लघुर्बलकरो रुच्यो मोरटः स्यात्सितायुतः ॥

## सन्तानिका ।

सन्तानिका गुरुः शीता वृष्या पित्तास्रवातनुत् ।
तर्पणी वृंहणी स्निग्धधा बलासबलशुक्रला ॥

## खण्डादियुक्तदुग्धगुणाः ।

खण्डेन सहितं दुग्धं कफकृत् पवनापहम् ।
सिता सितोपलायुक्तं शुक्रलं त्रिमलापहम् ॥
सगुड़ं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं परम् ॥

## प्रभातादिभवं दुग्धम् ।

रात्रौ चन्द्रगुणाधिक्याद्व्यायामाकरणात्तथा ।
प्राभातिकं तदा प्रायः प्रादोषाद्गुरु शीतलम् ॥
दिवाकरकराघातात् व्यायामानलसेवनात् ।
प्राभातिकात्तु प्रादोषं लघु वातकफापहम् ॥

दुग्धसेवनसमयविशेषेण गुणमाह ।

वृष्यं बृंहणमग्निदीपनकरं पूर्वाह्णकाले पयो
मध्याह्ने तु बलावहं कफहरं पित्तापहं दीपनम् ।
बाले वृद्धिकर क्षयक्षयकरं वृद्धेषु रेतोवहं
रात्रौ पथ्यमनेकदोषशमनं क्षीरं सदा सेव्यते ॥

वदन्ति पेयं निशि केवलं पयो
भोज्यं न तेनेह सहौदनादिकम् ।
भवत्यजीर्णे न शयीत सर्वथा
क्षीरस्य पीतस्य न शेषमुत्सृजेत् ॥

विदाहीन्यन्नपानानि दिवा भुङ्क्ते हि यन्नरः ।
तद्विदाहप्रशान्त्यर्थं रात्रौ क्षीरं सदा पिबेत् ॥

दीप्तानले कृशे पुंसि बाले वृद्धे पयःप्रिये ।
मतं हिततमं पथ्यं सद्यः शुक्रकरं यतः ॥

मथितस्य दुग्धस्य गुणाः ।

क्षीरगव्यमथाजं वा कोष्णं दण्डाहतं पिबेत् ।
लघु वृष्यं ज्वरहरं वातपित्तकफापहम् ॥

दुग्धफेनगुणाः ।

गोदुग्धप्रभवं किंवा छागीदुग्धसमुद्भवम् ।
भवेत् फेन त्रिदोषघ्नं रोचनं बलवर्द्धनम् ॥
वह्निवृद्धिकरं वृष्यं सद्यस्तृप्तिकर लघु ।
अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते ॥

निन्दितं दुग्धम् ।

विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः ।
वर्जयेदम्ललवणयुक्तं बुद्धा द्विहृद्यतः ॥

# त्रिंशोऽध्यायः ।

---

## अथ दधिवर्गः ।

### दध्नो गुणाः ।

दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु ।
पाकेऽम्लं श्वासपित्तास्रशोथमेदःकफप्रदम् ॥
मूत्रकृच्छ्रे प्रतिश्याये शीतगे विषमे ज्वरे ।
अतिसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत् ॥

### दधिभेदाः ।

आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परम् ।
अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा ॥

### मन्दादीनां लक्षणानि गुणाश्च ।

मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत् ।
मन्दं स्यात् सृष्टविण्मूत्रं दोषत्रयविदाहकृत् ॥
यत्सम्यग् घनतां यातं व्यक्तस्वादुरसं भवेत् ।
अव्यक्ताम्लरसं तत्तु स्वादु विज्ञैरुदाहृतम् ॥
स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःकफावहम् ।
वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् ॥
स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत् ।
स्वाद्वम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्जनैः ॥
यत्तिरोहितमाधुर्य्यं व्यक्ताम्लत्वं तदम्लकम् ।
अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम् ॥

तदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत्।
अत्यम्लं दीपनं रक्तवातपित्तकरं परम्॥

गोदधिगुणाः।

गव्यं दधि विशेषेण स्वाद्वम्लञ्च रुचिप्रदम्।
पवित्रं दीपनं हृद्यं पुष्टिकृत् पवनापहम्।
उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम्॥

माहिषदधिगुणाः।

माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत्।
स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषकम्॥

छागीदधि।

आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम्।
शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम्॥

पक्वदुग्धदधि।

पक्वदुग्धभवं रुच्यं दधिस्निग्धं गुणोत्तमम्।
पित्तानिलापहं सर्वधात्वग्निबलवर्द्धनम्॥

निःसरदुग्धदधि।

असारं दधि संग्राहि शीतलं वातलं लघु।
विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम्॥

गालितदधि।

गालितं दधि सुस्निग्धं वातघ्नं कफकृद्गुरु।
बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत्॥

शर्करादिसहितदधि।

सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित्।
सगुड़ं वातनुद्वृष्यं बृंहणं तर्पणं गुरु॥

रात्रौ दधिभोजननिषेधः ।

न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ।
नामुद्गयुषं नाक्षौद्रं नोष्णमामलकैर्विना ॥

तथा च । शस्यते दधिनो रात्रौ शस्तञ्चाम्बु घृतान्वितम् ।
रक्तपित्तकफोत्थेषु विकारेषु तु नैव तत् ॥

ऋतुविशेषेण विधिनिषेधौ ।

हेमन्ते शिशिरे चापि वर्षासु दधि शस्यते ।
शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्विगर्हितम् ॥

अविधिना दधिसेवने दोषमाह ।

ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् ।
प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रियः ॥

सरमस्तु ।

दध्नस्तूपरि यो भागो घनः स्नेहसमन्वितः ।
स लोके सर इत्युक्तो दध्नो मण्डस्तु मस्त्विति ॥
सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः ।
साम्लो वस्तिप्रशमनः पित्तश्लेष्मविवर्द्धनः ॥
मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत् ।
स्रोतोविशोधनं ह्लादि कफतृष्णानिलापहम् ।
अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसञ्चयम् ॥

---

# एकविंशोऽध्यायः ।

---

अथ तक्रवर्गः ।

तक्रम् ।

घोलन्तु मथितं तक्रमुदश्वित्च्छिकापि च ।
ससरं निर्जल घोलं मथितं त्वसरोदकम् ॥
तक्रं पादजलं प्रोक्तमुदश्वित् त्वर्द्धवारिकम् ।
च्छिका सारहीना स्यात् स्वच्छा प्रचुरवारिका ॥
घोलन्तु शर्करायुक्तं गुणैर्ज्ञेयं रसालवत् ।
वातपित्तहरं ह्लादि मथितं कफपित्तनुत् ॥
तक्रं ग्राहि कषायाम्लं स्वादुपाकरसं लघु ।
वीर्य्योष्णं दीपनं वृष्यं प्रीणन वातनाशनम् ॥
ग्रहण्यादिमतां पथ्यं भवेत् संग्राहि लाघवात् ।
किञ्च स्वादु विपाकित्वान्न च पित्तप्रकोपनम् ।
कषायोष्णविपाकित्वाद्रौक्ष्याच्चापि कफापहम् ॥

न तक्रसेवी व्यथते कदाचित्
न तक्रदग्धाः प्रभवन्ति रोगाः ।
यथा सुराणाम् अमृतं सुखाय
तथा नराणां भुवि तक्रमाहुः ॥

उदश्वित् कफकृद्बल्यमामघ्नं परमं मतम् ।
च्छिका शीतला लघ्वी पित्तश्रमतृषाहरी ॥
वातनुत् कफकृत् सा तु दीपनी लवणान्विता ।

समुद्धृतं घृतं तक्रं पथ्यं लघु विशेषतः॥
स्तोकोद्धृतघृतं तस्माद्गुरु वृष्यं कफावहम्।
अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम्॥
वातेऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम्।
पित्ते स्वादु सितायुक्तं सव्योषमधिके कफे॥
हिङ्गुजीरयुतं घोलं सैन्धवेन च संयुतम्।
तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च॥
पीनसश्वासकासादौ पक्वमेव प्रयुज्यते।
भवेदतीववातघ्नमर्शोऽतीसारहृत् परम्॥
रुचिदं पुष्टिदं बल्यं वस्तिशूलविनाशनम्।
मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम्॥

तक्रसेवनविधिः।

शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च।
अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम्॥
तत्तु हन्ति गरच्छर्दिप्रसेकविषमज्वरान्।
पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान्॥
मेहं गुल्ममतीसारं शूलप्लीहोदरारुचीः।
श्वित्रकोठगतव्याधीन् कुष्ठशोथतृषाक्रिमीन्॥
नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपित्तजे॥
यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत्॥

# द्वात्रिंशोऽध्यायः ।

---

## नवनीतवर्ग. ।

### नवनीतम् ।

स्रक्षणं सरजं हैयङ्गवीनं नवनीतकम् ॥
नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् ।
संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासहृत् ।
तद्धितं बालके वृद्धे विशेषादमृतं शिशोः ॥

### माहिषनवनीतकम् ।

नवनीतं महिष्यास्तु वातश्लेष्मकरं गुरु ।
दाहपित्तश्रमहरं मेदःशुक्रविवर्द्धनम् ॥

### पयसो नवनीतकम् ।

दुग्धोत्थं नवनीतं तु चक्षुष्यं रक्तपित्तनुत् ।
वृष्यं बल्यमतिस्निग्धं मधुरं ग्राहि शीतलम् ॥

### सद्यःसमुद्धृतनवनीतम् ।

नवनीतन्तु सद्यस्कं स्वादु ग्राहि हिमं लघु ।
मेध्यं किञ्चित्कषायाम्लमीषत्तक्रांशसङ्क्रमात् ॥

### चिरन्तननवनीतम् ।

क्षारकटुकाम्लत्वाच्छर्द्यर्शःकुष्ठकारकम् ।
श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम् ॥

---

# त्रयस्त्रिंशोऽध्यायः ।

---

## घृतवर्गः ।

### घृतम् ।

घृतमाज्यं हविः सर्पिः कथ्यन्ते तद्गुणा अथ ॥
घृतं रसायनं स्वादु चक्षुष्यं वह्निदीपनम् ।
शीतवीर्य्यं विषालक्ष्मीपापपित्तानिलापहम् ॥
अल्पाभिष्यन्दि कान्त्योजःस्तेजोलावण्यवृद्धिकृत् ।
स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद्गुरु ॥
उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत् ।
स्निग्धं कफकरं रूक्षं क्षयवीसर्परक्तनुत् ॥

### गव्यघृतम् ।

गव्यं घृतं विशेषेण चक्षुष्यं वृष्यमग्निकृत् ।
स्वादुपाकरसं शीतं वातपित्तकफापहम् ॥
मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम् ।
अलक्ष्मीपापरक्षोघ्नं वयसः स्थापकं गुरु ॥
बल्यं पवित्रमायुष्यं सुमङ्गल्यं रसायनम् ।
सुगन्धं रोचनं चारु सर्वाज्येषु गुणाधिकम् ॥

### माहिषघृतम् ।

माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम् ।
शीतलं श्लेष्मलं वृष्यं गुरु स्वादु विपच्यते ॥

### छागीघृतम् ।

आजमाज्यं करोत्यग्निं चक्षुष्यं बलवर्द्धनम् ।

कासे श्वासे क्षये चापि हितं पाके भवेत्कटुः ॥

उष्ट्रीघृतम् ।

औष्ट्रं कटु घृतं पाके शोषक्रिमिविषापहम् ।
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥

आविकघृतम् ।

पाके लघ्वाविकं सर्पिः सर्वरोगविनाशनम् ।
वृद्धिं करोति चास्थीनामश्मरीशर्करापहम् ।
चक्षुष्यमग्निधुक्षणं वातदोषनिवारणम् ॥

नारीघृतम् ।

कफेऽनिले योनिदोषे पित्ते रक्ते च तद्धितम् ।
चक्षुष्यमाज्यं स्त्रीणां वा सर्पिः स्यादमृतोपमम् ॥

अश्वीघृतम् ।

वृद्धिं करोति देहाग्न्येर्लघु पाके विषापहम् ।
तर्पणं नेत्ररोगघ्नं दाहनुद्वडवाघृतम् ॥

दुग्धघृतम् ।

घृतं दुग्धभवं ग्राहि शीतल नेत्ररोगहृत् ।
निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान् ॥

ह्यस्तनदधिजघृतम् ।

हविर्ह्यस्तनदुग्धोत्थं तत् स्याद्धैयङ्गवीनकम् ॥
हैयङ्गवीनं चक्षुष्यं दीपनं रुचिकृत् सरम् ।
बलकृद्वृंहणं वृष्यं विशेषाज्ज्वरनाशनम् ॥

पुराणघृतम् ।

वर्षादूर्द्ध्वं भवेदाज्यं पुराणं तत्त्रिदोषनुत् ।
मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् ॥

यथा यथाऽखिलं सर्पिः पुराणमधिकं भवेत् ।
तथा तथा गुणैः स्वैरधिकं तदुदाहृतम् ॥

नूतनघृतस्य विषयाः ।

योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे ।
बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः ॥

घृतप्रयोगस्य विषयाः ।

राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते गदे ।
रोगे सामे विसूच्यां च विबन्धे च मदात्यये ।
ज्वरे च दहने मन्दे न सर्पिर्बहु मन्यते ॥

---

## चतुस्त्रिंशोऽध्यायः ।

---

अथेक्षुवर्गः ।

इक्षुः ।

इक्षुर्दीर्घच्छदः प्रोक्तस्तथा भूमिरसोऽपि च ।
गुडमूलोऽसिपत्रश्च तथा मधुतृणः स्मृतः ॥
इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः ।
स्वादुपाकरसाः स्निग्धा गुरवो मूत्रला हिमाः ॥

इक्षुभेदाः ।

पौण्ड्रको भीरुकश्चापि वंशकः शतपोरकः ।
कान्तारस्तापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः ॥

नैपालो दीर्घपत्रश्च नीलपोरोऽथ कोशकः।
इत्येता जातयस्तेषां कथयामि गुणानपि॥

पौण्ड्रको भीरुकश्च।

वातपित्तप्रशमनो मधुरो रसपाकयोः।
सुशीतो बृंहणो बल्यः पौण्ड्रको भीरुकस्तथा॥

कोशकारः।

कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः॥

कान्तारः॥

कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलो बृंहणः सरः॥

दीर्घपोरो वंशकश्च।

दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः॥

शतपोरः।

शतपर्वा भवेत् किञ्चित् कोशकारगुणान्वितः।
विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः॥

तापसेक्षुः।

तापसेक्षुर्भवेन्मृद्वी मधुरा श्लेष्मकोपनी।
तर्पणी रुचिकृच्चापि वृष्या च बलकारिणी॥

काण्डेक्षुः।

एवंगुणस्तु काण्डेक्षुः स तु वातप्रकोपनः॥

सूचीपत्रनैपालदीर्घपत्रनील-
पोरकाणां गुणाः।

सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः।
वातलाः कफपित्तघ्नाः कषाया च विदाहिनः॥

मनोगुप्ता ।

मनोगुप्ता वातहारी तृष्णामयविनाशिनी ।
सुशीता मधुरातीव रक्तपित्तप्रणाशिनी ॥

बालयुवावृद्धेक्षुगुणाः ।

बाल इक्षुः कफं कुर्य्यान्मेदोमेहकरश्च सः ।
युवा तु वातहृत् स्वादुरीषत्तीक्ष्णश्च पित्तनुत् ।
रक्तपित्तहरो वृद्धः क्षतहृद्बलवीर्य्यकृत् ॥

अङ्गभेदेन भेदः ।

मूले तु मधुरोऽत्यर्थं मध्येऽपि मधुरः स्मृतः ।
अग्रे ग्रन्थिषु विज्ञेय इक्षुः पटुरसो जनैः ॥

दन्तपीड़ितेक्षुरसस्य गुणाः ।

दन्तनिष्पीडितस्येक्षो रसः पित्तास्रनाशनः ।
शर्करासमवीर्य्यः स्यादविदाही कफप्रदः ॥

यन्त्रनिष्पीड़ितेक्षुरसस्य गुणाः ।

मूलाग्रजन्तुग्रन्थ्यादिपीड़नान्मलसङ्करात् ।
किञ्चित् कालं विधृत्या च विकृतिं याति यान्त्रिकः
तस्माद्विदाही विष्टम्भी गुरुः स्याद्यान्त्रिको रसः ॥

पर्य्युषितेक्षुरसस्य गुणाः ।

रसः पर्य्युषितो नेष्टो ह्यम्लो वातापहो गुरुः ।
कफपित्तकरः शोषी भेदनश्चातिमूत्रलः ॥

पक्वस्येक्षुरसस्य गुणाः ।

पक्वो रसो गुरुः स्निग्धः सुतीक्ष्णः कफवातनुत् ।
गुल्मानाहप्रशमनः किञ्चित् पित्तकरः स्मृतः ॥

इक्षुरसस्य विकाराणां गुणाः ।

इक्षोर्विकारास्तृड्दाहमूर्च्छापित्तास्रनाशनाः ।
गुरवो मधुरा बल्या स्निग्धा वातहरा सराः ।
वृष्या मोहहराः शीता बृंहणा विषहारिणः ॥

फाणितः ।

इक्षो रसस्तु यः पक्वः किञ्चिद्गाढ़ो बहुद्रवः ।
स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया ॥
फाणितं गुर्वभिष्यन्दि बृंहणं कफशुक्रकृत् ।
वातपित्तश्रमान् हन्ति मूत्रवस्तिविशोधनम् ॥

मत्स्यण्डी ।

इक्षो रसो यः सम्पक्वो घनः किञ्चिद्द्रवान्वितः ।
मन्दं यत् स्यन्दते तस्मात् स मत्स्यण्डी निगद्यते ॥
मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा ।
मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता ॥

गुडः ।

इक्षो रसो यः सम्पक्वो जायते लोष्ट्रवद्दृढ़ः ।
स गुडो गौडदेशे तु मतस्यण्डेव गुडो मतः ॥
गुडो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः ।
नातिपित्तहरो मेदःकफक्रिमिबलप्रदः ॥

पुरातनो गुडः ।

गुडो जीर्णो लघुः पथ्योऽनभिष्यन्द्यपि पुष्टिकृत् ।
पित्तघ्नो मधुरो वृष्यो वातघ्नोऽसृक्प्रसादनः ॥

नवीनो गुडः ।

गुड़ो नवः कफश्वासक्रिमिकरोऽग्निकृच्च सः ॥

श्लेष्माणमाशु विनिहन्ति सदार्द्रकेण
पित्तं निहन्ति च तदेव हरीतकीभिः ।
शुण्ठ्या समं हरति वातमशेषमित्थं
दोषत्रयक्षयकराय नमो गुड़ाय ॥

खण्डम् ।

खण्डन्तु मधुरं वृष्यं चक्षुष्यं वृंहणं हिमम् ।
वातपित्तहरं स्निग्धं बल्यं वान्तिहरं परम् ॥

सिता ।

खण्डन्तु सिकतारूपं सुश्वेत शर्करा सिता ।
सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत ।
मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी ॥

सितादयम् ।

भवेत् पुष्पसिता शीता रक्तपित्तहरी लघुः ।
सितोपमा सरा लघ्वी वातपित्तहरी हिमा ॥

मधुशर्करा ।

मधुर्जा शर्करा रूक्षा कफपित्तहरी गुरु. ।
छर्द्यतीसारतृड्दाहरक्तहृत्तुवरा हिमा ॥
यदा यथैषा नैर्म्मल्यं मधुरत्वं तथा तथा ।
स्नेहलाघवशैत्यादि सरत्वञ्च तथा तथा ॥

———

# पञ्चविंशोऽध्यायः ।

---

## अथ मधुवर्गः ।

### मधु ।

मधु माचीकमाध्वीकं चौद्रं सारघमीरितम् ।
मचिका वरटीभृङ्गवान्तं पुष्परसोद्भवम् ॥
मधु शीतं लघु स्वादु रूक्षं ग्राहि विलेखनम् ।
चक्षुष्यं दीपनं स्वर्य्यं व्रणशोधनरोपणम् ॥
सौकुमार्य्यकरं सूक्ष्मं परं स्रोतोविशोधनम् ।
कषायानुरसं ह्लादि प्रसादजनकं परम् ॥
वर्ण्यं मेधाकरं वृष्यं विशदं दीपनं हरेत् ।
कुष्ठार्शःकासपित्तास्रकफमेहक्लमक्रिमीन् ॥
मेदस्तृष्णावमिश्वासहिक्कातीसारविड्ग्रहान् ।
दाहचतचयांस्तत् तु योगवाह्यल्पवातलम् ॥

### मधुभेदाः ।

माचिकं भ्रामरं चौद्रं पौत्तिकं छात्रमित्यपि ।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥

### माचिकम् ।

माचिकाः पिङ्गवर्णास्तु महतो मधुमचिकाः ।
ताभिः कृतं तैलवर्णं माचिकं परिकीर्त्तितम् ॥
माचिकं मधुषु श्रेष्ठं नेत्रामयहरं लघु ।
कामलार्शःचतश्वासकासचयविनाशनम् ॥

भ्रामरम् ।

किञ्चित्सूक्ष्मैः प्रसिद्धेभ्यः षट्पदेभ्योऽलिभिश्चितम् ।
निर्म्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम् ॥
भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु ।
स्वादुपाकमभिष्यन्दि विशेषात् पिच्छिलं हिमम् ॥

क्षौद्रम् ।

मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु ।
मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत् ॥
गुणैर्माक्षिकवत् क्षौद्रं विशेषान्मेहनाशनम् ॥

पौत्तिकम् ।

कृष्णा या मशकोपमा लघुतरा प्रायो महापीड़िका
वृक्षानास्तरुकोटरान्तरगताः पुष्पासवं कुर्वते ।
तास्तज्ज्ञैरिह पूत्तिका निगदितास्ताभिः कृतं सर्पिषा
तुल्यं यत् मधु तद्वनेचरजनैः सकीर्त्तितं पौत्तिकम् ॥
पौत्तिकं लघु रूक्षोष्णं पित्तदाहास्रवातकृत् ।
विदाहि मेहकृच्छ्रघ्नं ग्रन्थ्यादिक्षतशोषि च ॥

छात्रम् ।

वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥
छात्रं कपिलपीतं स्यात्पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिहरं रक्तपित्तप्रमेहजित् ।
भ्रमतृण्मोहविषहृत् तर्पणञ्च गुणाधिकम् ॥

आर्घ्यम् ।

मधूकवृक्षनिर्य्यासं जरत्कारवाश्रमोद्भवम् ।

अवन्त्यार्घ्यन्तदा ख्यातं श्वेतकं मालवे पुनः ॥
तीक्ष्णतुण्डास्तु या पीताः मक्षिकाः षट्पदोपमाः।
आर्घ्यास्तास्तत्कृतं यदार्घ्यमित्यपरे जगुः ॥
आर्घ्यं मध्वतिचक्षुष्यं कफपित्तहरं परम्।
कषायं कटुकं पाके तिक्तञ्च बलपुष्टिकृत् ॥

औद्दालकम्।

प्रायोवल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः।
कुर्वन्ति कपिलं स्वल्पं तत् स्यादौद्दालकं मधु ॥
औद्दालकं रुचिकरं स्वर्य्यं कुष्ठविषापहम्।
कषायमुष्णमम्लञ्च कटुपाकञ्च पित्तकृत् ॥

दालम्।

संस्रुत्य पतितं पुष्पाद्यत्तु पत्रोपरिस्थितम्।
मधुराम्लकषायञ्च तद्दालं मधु कीर्त्तितम् ॥
दालं मधु लघु प्रोक्तं दीपनीयं कफापहम्।
कषायानुरसं रूक्षं रुच्यं छर्द्दिप्रमेहजित्।
अधिकं मधुरं स्निग्धं वृंहणं गुरुभारिकम् ॥

नवपुराणमधुगुणाः।

नवं मधु भवेत् पुष्ट्यै नातिश्लेष्महरं सरम्।
पुराणं ग्राहकं रूक्षं मेदोघ्नमतिलेखनम् ॥
मधुनः शर्करायाश्च गुडस्यापि विशेषतः।
एकसंवत्सरेऽतीते पुराणत्वं स्मृतं बुधैः ॥

मधुनः शीतस्य गुणाधिक्य-
मुष्णताया निषेधः।

विषपुष्पादपि रसं सविषा भ्रमरादयः।

गृहीत्वा मधु कुर्वन्ति तच्छीतं गुणवन्मधु ॥
विषान्वयात्तदुष्णन्तु द्रव्ये नोष्णेन वा सह ।
उष्णार्त्तस्योष्णकाले च स्मृतं विषसम मधु ॥

मधूच्छिष्टम् ।

मयनन्तु मधूच्छिष्टं मधुशेषञ्च सिक्थकम् ।
मदनं मृदु सुस्निग्धं भूतघ्नं व्रणरोपणम् ।
भग्नसन्धानकृद्वातकुष्ठवीसर्परक्तजित् ॥

---

# षट्त्रिंशोऽध्यायः ।

---

अथ वारिवर्गः ।

जलम् ।

पाणीयं सलिलं नीरं कीलालञ्जलमम्बु च ।
आपो वार्वारि कन्तोयं पयः पाथस्तथोदकम् ।
जीवनं वनमम्भोऽर्णोऽमृत घनरसोऽपि च ॥
पाणीयं श्रमनाशनं क्लमहरं मूर्च्छापिपासापहं
तन्द्राछर्द्दिविबन्धहृद्बलकरं निद्राहरं तर्पणम् ॥
हृद्यं गुप्तरसं ह्यजीर्णशमकं नित्यं हितं शीतलम्।
लघ्वच्छं रसकारणं निगदितं पीयूषवज्जीवनम् ॥

तच्च भेदाः ।

पाणीयं मुनिभिः प्रोक्तं दिव्यं भौममिति द्विधा ।

दिव्यं चतुर्विधं प्रोक्तं धाराजं करकाभवम्।
तौषारञ्च तथा हैमन्तेषु धारं गुणाधिकम्॥

धारं जलम्।

धाराभिः पतितं तोयं गृह्णीत स्फीतवाससा।
शिलायां वा सुधायां वा धौतायां पतितञ्च तत्॥
सौवर्णे राजते ताम्रे स्फाटिके काचनिर्म्मिते।
भाजने मृण्मये वापि स्थापितं धारमुच्यते॥
धारं नीरं त्रिदोषघ्नमनिर्देश्यरसं लघु।
सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम्॥
पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान्।
तृष्णां हरति तत् पथ्यं विशेषात् प्रावृषि स्थितम्॥

धारजलस्य भेदाः।

धाराजलन्तु द्विविधं गाङ्गसामुद्रभेदतः।

तत्र गाङ्गसामुद्रजलम्।

गाङ्गमाश्वयुजे मासि प्रायो वर्षति वारिदः।
सर्वथा तज्जलन्देयं तथैव चरके वचः॥
स्थापिते हैमजे पात्रे राजते मृण्मयेऽपि वा।
शाल्यन्नं येन संसिक्तं भवेदक्लेदिवर्णवत्॥
तद्गाङ्गं सर्वदोषघ्नं ज्ञेयं सामुद्रमन्यथा।
तत्तु सक्षारलवणं शुक्रदृष्टिबलापहम्।
विस्रञ्च दोषलन्तीक्ष्णं सर्वकर्म्मसु गर्हितम्॥
सामुद्रन्त्वाश्विने मासि गुणैर्गाङ्गवदादिशेत्।
यतोऽगस्त्यस्य दिव्यर्षेरुदयात् सकलं जलम्।
निर्म्मलं निर्विषं स्वादु शुक्रलं स्याददोषलम्॥

अर्णवजलम् ।

अनार्त्तवं प्रमुञ्चन्ति वारि वारिधरास्तु यत् ।
तत् त्रिदोषाय सर्वेषां देहिनां परिकीर्त्तितम् ॥
अनार्त्तव पौषादिमासचतुष्टयविषयम् ।

करकाजलम् ।

दिव्यवाय्वग्निसंयोगात् संहताः खात्पतन्ति याः ।
पाषाणखण्डवच्चापस्ताः कारिक्योऽमृतोपमाः ॥
करकाजञ्जलं रूक्षं विशदं गुरु च स्थिरम् ।
दारुण शीतलं सान्द्रं पित्तहृत् कफवातकृत् ॥

तौषारजलम् ।

अपिनद्याः समुद्रान्ते वह्निरापस्तदुद्भवाः ।
धूमावयवनिर्मुक्तास्तुषाराख्यास्तुताः स्मृताः ।
अपथ्याः प्राणिनां प्रायः भूरुहाणान्तु नाहिताः ॥
तुषाराम्बु हिमं रूक्षं स्याद्वातलमपित्तलम् ।
कफोरुस्तम्भकण्ठाग्निमेहगण्डादिरोगनुत् ॥

आपनद्याः समुद्रान्ते वह्निर्नदीमारभ्य समुद्रपर्यन्ते वह्निरास्ते तदुद्भवाः । वह्निभवा धूमावयवनिर्मुक्ताः धूमांशरहिता.। आपस्तुषाराख्याः, शिशिर इति लोके, तुषार इति च ।

हैमजलम् ।

हिमवच्छिखरादिभ्यो द्रवीभूयाभिवर्षति ।
यत्तदेवं हिमं हैमं जलमाहुर्मनीषिणः ॥
हिमाम्बु शीतं पित्तघ्नं गुरु वातविवर्द्धनम् ।
हिमन्तु शीतल रूक्षं दारुणं सूक्ष्ममित्यपि ।

न तद्दूषयते वातं न च पित्तं न वा कफम् ॥

भौमजलम्।

भौममम्भो निगदितं प्रथमं त्रिविधं बुधैः।
जाङ्गलं परमानूपन्ततः साधारणं क्रमात् ॥
अल्पोदकोऽल्पवृत्तश्च पित्तरक्तामयान्वितः।
ज्ञातव्यो जाङ्गलो देशस्तत्रत्यञ्जाङ्गलं जलम् ॥
बह्वम्बुर्बहुवृत्तश्च वातश्लेषामयान्वित।
देशोऽनूप इति ख्यात आनूपं तद्भवं जलम् ॥
मिश्रचिह्नस्तु यो देशः स हि साधारणः स्मृत.।
तस्मिन्देशे यदुदकं तत्तु साधारणं स्मृतम ॥
जाङ्गलं सलिलं रूक्षं लवणं लघु तत्तनु।
वह्निकृत् कफहृत् पथ्यं विकारान् कुरुते बहून् ॥
आनूपं वार्य्यभिष्यन्दि स्वादु स्निग्धं घनं गुरु।
वह्निकृत् कफकृद्धृद्यं विकारान् हरते बहून् ॥
साधारणन्तु मधुरं दीपनं शीतलं लघु।
तर्पणं रोचनं तृष्णादाहदोषत्रयप्रणुत् ॥

भौमानामेव नादेयादीनां
लक्षणानि गुणाश्च।

नादेयम्।

नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम्।
नादेयमुदकं रूक्षं वातलं लघु दीपनम् ॥
अनभिष्यन्दि विशदं कटुकं कफपित्तनुत्।
नद्यः शीघ्रवहा लघ्वः सर्वा याश्चामलोदकाः ॥
गुर्व्यः शैवलसंच्छन्ना मन्दगाः कलुषाश्च याः।

हिमवत्प्रभवाः सर्वाः नद्योऽश्माहतपाथसः ॥
गङ्गाशतद्रुसरयूयमुनाद्या गुणोत्तमा ।
सह्यशैलभवा नद्यो वेणागोदावरीमुखाः ॥
कुर्वन्ति प्रायशः कुष्ठमीषद्वातकफावहाः ॥
नदीसरस्तडागस्थे कूपप्रस्रवणादिजे ।
उदके देशभेदेन गुणान् दोषांश्च लक्षयेत् ॥

औद्भिदजलम् ।

विदार्य्य भूमिं निम्नां यन्महत्या धारया स्रवेत् ।
तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ॥
औद्भिदं वारि पित्तघ्नमविदाह्यतिशीतलम् ।
प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ॥

नैर्झरजलम् ।

शैलसानुस्रवद्वारि प्रवाहे निर्झरो झरः ।
स तु प्रस्रवणश्चापि तत्रत्यं नैर्झरं जलम् ॥
नैर्झरं रुचिकृन्नीरं कफघ्नं दीपनं लघु ।
मधुरं कटुपाकञ्च वातलं स्यादपित्तलम् ॥

सारसजलम् ।

नद्याः शैलादिरुद्धाया यत्र सम्भुत्य तिष्ठति ।
तत्सरो जलसञ्छन्नं तदम्भः सारसं स्मृतम् ॥
सारसं सलिलं बल्यं तृष्णाघ्नं मधुरं लघु ।
रोचनन्तुवरं रूक्षं बद्धमूत्रमलं स्मृतम् ॥

ताडागजलम् ।

प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः ।
जलाशयस्तडागः स्यात्ताड़ागं तज्जलं स्मृतम् ॥

ताडागमुदकं स्वादु कषाय कटुपाकि च ।
वातलं बद्धविण्मूत्रमस्रक्पित्तकफापहम् ॥

वाप्यजलम् ।

पाषाणैरिष्टकाभिर्वा बद्धकूपा बृहत्तरा ।
ससोपाना भवेद्वापी तज्जलं वाप्यमुच्यते ॥
वाप्यं वारि यदि क्षारं पित्तकृत् कफवातहृत् ।
तदेव मिष्टं कफकृद्वातपित्तहरं भवेत् ॥

कौपजलम् ।

भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः ।
बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते ॥
कौपं पयो यदि स्वादु त्रिदोषघ्नं हितं लघु ।
तत् क्षारं कफवातघ्नं दीपनं पित्तकृत् परम् ॥

चौण्ड्यजलम् ।

शिलाकीर्णे स्वयं श्वभ्रं नीलाञ्जनसमोदकम् ।
लतावितानसंच्छन्नं चौण्ड्यमित्यभिधीयते ॥
अश्मादिभिरबद्धं यत्तच्चौण्ड्यमिति चापरे ।
तत्रत्यमुदकं चौण्ड्यं मुनिभिः समुदाहृतम् ॥
चौण्ड्यं वह्निकरं नीरं रूक्षं कफहरं लघु ।
मधुरं पित्तनुद्रुच्यं पाचनं विशदं स्मृतम् ॥

पाल्वलजलम् ।

अल्पं सरः पल्वलं स्याद्यत्र चन्द्रार्कगे रवौ ।
न तिष्ठन्ति जलं किञ्चित्तत्रत्यं वारि पाल्वलम् ॥
पाल्वलं वार्य्यभिष्यन्दि गुरु स्वादु त्रिदोषकृत् ॥

विकिरजलम्।

नद्यादिनिकटे भूमिर्या भवेद्वालुकामयी।
उद्धाव्यते ततो यत्तु तज्जलं विकिरं विदुः॥
विकिर शीतल स्वच्छं निर्दोषं लघु च स्मृतम्।
तुवरं स्वादु पित्तघ्नं चारं तत् पित्तल मनाक्॥

कैदारजलम्।

केदारं चेत्रमुद्दिष्टं कैदारं तज्जलं स्मृतम्।
कैदारं वार्य्यभिष्यन्दि मधुरं गुरु दोषकृत्॥

वृष्टिजलम्।

वार्षिकं तदहर्वृष्टं भूमिस्थमहितं जलम्।
त्रिरात्रमुषितं तत्तु प्रसन्नममृतोपमम्॥

हेमन्तादिकालविशेषे विहितजल-
विशेषः।

हेमन्ते सारसन्तोयं ताड़ागं वा हितं स्मृतम्।
हेमन्ते विहितं तोयं शिशिरेऽपि प्रशस्यते॥
वसन्तग्रीष्मयोः कौप वाप्यं वा नैर्झरं जलम्।
नादेयं वारि नादेयं वसन्तग्रीष्मयोर्बुधैः॥
विषवद्दनवृक्षाणा पत्राद्यैर्दूषितं यतः।
औद्भिदं वान्तरीक्षं वा कौपं वा प्रावृषि स्मृतम्॥
शस्तं शरदि नादेयं नीरमंशूदकं परम्।
दिवा रविकरैर्जुष्ट निशि शीतकरांशुभिः॥
शिवमंशूदकन्नाम स्निग्धं दोषत्रयापहम्।
अनभिष्यन्दि निर्दोषमान्तरीक्षजलोपमम्।
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम्॥

हृद्यमुत्तमम् । पौषे वारि सरोजातं माघे तत्तु तड़ागजम् ।
फाल्गुने कूपसम्भूतं चैत्रे चौण्ड्यं हितं मतम् ॥
वैशाखे नैर्झरं नीरं ज्यैष्ठे शस्तन्तथौद्भिदम् ।
आषाढ़े शस्यते कौपं श्रावणे दिव्यमेव च ॥
भाद्रे कौपं पयः शस्तमाश्विने चौण्ड्यमेव च ।
कार्त्तिके मार्गशीर्षे च जलमात्रं प्रशस्यते ॥

जलग्रहणकालः ।

भौमानामम्भसां प्रायो ग्रहणं प्रातरिष्यते ।
शीतत्वं निर्म्मलत्वञ्च यतस्तेषां मतो गुणः ॥

जलस्य मानविधिः ।

अत्यम्बुपानान्न विपच्यतेऽन्न
निरम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्द्धनाय
मुहुर्मुहुर्वारि पिबेदभूरि ॥

शीतलजलपानस्थलम् ।

मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ।
श्रमे भ्रमे विदग्धेऽन्ने तमके वमथौ तथा ।
ऊर्द्ध्वगे रक्तपित्ते च शीतमम्बु प्रशस्यते ॥

शीतलजलस्य पाननिषेधः ।

पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ।
आध्माने स्तिमिते कोष्ठे सद्यःशुद्धौ नवज्वरे ॥
अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ ।
हिक्कायां स्नेहपाने च शीताम्बु परिवर्जयेत् ॥

### अल्पजलपानस्य विषयाः ।

अरोचके प्रतिश्याये मन्देऽग्नौ श्वयथौ क्षये ।
मुखप्रसेके जठरे कुष्ठे नेत्रामये ज्वरे ।
व्रणे च मधुमेहे च पिबेत् पानीयमल्पकम् ॥

### जलपानस्यावश्यकता ।

जीवनं जीविनां जीवो जगत् सर्वन्तु तन्मयम् ।
अतोऽत्यन्तनिषेधेन न क्वचिद्वारि वार्य्यते ॥
हारीतश्च । तृष्णा गरीयसी घोरा सद्यः प्राणविनाशिनी ।
तस्माद्देयं तृषार्त्ताय पानीयं प्राणधारणम् ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
अतः सर्वास्ववस्थासु न क्वचिद्वारि वर्जयेत् ॥

### प्रशस्तं जलम् ।

अगन्धमव्यक्तरसं सुशीतं तर्षनाशनम् ।
अच्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥

### निन्दितजलम् ।

पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् ॥
कलुषं छन्नमम्भोजपर्णनीलीतृणादिभिः ।
दुर्दर्शजमसंस्पृष्टं सौरचान्द्रमरीचिभिः ॥
अनार्त्तवं वार्षिकन्तु प्रथमं तच्च भूमिगम् ।
व्यापन्नं परिहर्त्तव्यं सर्वदोषप्रकोपनम् ॥
तत् कुर्य्यात् स्नानपानाभ्यां तृष्णाध्मानोदरज्वरान् ।
कासाग्निमान्द्याभिष्यन्दकण्डूगण्डादिकं तथा ॥

दुष्टजलस्य निर्दोषीकरणोपायः ।

निन्दितञ्चापि पानीयं कथितं सूर्य्यतापितम् ।
सुवर्णं रजत लौह पाषाण सिकतामपि ॥
भृष्ठ सन्ताप्य निर्वाप्य सप्तधा साधित तथा ।
कर्पूरजातिपुन्नागपाटलादि सुवासितम् ।
शुचिसान्द्रपटस्राविं क्षुद्रजन्तुविवर्जितम् ॥

पीतस्य जलस्य पाककालः ।

आम जलं जीर्य्यति यामयुग्माद्
यामैकमात्रात् शृतशीतलञ्च ।
तदर्द्धमात्रेण शृत कदुष्णं
पयःप्रपाके त्रय एव कालाः ॥

---

# अष्टविंशोऽध्यायः ।

---

अथ तैलवर्गः ।

तैलम् ।

तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम् ।
तत्तु वातहरं सर्वं विशेषात् तिलसम्भवम् ॥

तिलतैलम् ।

तिलतैलं गुरु स्थैर्य्यबलवर्णकरं सरम् ।
वृष्यं विकाशि विषदं मधुरं रसपाकयोः ॥

सूक्ष्मं कषायानुरसं तिक्तं वात कफापहम् ।
वीर्य्ये णोष्णं हिमं स्पर्शे वृंहणं रक्तपित्तकृत् ॥
लेखनं बद्धविण्मूत्रं गर्भाशयविशोधनम् ।
दीपनं पुष्टिदं मेध्यं व्यवायि व्रणमेहनुत् ॥
श्रोत्रयोनिशिरःशूलनाशन लघुताकरम् ।
त्वच्यं केश्यञ्च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा ॥
छिन्नभिन्नच्युतोत्पिष्टमथितं चतपिच्छिते ।
भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते ॥
तथाभिहतनिर्भुग्ने मृगव्याघ्रादिविक्षते ।
वस्तौ पानेऽन्नसंस्कारे नस्ये कर्णाक्षिपूरणे ।
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ॥
ननु वृंहणलेखनयोः सामानाधिकरण्यमित्याह ।
रूक्षादिदुष्टः पवनः स्रोतः सङ्कोचयेद्यदा ।
रसोऽसम्यक् वहन् कार्श्यं कुर्य्याद्रक्ताद्यवर्द्धनम् ॥
तेषु प्रवेष्टुं सरता सौक्ष्म्यस्निग्धत्वमार्द्दवैः ।
तैलं क्षम रसं नेतुं कृशानां तेन वृंहणम् ॥
व्यवायि सूक्ष्म तीक्ष्णोष्णसरत्वैर्मेदसः क्षयम् ।
शनैः प्रकुरुते तैल तेन लेखनमीरितम् ॥
द्रुतं पुरीषं बध्नाति स्खलितं तत् प्रवर्त्तयेत् ।
ग्राहक सारकञ्चापि तेन तैलमुदीरितम् ॥

सर्षपतैलम् ।

दीपनं सार्षपं तैलं कटुपाकरसं लघु ।
लेखनं स्पर्शवीर्य्योष्णं तीक्ष्णं पित्तास्रदूषकम् ॥
कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम् ।

कण्डूकुष्ठक्रिमिश्वित्रकोठदुष्टव्रणप्रणुत् ।
तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत् ॥

तुवरीतैलम् ।

तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित् ।
वह्निकृद्विषहृत् कण्डूकुष्ठकोठक्रिमिप्रणुत् ।
मेदोदोषापहञ्चापि व्रणशोथहरं परम् ॥

अतसीतैलम् ।

अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत् ।
कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु ॥
मलकृद्रसतः स्वादु ग्राहि त्वग्दोषहृद्घनम् ।
वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे ।
अनुपानविधौ चापि प्रयोज्यं वातशान्तये ॥

कुसुम्भतैलम् ।

कुसुम्भतैलमम्लं स्यादुष्णं गुरु विदाहि च ।
चक्षुर्भ्यामहितं बल्यं रक्तपित्तकफप्रदम् ॥

खसबीजतैलम् ।

तैलं तु खसबीजानां बल्यं वृष्यं गुरु स्मृतम् ।
वातहृत् कफहृच्छीतं स्वादुपाकरसं च तत् ॥

एरण्डतैलम् ।

एरण्डतैलं तीक्ष्णोष्णं दीपनं पिच्छिलं गुरु ।
वृष्यं त्वच्यं वयस्यञ्च मेधाकान्तिबलप्रदम् ॥
कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम् ।
विस्रं स्वादु रसे पाके सतिक्तं कटुकं सरम् ॥
विषमज्वरहृद्रोगपृष्ठगुह्यादिशूलनुत् ।

हन्ति वातोदरानाहगुल्माष्ठीलाकटिग्रहान् ॥
वातशोणितविड्बन्धब्रध्नशोथामविद्रधीन् ।
आमवातगजेन्द्रस्य शरीरवनचारिणः ॥
एक एव निहन्तायमेरण्डस्नेहकेशरी ॥

रालतैलम् ।

तैलं सर्ज्जरसोद्भूत विस्फोटव्रणनाशनम् ।
कुष्ठपामाक्रिमिहरं वातश्लेष्मामयापहम् ॥

शीतांशुतैलम् ।

कर्पूरतैलं हैपेयं सौगन्धिकमथैलकम् ।
शीतांशुतैल पर्णोत्थ श्यावतैलमपि स्मृतम् ॥
शीतांशुतैलमाक्षेपशमनं वायुनाशनम् ।
स्वेदन शूलहृच्छोथं ज्वरघ्नं कफनुत् परम् ॥
आमवाते तथाध्माने ज्वरे च शिरसो गदे ।
दन्तरोगे च भग्ने च हैपेयं परियुज्यते ॥

मात्रा ३ विन्दवः ।

यक्षद्रुमतैलम् ।

यक्षद्रुतैलं चतहृत् कुष्ठामयविनाशनम् ।
कफघ्नं लेखन कण्डूहरं जन्तुविषापहम् ॥

अस्य मात्रा ८ विन्दवः ।

वातादतैलम् ।

वातादतैल मृदु रेचन स्यात्
वाजीकर मूर्द्धगदप्रहन्तृ ।
पित्तानिलघ्न खलु दाहनाशि

लावण्यदं मेहहरं सुशीतम् ॥

मात्रा २ माषकौ।

नारिकेलतैलम्।

नारिकेलफलोद्भूत तैल वाजीकरं गुरु।
पोषण क्षीणधातूनां वातपित्तप्रणाशनम् ॥
शुक्रे नष्टे प्रमेहे च श्वासे कासे च यक्ष्मणि।
मेधालोपे च हितदं चताल्लकरणं तथा ॥

मात्रा २ माषकौ।

करञ्जतैलम्।

करञ्जतैलं तीक्ष्णोष्णं क्रिमिहृद्रक्तपित्तकृत्।
नयनामयवातार्त्तिकुष्ठकण्डूव्रणप्रणुत्।
वायुनुत् पित्तकृत् किञ्चिल्लेपनाच्चर्मदोषहृत् ॥

मात्रा ५ विन्दवः।

पाटलीतैलम्।

वामनं पाटलीतैलं कुष्ठकण्डूविमर्दनम्।
बलवह्निप्रद चर्मदोषहन्तृ रसायनम् ॥

मात्रा १० विन्दव।

जातीफलतैलम्।

तैलं जातीफलोद्भूतं समुत्तेजनमग्निदम्।
जीर्णातिसारशमनमाध्मानाक्षेपशूलहृत्।
आमवातहरं बल्यं दन्तवेष्टव्रणार्त्तिनुत् ॥

मात्रा ५ विन्दवः।

लवङ्गतैलम्।

देवपुष्पभव तैलमग्निकृद्वातनाशनम्।

दन्तवेष्टक्षतार्त्तिघ्नं गर्भिण्या वमनापहम्॥

मात्रा ५ विन्दवः।

त्वाचतैलम्।

वह्निसादानिलहरमाध्मानाचेपनाशनम्।

वान्त्युत्क्लेशप्रशमनं संग्राहि दशनार्त्तिहृत्।

त्वाचं तैलं रुज स्नावि तोये चिप्तं निमज्जति॥

मात्रा ५ विन्दवः।

दीप्यकतैलम्।

दीपन्यास्तैलमाग्नेयं शूलाचेपानिलान्तकृत्।

आध्मानाजीर्णदुर्नामग्रहणीदोषनाशनम्॥

मिषितैलम्।

तैल मैषेयमाग्नेय शूलाध्मानानिलप्रणुत्॥

मात्रा ५ विन्दवः।

जीरकतैलम्।

मिषितैलगुण ज्ञेयं तैल जीरकसम्भवम्॥

मात्रा ५ विन्दवः।

शृगालकण्टकतैलम्।

शृगालकण्टकोद्भूतं तैलं भग्नव्रणापहम्।

आमवातप्रशमनं निर्य्यासोऽस्याचिरोगहृत्।

निकुम्भतैलम्।

तैलं निकुम्भवीजोत्थमत्युग्रं रेचनं परम्।

आनाहमुदरं हन्ति संन्यासञ्च शिरोगदम्॥

धनुःस्तम्भं तथोन्मादं गदमेकाङ्गसंज्ञकम्।

आमवातञ्च शोथञ्च मर्दनात् कासशातनम् ॥
मात्रा १ विन्दुः ।

सर्वतैलगुणाः ।

तैलं स्वयोनिगुणकृद्वाग्भटेनाखिल मतम् ।
अतः शेषस्य तैलस्य गुणा ज्ञेयाः स्वयोनिवत् ॥

---

## अष्टत्रिंशोऽध्यायः ।

---

अथ मूत्रवर्गः ।

गोमूत्रम् ।

गोमूत्रं कटु तीक्ष्णोष्णं चारं तिक्तं कषायकम् ।
लघ्वग्निदीपनं मेध्यं पित्तकृत् कफवातहृत् ॥
शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् ।
किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ।
कासश्वासापहं शोथकामलापाण्डुरोगहृत् ॥

अन्यच्च कण्डूकिलासगदशूल मुखाक्षिरोगान्
गुल्मातिसारमरुतदामयमूत्ररोधान् ।
कास सकुष्ठजठरक्रिमिपाण्डुरोगान्
गोमूत्रमेकमपि पीतमपाकरोति ॥
सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम् ।
अतोऽविशेषात् कथने मूत्रं गोमूत्रमुच्यते ॥

पुनरुक्तं ।

प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् ।

शूलगुल्मरुजानाहकामलापाण्डुरोगहृत्।
कषाय तिक्ततीक्ष्णञ्च पूरणात् कर्णशूलनुत् ॥

मेषमूत्रम्।

अविमूत्रं सतिक्तं स्यात् स्निग्धं पित्ताविरोधि च ॥

छागमूत्रम्।

आज कषायमधुर पथ्य दोषन्निहन्ति च ॥

माहिषमूत्रम्।

अर्शःशोफोदरघ्नन्तु सचारं माहिषं सरम्।

हस्तिमूत्रम्।

हास्तिकं लवणं मूत्र हितन्तु क्रिमिकुष्ठिनाम्।
प्रशस्त बन्धविन्मूत्रविषश्लेष्मामयार्शसाम् ॥

उष्ट्रमूत्रम्।

सतिक्त श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते ॥

अश्वमूत्रम।

वाजिना तिक्तकटुकं कुष्ठव्रणविषापहम ॥

गर्द्दभमूत्रम्।

खरमूत्रमपस्मारोन्मादग्रहविनाशनम् ॥

नरमूत्रम्।

नरमूत्रं गरं हन्ति सेवितन्तद्रसायनम्।
रक्तपामाहर तीक्ष्णं सचारलवण स्मृतम् ॥

गोऽजाविमहिषीणा तु स्त्रीणा मूत्र प्रशस्यते।
खरोष्ट्रेभनराश्वाना पुंसां मूत्रं हित स्मृतम् ॥

---

# ऊनचत्वारिंशोऽध्यायः ।

—— 

अथ लवणक्षारवर्गः ।

सैन्धवम् ।

सैन्धवोऽस्त्री शीतशिव माणिमन्थश्च सिन्धुजम् ॥
सैन्धवं लवणं स्वादु दीपनं पाचन लघु ।
स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत् ॥
इदं पञ्जावदेशीये पर्वतखनी लभ्यम् ।

सौवर्चलम् ।

सौवर्चल स्याद्रुचकमक्षं पाक्यञ्च तन्मतम् ।
रुचकं रोचनम्भेदि दीपनम्पाचनम्परम् ॥
सुस्नेह वातनुन्नातिपित्तल विशदं लघु ।
उद्गारशुद्धिद सूक्ष्म विबन्धानाहशूलजित ॥

विड़म् ।

विडं पाकञ्च कृतक तथा द्राविडमासुरम् ।
विड़ं सक्षारमूर्द्धाधः कफवातानुलोमनम् ॥
दीपन लघु तीक्ष्णोष्णं रूक्ष रुच्यं व्यवायि च ।
विबन्धानाहविष्टम्भहृद्रुग्गौरवशूलनुत् ॥

सामुद्रलवणम् ।

सामुद्रं यत्तु लवणमक्षिवं वशिरञ्च तत् ।
समुद्रजं सागरज लवणोदधिसम्भवम् ॥

सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु ।
नात्युष्णं दीपनं भेदि सक्षारमविदाहि च ।
श्लेष्मलं वातनुत् तिक्तमरूक्षं नातिशीतलम् ॥

रौमकम् ।

शाकम्भरीयं कथितं गुडाख्यं रौमकन्तथा ।
गुडाख्यं लघु वातघ्नमत्युष्णं भेदि पित्तलम् ।
तीक्ष्णोष्णञ्चापि सूक्ष्मञ्चाभिष्यन्दि कटुपाकि च ॥

औद्भिदम् ।

औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम् ।
क्षारं गुरु कटु स्निग्धं शीतलं वातनाशनम् ॥

क्षारलवणम् ।

शैत्यदं क्षारलवणं मूत्रलं मलभेदनम् ।
हन्ति शूलं ज्वरं दाहं विबन्धाध्माननाशनम् ॥
सैन्धवं रुचकं चापि विडं सामुद्ररौमकम् ।
एकद्वित्रिचतुःपञ्चलवणानि क्रमादिह ॥

चणकाम्लम् ।

चणकाम्लकमत्युष्णं दीपनं दन्तहर्षणम् ।
लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् ॥

नरसारः ।

औष्ट्रं वा माहिषं गव्यं पुरीषं भस्मतां गतम्
क्षारपाकविधानेन नृसारं सिद्धमुच्यते ॥

अन्यच्च । आकृष्टसारं मृदजातसङ्गं
द्रावेण युक्तं परिशोषयेच्च ।
अधोर्द्धपातेन विशोधितोऽसौ

पात्रान्तरामो नरसार उक्तः ॥

पटुः प्रवृत्तिशीलानां स्रावणः शोथहृद्विमः ।
यकृद्दोषे ज्वरे प्लीह्नि शिरःशूलेऽर्बुदादिषु ॥
स्तनरोगे रक्तपित्ते कासे भग्नामये तथा ।
योनिव्यापत्सु च ज्ञेयो नरसारः सुखावहः ॥

यवक्षारः ।

यवशूकभवे क्षारे क्षिप्ता प्रस्थोन्मिते जलम् ।
द्रोणमानमथाम्भस्तत् सक्षारं पृथुवाससा ॥
निःसमकृत्वो विस्राव्य पचेत् तीव्रेण वह्निना ।
निःशेषे सलिले तस्मिन् यवक्षारोऽवशिष्यते ॥

सर्जिकाक्षारः ।

मद्रादिविषयोद्भूतान् संछिद्य क्षारवृक्षकान् ।
दीपयेद्वह्निना सम्यक् तदधः स्थापयेद्घटान् ॥
अदाद्यावरणैर्युक्तान् सूक्ष्मच्छिद्रसमन्वितैः ।
कृशानौ ज्वलिते तत्र भूयस्तान् सरसान् द्रुमान् ॥
दहेच्च क्रमशः क्षिप्ता तेन तेभ्यः स्रुतो रसः ।
घटेषु निपतेत् तेषु स शुष्कः स्वर्जिकोच्यते ॥

उभयोर्नामानि गुणाश्च ।

पाक्यः क्षारो यवक्षारो यावशूको यवाग्रजः ।
स्वर्जिकापि स्मृतः क्षारः कापोतः सुखवर्चकः ॥
कथितः स्वर्जिकाभेदो विशेषस्तु सुवर्चिकः ।
यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः ॥
निहन्ति शूलवातामश्लेष्मश्वासगलामयान् ।
पाण्ड्वर्शो ग्रहणीगुल्मानाहप्लीहहृद्गदान् ॥

स्वर्जिकाल्पगुणा तस्माद्विशेषाद्गुल्मशूलहृत्।
सुवर्चिका स्वर्जिकावद्बोद्धव्या गुणतो जनैः॥

क्षारद्वयं क्षारत्रयञ्च।

स्वर्जिका यावशूकश्च क्षारद्वयमुदाहृतम्।
टङ्कनेन युतं तत्तु क्षारत्रयमुदीरितम्।
मिश्रितन्तूक्तगुणकृद्विशेषाद्गुल्महृत् परम्॥

क्षाराष्टकम्।

पलाशवज्रिशिखरिचिञ्चार्कतिलनालजाः।
यवजः स्वर्जिका चेति क्षाराष्टकमुदाहृतम्॥
क्षारा एतेऽग्निना तुल्या गुल्मशूलहरा भृशम्॥

---

# चत्वारिंशोऽध्यायः।

---

अथ सन्धानवर्गः।

मद्यम्।

मद्यं बहुविधं प्रोक्तं तन्नाम मदिरा सुरा।
वारुणीरा महानन्दा तत्त्वकारणमानिका:॥
अमृता माधवी मत्ता मदनी मोदिनी मधु।
हलिप्रिया देवसृष्टा कामिनी कापिशीत्यपि॥

गौडी।

धातकी गुड़मुख्या या गौड़ी सा मदिरोच्यते।

तीक्ष्णोष्णा मधुरा गौड़ी वातघ्नी बलपित्तकृत्।
कान्तितृप्तिकरी पथ्या वह्निकामप्रदीपनी॥

माध्वी।

मध्वादिर्विहिता या तु माध्वी सा मदिरोच्यते।
नात्युष्णा मधुरा माध्वी पित्तानिलनिसूदनी।
कामलापाण्डुगुल्मार्शःप्रमेहप्लीहघातिनी॥

पैष्टी।

कृता बहुविधैर्धान्यैः पैष्टीति मदिरोच्यते।
कट्वम्ला वातकफहृत् तीक्ष्णा गौड़ीसमा च सा॥

कादम्बरी।

कादम्बरीति कथिता नानाद्रव्यकदम्बजा।
कादम्बरी सुमधुरा श्रमपित्तप्रणाशिनी॥

माधूकी।

मधूकपुष्पजाता या माधूकी सा निगद्यते।
माधूकी मादिनी बल्या पुष्टिकृत् कामवर्द्धिनी॥

मैरेयी।

मालूरमूलं बदरी शर्करा च तथैव च।
एषामेकत्र सन्धानान्मैरेयी मदिरा मता॥
मैरेयी वातहृद्बल्या ज्वरघ्नी वह्निदीपनी॥

सर्वेषां सुराणां सामान्या गुणाः।

रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम्।
प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम्॥
स्वापनं नष्टनिद्राणां मूकानां वाग्विबोधनम्।
बोधनञ्चातिनिद्राणां विबन्धानां विबन्धनुत्॥

वधबन्धपरिक्लिष्टदुःखानाञ्चावमोहनम्।
परं वाजीकरं मद्यं प्रीतिसंयोगवर्द्धनम्॥
बहु दुःखचतस्यास्य शोकेनोपहतस्य च।
विश्रामो जीवलोकस्य मद्यं युक्त्यानिषेवितम्॥
पीयमानस्य मद्यस्य विज्ञातव्यास्त्रयो मदाः।
प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान् निशामय॥
प्रहर्षणः प्रीतिकरः पानान्न गुणदर्शकः।
वाद्यगीतप्रहासानां कथानाञ्च प्रवर्त्तकः॥
न च बुद्धिस्मृतिहरो विषयेषु न शक्तिहृत्।
सुखनिद्राप्रबोधश्च प्रथमः ससुखो मदः॥
किमुक्तेनात्र बहुना यत् सुखं प्रथमे मदे।
तस्योपमा जगत्यत्र क्वचिदेव न दृश्यते॥
मुहुः स्मृतिर्मुहुर्मोहो व्यक्ता मज्जति वा मुहुः।
युक्तायुक्तप्रलापश्च प्रचलायनमेव च॥
स्थानपानान्नसांकथ्ये योजना सविपर्य्यया।
लिङ्गान्येतानि जानीयादाविष्टे मध्यमे मदे॥
तृतीयस्तु मदं प्राप्य भग्नदार्विव निष्क्रियः।
मदमोहावृतमना जीवन्नपि मृतोपमः॥
रमणीयान् स विषयान् न वेत्ति न सुहृज्जनम्।
यदर्थं पीयते मद्यं रतिं ताञ्च न विन्दति॥
कार्य्याकार्य्यं सुखं दुःखं लोके यच्च हिताहितम्।
यदवस्थो न जानाति कोऽवस्थां तां व्रजेद्बुधः॥
मद्योपहतविज्ञानो वियुक्तः सात्त्विकैर्गुणैः।
स दूष्यः सर्वभूतानां निन्द्यश्चाग्राह्य एव च॥

मुखकर्णशिरोरोगेषु वेदनायां स्तनामये ।
हृद्दौ व्रणे तथा भग्ने वह्निमेतं प्रयुज्यते ॥

सीधु ।

इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसश्च सः ।
आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः ॥
सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत् ।
वातपित्तकरो हृद्यः स्नेहनो रोचनो हरेत् ॥
विबन्धाध्मानशोफार्शः प्रमेहान् श्लेष्मिकामयान् ।
तस्मादल्पगुणः शीतरसः पुष्टिबलप्रदः ॥

काञ्जिकम् ।

काञ्जिकं भेदि तीक्ष्णोष्णं पित्तकृच्चाग्निवर्द्धनम् ।
वान्तिश्रान्तिक्लमहरं ज्वरघ्नं तृप्तिकृत् परम् ॥

धान्याम्लम् ।

धान्याम्लं धान्ययोनित्वात् प्रीणनं लघु दीपनम् ।
अरुचौ रक्तरोगेषु हितमास्थापने च तत् ॥

---

## एकचत्वारिंशोऽध्यायः ।

---

अथ गणाः ।

त्रिफला ।

पथ्याविभीतधात्रीणां फलैः स्यात् त्रिफलासमैः ।
फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्त्तिता ॥

त्रिफला कफपित्तघ्नी मेहकुष्ठहरा सरा ।
चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ॥

त्रिकटुकम् ।

विश्वोपकुल्या मरिचं त्रयं त्रिकटु कथ्यते ।
कटुत्रिकन्तु त्रिकटुस्त्र्यूषणं व्योष उच्यते ॥
त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् ।
गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ॥

त्रिजातकचातुर्जातके ।

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ।
नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥
तद्द्वयं रेचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत् ।
लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम् ॥

चतुरूषणम् ।

त्र्यूषणं सकणामूलं कथितं चतुरूषणम् ।
व्योषस्येव गुणाः प्रोक्ता अधिकाश्चतुरूषणे ॥

पञ्चकोलम् ।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पञ्चभिः कोलमात्रं यत् पञ्चकोलं तदुच्यते ॥
पञ्चकोलं रसे पाके कटुकं रुचिकृन्मतम् ।
तीक्ष्णोष्णं पाचनं श्रेष्ठं दीपनं कफवातनुत् ।
गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनम् ॥

षडूषणम् ।

पञ्चकोलं समरिचं षडूषणमुदाहृतम् ।
पञ्चकोलगुणं तत्तु रूक्षमुष्णं विषापहम् ॥

## जीवनीयगणः ।

अष्टवर्गः सयष्टीको जीवन्ती मुद्गपर्णिका ।
माषपर्णी गणोऽयन्तु जीवनीयगण. स्मृतः ॥
जीवनो मधुरश्चापि नाम्ना स परिकीर्त्तित. ।
जीवनीयगण' प्रोक्तः शुक्रकृद्बृंहणो हिमः ।
गुरुर्गर्भप्रद. स्तन्यकफकृत् पित्तरक्तहृत् ।
तृष्णां शोषं ज्वर दाहं रक्तपित्त व्यपोहति ॥

क्षीरवृक्षपञ्चवल्कलयोर्लक्षणं गुणाश्च ।

न्यग्रोधोदुम्बराश्वत्थपारीषप्लक्षपादपा·
पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम् ॥
केचित्तु पारीषस्थाने शिरीषं वेतस परे वदन्तीति शेषः ।

क्षीरवृक्षा हिमा वर्ण्या योनिरोगव्रणापहा ।
रूक्षाः कषाया मेदोघ्ना विसर्पामयनाशना' ॥
शोथपित्तकफास्रघ्ना' स्तन्या भग्नास्थियोजका' ।
त्वक्पञ्चक हिमं ग्राहि व्रणशोथविसर्पजित् ॥
तेषां पत्र' हिमं ग्राहि कफवातास्रनुल्लघु ।
विष्टम्भाध्मानजित् तिक्त' कषायं लघु लेखनम् ॥

## अञ्जनादिर्गण ।

अञ्जनरसाञ्जननागपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधुकञ्चेति ।

अञ्जनादिर्गणो ह्येष रक्तपित्तनिवर्हणः ।
विषोपशमनो दाहं निहन्त्याभ्यन्तरं तथा ॥

अम्बष्ठादिः ।

अम्बष्ठाधातकीकुसुमसमङ्गाकट्वङ्गमधुकविल्वपेशिका-सावररोध्रपलाशनन्दीवृक्षपद्मकेशराणि चेति । एतद्ग-णस्य गुणाः प्रियङ्ग्वादिगणस्येव ।

अर्कादिः ।

अर्कालर्ककरञ्जद्वयनागदन्ती-मयूरकभार्गीरास्नेन्द्रपुष्पी-क्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति ।

अर्कादिको गणो ह्येष कफमेदोविषापहः ।
कृमिकुष्ठप्रशमनो विशेषाद् व्रणशोधनः ॥

आमलक्यादिः ।

आमलकीहरीतकीपिप्पल्यश्चित्रकश्चेति ।

आमलक्यादिरित्येष गणः सर्वज्वरापहः ।
चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः ॥

आरग्वधादिः ।

आरग्वधमदनगोपघोण्टाकुटजपाठाकण्टकीपाटला-मूर्वेन्द्रयवसप्तपर्णनिम्बकुरण्टकदासीकुरण्टकगुडूचीचित्रक-शार्ङ्गेष्टाकरञ्जद्वयपटोलकिराततिक्तानि सुषवी चेति ।

आरग्वधादिरित्येष गणः श्लेष्मविषापहः ।
मेहकुष्ठज्वरवमिकण्डूघ्नो व्रणशोधनः ॥

उत्पलादिः ।

उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकाणि मधुकञ्चेति ।

उत्पलादिरयं दाहपित्तरक्तविनाशनः ।
पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः ॥

ऊषकादिः ।

ऊषकसैन्धवशिलाजतुकासीसद्वयहिङ्गूनि तुत्थकञ्चेति ।

ऊषकादिः कफं हन्ति गणो मेदोविशोषणः ।
अश्मरीशर्करामूत्रकृच्छ्रगुल्मप्रणाशनः ॥

एलादिः ।

एलातगरकुष्ठमांसीध्यामकत्वक्-पत्रनागपुष्पप्रियङ्गु ह-रेणुकाव्याघ्रनखशुक्ति-चण्डा स्थौणेयकश्रीवेष्टक चोचचोरक-वालकगुग्गुलुसर्जरसतुरुष्ककुन्दुरुकागुरुस्पृक्कोशीरभद्रदारु-कुङ्कुमानि पुन्नागकेशरञ्चेति ।

एलादिको वातकफौ निहन्याद्विषमेव च ।
वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ॥

काकोल्यादिः ।

काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णी-मेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मक-प्रपौ-ण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति ।

काकोल्यादिरयं पित्तशोणितानिलनाशनः ।
जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥

गुडूच्यादिः ।

गुडूचीनिम्बकुस्तुम्बुरुचन्दनानि पद्मकञ्चेति ।

एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥
हृल्लासारोचकवमीपिपासादाहनाशनः ॥

त्रप्वादिः ।

त्रपुसीसताम्ररजतकृष्णलोहसुवर्णानि लोहमलञ्चेति ।

गणस्त्वम्बादिरित्येष गरक्रिमिहरः परः ।
पिपासाविषहृद्रोगपाण्डुमेहहरस्तथा ॥

त्रिकटुकम् ।

पिप्पलीमरिचशृङ्गवेराणि त्रिकटुकम् ।
त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान् ।
निहन्याद्दीपनं गुल्मपीनसाग्न्यल्पतामपि ॥

त्रिफला ।

हरीतक्यामलकविभीतकानि त्रिफला ।
त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी ।
चक्षुष्या दीपनी चैव विषमज्वरनाशिनी ॥

त्रिवृतादि. ।

त्रिवृताश्यामादन्तीद्रवन्तीसप्तलाशङ्खिनीविषाणिकागवाक्षीच्छगलान्त्री-स्नुक्सुवर्णक्षीरी-चित्रककिणिहीकुशकाशतिल्वककम्पिल्लकरम्यकपाटलापूगहरीतक्यामलकविभीतकनीलिनीचतुरङ्गुलैरण्डपूतीकमहावृक्ष-सप्तच्छदार्कज्योतिष्मत्यश्चेत्यधोभागहाराणि ।

न्यग्रोधादि. ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षमधूककपीतनककुभाम्रकोशाम्रचोरकपत्रजम्बूद्वयपियालमधुकरोहिणी-वञ्जुल-कदम्बबदरीतिन्दुकीसल्लकीरोध्रसावररोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति ।

न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः ।
रक्तपित्तहरो दाहमेदोघ्नो योनिदोषहृत् ॥

पञ्च पञ्चमूलानि।

तत्र त्रिकण्टकबृहतीद्वयपृथक्पर्ण्यो विदारीगन्धा चेति कनीयः। ( स्वल्पपञ्चमूलम्। )

कषायतिक्तमधुरं कनीय पञ्चमूलकम्।
वातघ्नं पित्तशमन बृंहणं बलवर्द्धनम्॥

विल्वाग्निमन्थटुण्टुकपाटला-काश्मर्यश्चेति महत। ( बृहत् पञ्चमूलम्। )

सतिक्तं कफवातघ्न पाके लघ्वग्निदीपनम्।
मधुरानुरसञ्चैव पञ्चमूलं महत् स्मृतम्॥

विदारीसारिवारजनीगुडुच्योऽजशृङ्गी चेति वल्लीसंज्ञ.। ( वल्लीपञ्चमूलम्। )

करमर्द्दत्रिकण्टकसैरीयकशतावरीगृध्रनख्य इति कण्टकसंज्ञः। ( कण्टकपञ्चमूनम्। )

रक्तपित्तहरौ ह्येतौ शोफत्रयविनाशनौ।
सर्वमेहहरौ चैव शुक्रदोषविनाशनौ॥

कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञकः। ( तृणपञ्चमूलम्। )

मूत्रदोषविकारञ्च रक्तपित्त तथैव च।
अन्त्यं प्रयुक्तं चीरेण शीघ्रमेव विनाशयेत्॥
एषां वातहरावाद्यावन्त्यः पित्तविनाशनः।
पञ्चकौ श्लेष्मशमनावितरौ परिकीर्त्तितौ॥

पटोलादि।

पटोलचन्दनकुचन्दनमूर्वागुडूचीपाठाः कटुरोहिणी चेति।

पटोलादिगणः पित्तकफारोचकनाशनः ।
ज्वरोपशमनो व्रण्यश्छर्दिकण्डूविषापहः ॥

परूषकादिः ।

परूषकद्राक्षाकट्फलदाड़िमराजादनकतकफलशाक-फलानि त्रिफला चेति ।

परूषकादिरित्येष गणोऽनिलविनाशनः ।
मूत्रदोषहरो हृद्यः पिपासाघ्नो रुचिप्रदः ॥

पिप्पल्यादिः ।

पिप्पली-पिप्पलीमूल-चव्य-चित्रकशृङ्गवेरमरिचहस्ति-पिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्ब-फलहिङ्गुभार्गीमधुरसातिविषावचाविड़ङ्गानि कटुरोहिणी चेति ।

पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ।
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥

प्रियङ्ग्वादिः ।

प्रियङ्गुसमङ्गाधातकीपुन्नागरक्तचन्दनकुचन्दनमोचरस-रसाञ्जनकुम्भीकस्रोतोऽञ्जनपद्मकेशरयोजनवल्लयो दीर्घमूला चेति ।

अम्बष्ठाधातकीकुसुमेत्यादि प्रागुक्तोऽम्बष्ठादिर्गणः ।
गणौ प्रियङ्ग्वम्बष्ठादौ पक्वातीसारनाशनौ ।
सन्धानीयौ हितौ पित्ते व्रणानाञ्चापि रोपणौ ॥

मुष्ककादिः ।

मुष्ककपलाशधवचित्रकमदनवृक्षशिंशपावज्रवृक्षा-स्त्रिफला चेति ।

मुष्ककादिर्गणो ह्येष मेदोघ्नः शुक्रदोषहृत् ।
मेहार्शःपाण्डुरोगघ्नः शर्कराश्मरिनाशनः ॥

मुस्तकादिः ।

मुस्ताहरिद्रादारुहरिद्राहरीतक्यामलकविभीतककुष्ठ-हैमवतीवचापाठाकटुरोहिणी शार्ङ्गष्टातिविषा-द्राविड़ी-भल्लातकानि चित्रकश्चेति ।

एष मुस्तादिको नाम्ना गणः श्लेष्मनिसूदनः ।
योनिदोषहरः स्तन्यशोधनः पाचनस्तथा ॥

रोध्रादिः ।

रोध्रसावररोध्रपलाशकुटन्नटाशोकफञ्जीकट्फलैलवा-लुकसल्लकीजिङ्गिनीकदम्बशालाः कदली चेति ।

एष रोध्रादिरित्युक्तो मेदःकफहरो गणः ।
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥

लाक्षादिः ।

लाक्षारेवतकुटजाश्वमारकट्फल-हरिद्राद्वयनिम्बसप्त-च्छदमालत्यस्त्रायमाणा चेति ।

कषायस्तिक्तमधुरः कफपित्तार्त्तिनाशनः ।
कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधनः ॥

वचादिः ।

वचामुस्तातिविषाभयाभद्रदारूणि नागेश्वरञ्चेति । हरिद्रा दारुहरिद्रेत्यादि हरिद्रादिर्गणो यथास्थलं वक्ष्यते ।

एतौ वचाहरिद्रादी गणौ स्तन्यविशोधनौ ।
आमातीसारशमनौ विशेषाद्दोषपाचनौ ॥

वारुणादिः ।

वरुणार्त्तगलशिग्रुमधुशिग्रुतर्कारी-मेषशृङ्गीपूतिकनक्तमालमोरटाग्निमन्थसैवीरकद्वयबिम्बीवसुक-वसिर-चित्रकशतावरीबिल्वदर्भा बृहतीद्वयञ्चेति ।

वरुणादिर्गणो ह्येष कफमेदोनिवारणः ।
विनिहन्ति शिरःशूलगुल्माभ्यन्तरविद्रधीन् ॥

विदारीगन्धादिः ।

विदारीगन्धा विदारी सहदेवा विश्वदेवा श्वदंष्ट्रा पृथक्पर्णी शतावरी सारिवा कृष्णसारिवा जीवकर्षभकौ महासहा क्षुद्रसहा बृहत्यौ पुनर्नवैरण्डौ हंसपादी वृश्चिकाल्यृषभी चेति ।

विदारीगन्धादिरयं गणः पित्तानिलापहः ।
शोषगुल्माङ्गमर्दोर्द्ध्वश्वासकासविनाशनः ॥

वीरतर्वादिः ।

वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाशाश्मभेदकाग्निमन्थमोरटावसुकवसिरभल्लूककुरण्टकेन्दीवरकपोतवङ्काः श्वदंष्ट्रा चेति ।

वीरतर्वादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥

बृहत्यादिः ।

बृहतीकण्टकारिकाकुटजफलपाठा मधुकञ्चेति ।

पाचनीयो बृहत्यादिर्गणः पित्तानिलापहः ।
कफारोचकहृद्रोगमूत्रकृच्छ्ररुजापहः ॥

## श्यामादि ।

श्यामामहाश्यामात्रिवृद्दन्तीशङ्खिनी-तिल्वक कम्पिल्लक-रम्यकक्रमुकपुत्रश्रेणीगवाचीराजवृचकरञ्जद्वय-गुडूचीसप्तलाच्छगलान्त्रीसुधाः सुवर्णचीरी चेति ।

उक्तः श्यामादिरित्येष गणो गुल्मविषापहः ।
आनाहोदरविड्भेदी तथोदावर्त्तनाशनः ॥

## सारिवादि ।

सारिवामधुकचन्दनकुचन्दनपद्मककाश्मरीफलमधूक-पुष्पाण्युशीरञ्चेति ।

सारिवादिः पिपासाघ्नो रक्तपित्तहरो गणः ।
पित्तज्वरप्रशमनो विशेषाद्दाहनाशनः ॥

सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेष-शृङ्गीतिनिशचन्दनकुचन्दन-शिंशपाशिरीषासनधवार्जुनताल-शाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकञ्चेति ।

सालसारादिरित्येष गणः कुष्ठविनाशनः ।
मेहपाण्ड्वामयहरः कफमेदोविशोषणः ॥

## सुरसादि ।

सुरसाश्वेतसुरसाफणिज्झकार्जकभूस्तृणसुगन्धकसुमुख-कालमालकासमर्दचवककुरक-विडङ्ग-कट्फल-सुरसीनिर्गु-ण्डीकुलाहलोन्दुरुकर्णिकाफञ्जीप्राचीबलकाकमाच्यो विष-मुष्टिकश्चेति ।

सुरसादिर्गणो ह्येष कफहृत् क्रिमिसूदनः ।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥

हरिद्रादिः।

हरिद्रादारुहरिद्राकलसीकूटजबीजानि मधुकञ्चेति।
एतद्गणस्य गुणा वचादिगणस्येव।

——

# परिशिष्टम्।

---

## अथ रसायनवर्ग:।

### सोमलता।

सोमवल्ली सोमलता सोमक्षीरी द्विजप्रिया।
सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी॥

### वृद्धदारक:।

वृद्धदारक आवेगी छगली छगलान्त्रिका।
रसायनो वृद्धदार: शोथवातामवातजित्।
कासश्वासज्वरहरो बल्य: पिच्छिल एव च॥

अस्य बीजादिकं ग्राह्यं, मात्रा २ माषकौ।

---

## अथ वातघ्नवर्ग:।

### पारीषोऽश्वत्थभेद:।

पारीषोऽन्य: पलाशश्च कपिचूत: कमण्डलु:।
गर्दभाण्ड: कन्दराल: कपीतनसुपार्श्वकौ॥
पारीषो दुर्जर: स्निग्ध: क्रिमिशुक्रकफप्रद:।
फलेऽम्लो मधुरो मूले कषाय: स्वादुमज्जक:॥

---

## अथ पित्तघ्नवर्ग:।

### हिन्ताल:।

हिन्ताल: स्थूलतालश्च पूगरोटो वृहद्दल:।
स्थिरपत्रो द्विधालेख्य: शिरापत्रोऽस्थिराङ्घ्रिक:॥

हिन्तालो मधुरोऽम्लश्च कफकृत् पित्तदाहनुत् ।
श्रमतृष्णापहारी च शिशिरो वातदोषकृत् ॥

अस्य त्वक् स्वरसादिकं ग्राह्य, त्वचो मात्रा १ माषक', स्वरसस्य च १ कर्ष ।

### आस्यशाखोट' ।

रदद्रुश्चास्यशाखोट स पित्तकफनाशन' ।
वातलश्च क्रिमिं हन्ति पाण्डुताज्वरकामला' ॥

अस्य त्वक्स्वरसादिकं ग्राह्यं, त्वचो मात्रा १ माषक: स्वरसस्य च १ कर्ष: ।

### आवर्त्तकी ।

आवर्त्तकी रक्तपुष्पी पीतकीला विषाणिका ।
आवर्त्तकी कषायाम्ला शीता पित्तनिसूदनी ॥

मात्रा १ माषक. ।

### काकतिन्दुक: ।

काकेन्दु: कुलक' काकपीलुक: काकतिन्दुक' ।
कषायो मधुरोऽम्लश्च काकेन्दु: श्लेषलो गुरु' ।
वातपित्तार्त्तिशमनो वान्तिभ्रान्तिनिसूदन: ।

---

## अथ कफघ्नवर्ग: ।

### नागपुष्पी ।

नागपुष्पी श्वेतपुष्पा नागिनी रामदूतिका ।
नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तनुत् ॥
विनिहन्ति विषं शूलं योनिदोषवमिक्रिमीन् ॥

देवताड: ।

देवताड: खरा वेणी गरी जीमूत इत्यपि ।
देवताड़ः कफहरो मूषादीनां विषप्रणुत् ॥
अस्य मूलं ग्राह्यं, मात्रा १ माषकः ।

हस्तिशुण्डी ।

हस्तिनी हस्तिशुण्डी च शुण्डी धूसरपत्रका ।
शुण्डी कट्वी तथोष्णा च सन्निपातज्वरान्तकृत् ॥
अस्या त्वग्मी ग्राह्य, मात्रा १ तोलकः ।

वृश्चिकाली ।

वृश्चिकाली वृश्चिपत्री विषघ्नी नागदन्तिका ।
सर्पदंष्ट्रामरा काली चोष्ट्रधूसरपुच्छिका ॥
कट्वी तिक्ता वृश्चिकाली हृत्कफपरिशोधिनी ।
बलकृद्रक्तपित्तघ्नी कासश्वासप्रणाशिनी ।
विषघ्नी रोचनी वह्निमान्द्यनुज्ज्वरनाशिनी ॥
अस्या मूलं ग्राह्यं, मात्रा ४ रक्तिकाः ।

अलवणा ।

तीव्रा चालवणा सा स्यात् कफभेदःक्रिमिप्रणुत् ॥

जयन्ती ।

जया जयन्ती तर्कारी नादेयी वैजयन्तिका ।
हरिता विजया सूक्ष्ममूला मोटापराजिता ॥
जयन्ती कफपित्तघ्नी क्रिमिशोथविषप्रणुत् ।
मदगन्धवती तिक्ता कट्वा,ष्णा कण्ठशोधिनी ॥
अस्यास्त्वगादिकं ग्राह्यं, मात्रा १ माषकः ।

---

अथ विरोचनीयवर्गः ।

म्लेच्छाम्लिका । हिन्दी आलुवोखारा ।

म्लेच्छाम्लिका पारसीकफलं तद्रेचनं सरम् ॥

शतपत्री । हिन्दी वसराइ गुल्लाव ।

शतपत्री च गन्धाढ्या सौम्यगन्धा शिवप्रिया ।
सुशीता च सुवृत्ता च सुमना' शतपत्रिका ॥
शतपत्री हिमा तिक्ता सरा कृच्छानिलप्रणुत् ।
दाहज्वरास्रपित्तघ्नी कुष्ठविस्फोटनाशिनी ॥

मुक्तवर्चाः ।

मुक्तवर्चास्तथा रुद्रा वान्तिकृच्च विरेचनी ।
कासश्वासगरघ्नी च ज्वरहृत् कफवातनुत् ॥
एतस्याः स्वरसः पीतः कफोत्सारी च वामनः ।
पायुलेपान्मलोत्सारी कल्को बालेषु युज्यते ॥

अस्याः स्वरसो ग्राह्यः. मात्रा २ माषकौ ।

पटोलमूलम् ।

पटोलमूलमत्यर्थं रेचनं ज्वरनाशनम् ।
आमवातोदरहरं पाण्ड्वामयनिकृन्तनम् ॥

मात्रा १ माषकः ।

---

अथ मूत्रविरेचनीयवर्गः ।

वंशः ।

वंशस्त्वक्सारकर्मौ च त्वचिसारस्तृणध्वजः ।
शतपर्वा शतफली वेणुमास्करतेजनाः ॥

वंशः सरो हिमः स्वादुः कषायो वस्तिशोधनः।
छेदनः कफपित्तघ्नः कुष्ठास्रव्रणदोषजित्॥
तत्करीरः कटुः पाके रसे रूक्षो गुरुः सरः।
कषायः कफकृत् स्वादुर्विदाही वातपित्तलः॥
तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः।
वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः॥
वंशस्य मूलं ग्राह्यं, मात्रा २ माषकौ।

---

आर्त्तवसंग्राहिवर्गः।

आच्छुकः।

आच्छुकस्तु रक्तनद्धः पञ्चोकाच्चिकपक्षिकाः।
रक्तपित्तमतीसारं रक्तस्रावं हरेदयम्॥
मात्रा ६ रक्तिकाः।

राजघासः।

राजघासस्तृणपतिः स पित्तानिलदाहनुत्।
हरेद्रक्तातिसारञ्च रक्तपित्तमसृग्दरम्।
अर्शांसि षड्विधान्येव मूत्रकृच्छ्रञ्च दारुणम्॥
अस्य स्वरसो ग्राह्यः, मात्रा १ कर्षः।

---

अथ गन्धवर्गः।

वाकुचीभेदः। वुच्कीदाना इति लोके।
श्वित्रारिर्वाकुचीभेदः कुष्ठदोषत्रयास्रजित्।
वातरक्तहरो लेपात् सिध्मश्वित्रविनाशनः॥
अस्य वीजं ग्राह्यं, मात्रा १ माषकः।

गन्धपत्रम् ।

गन्धाख्या सौरभेयी च गन्धपत्रं नपुंसकम् ।
गन्धपत्रं वातहरं शीतलं वह्निवर्द्धनम् ॥

दमनकः ।

मुनिर्दमनको दण्डी कुलपत्रः पवित्रकः ।
गन्धोत्कटो ब्रह्मजटी विनीतः कुलपुत्रकः ॥
मुनिपुत्त्रः पुण्डरीको जटिला देवशेखरः ।
शीतो दमनकस्तिक्तः कटुरूष्यः कषायकः ॥
रसायनो विषहरः कण्डूं कुष्ठञ्च विद्रधिम् ।
ग्रहणीं रक्तदोषञ्च नाशयेदविकल्पतः ॥

मात्रा १ माषकः ।

आकाशमांसी ।

आकाशमांसी शैवाली निरालम्बा खसम्भवा ।
अभ्रमांसी सूक्ष्मपत्री गौरी पर्वतवासिनी ॥
आकाशमांसी शीता स्याच्छोथव्रणविषापहा ॥

---

अथ ज्वरघ्नवर्गः ।

घण्टाकर्णः ।

घण्टाकर्णो घण्टकश्च ज्वरघ्नो ऋषिभिःप्रणुत् ॥

मूर्व्वा ।

मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥
मूर्व्वा सरा गुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत् ।

त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा ॥
अस्या मूलं ग्राह्यं, मात्रा २ माषकौ।

धाराकदम्बः।

धाराकदम्बः प्रावृष्यः पुलकी भृङ्गवल्लभः।
मेघाभः प्रियको नीपः प्रावृषेण्यः कलम्बकः ॥
नीपस्य तु गुणाः प्रोक्ताः कदम्बस्येव सूरिभिः।
प्लीहोदरं विशेषेण स्वरसोऽस्य विनाशयेत् ॥

पूतिकरञ्जः। हिन्दी कटकरञ्ज।

प्रकीर्य्यः पूतिकरजः पूतीकः पूतिकोऽपि च।
सुमना रजनीपुष्पः प्रकीर्णः कलिमालकः ॥
कलहनाशनः पूतिकरञ्जः कलिकारकः।
कैडर्य्यः कलिमाल्यश्च पूतीकरज इत्यपि ॥
पूतीकः कटुकस्तिक्तो वीर्य्योष्णो विषरोगहृत्।
वातानिलहरः कुष्ठत्वगामयव्रणप्रणुत् ॥
पूतिकस्य फलं ज्ञेयं विशेषाज्ज्वरनाशनम् ॥

शेफालिका।

शेफाली कटुतिक्तोष्णा विषमज्वरनाशिनी ॥

सुदर्शना।

सुदर्शना सोमवल्ली चक्राह्वा मधुपर्णिका।
सुदर्शना स्वादुरुष्णा कफशोफास्रवातजित् ॥

अथ कासघ्नवर्गः।

दण्डोत्पलम्।

दण्डोत्पलं वह्निकरं श्वासकासक्षयप्रणुत् ॥
मात्रा २ माषकौ।

अथ कण्डूघ्नवर्गः ।

काकादनी ।

हिंस्रा गृध्रनखी तुण्डी काला काकादनी तथा ।
कुष्ठकण्डूव्रणश्वित्रज्वरान् काकादनी हरेत् ॥

चिरविल्वः ।

चिरविल्वो नक्तमालः पुतिकश्चिरविल्वकः ।
पूतिकर्णो वहुफलो रोचनश्च करञ्जकः ।
चिरिविल्वोदकीर्य्यौ च करञ्जः करजस्तथा ॥
चिरविल्वस्तु कटुक उष्णो वातप्रशान्तिकृत् ।
नेत्रयो भेदी कफघ्नश्च कुष्ठार्शः क्रिमिघातनः ॥
अतिस्निग्धन्तु तत्तैलं स्थिरदीप्तिप्रदायकम् ।
नयनामयवातार्त्तिकुष्ठकण्डूव्रणप्रणुत् ।
सर्वचर्म्मामयहरं रक्तपित्तविवर्द्धनम् ॥

महाकरञ्जः ।

महाकरञ्जः षड्ग्रन्था विषघ्नी हस्तिचारिणी ।
रसायनी च काकघ्नी सुमना मदहस्तिनी ॥
हस्तिकरञ्जकः काकभाण्डी मधुमती तथा ।
तीक्ष्णोष्णः कटुरेष स्याद्विषकण्डूव्रणप्रणुत् ॥
अस्य मूलत्वग् ग्राह्या, मात्रा १ माषकः ।

ढोलसमुद्रिका ।

ढोलसमुद्रिका प्रोक्ता कीटादीना विषप्रणुत् ॥

## अथ क्षतघ्नवर्गः।

### भद्रवल्ली।

भद्रवल्ली ग्रातभीरुर्भूमिमण्डोऽष्टपादिका।
व्रणं भग्नामय नाडीव्रणमेषा विनाशयेत्॥

### पीतिका।

पीतिकारुणनागस्य सा स्याद्व्रणनिसूदनी॥

### सितनागः।

क्षतघ्नः सितनागः स्याद्भग्नामयनिकृन्तनः॥

---

## अथ पुष्पवर्गः।

### मरुवकः।

मारुतोऽसौ मरुवको मरुन्मरुरपि स्मृतः।
फणी फणिज्झकश्चापि प्रस्थपुष्पः समीरणः॥
मरुदग्निप्रदो हृद्यस्तीक्ष्णोष्ण. पित्तलो लघुः।
वृश्चिकादिविषश्लेष्मवातकुष्ठक्रिमिप्रणुत्।
कटुपाकरसो रुच्यस्तिक्तो रूक्षः सुगन्धिकः॥

---

## अथ फलवर्गः।

### गण्डगात्रम्। हिन्दी सरिफा।

गण्डगात्रं हिमं हृद्यं वातपित्तनिसूदनम्।
श्लेष्मलं तर्पणमनं वान्त्युत्क्लेशनिशातनम्॥

---

अथ शाकवर्ग: ।

ग्रीष्मसुन्दरक: ।

ग्रीष्मसुन्दरकस्तिक्तो लघु: पित्तकफप्रणुत् ।
रुचिकृत् कामलापाण्डुज्वरप्लीहनिकृन्तन: ॥

शालिञ्च: ।

शालिञ्च: शितसारश्च शालञ्चो लोहसारक: ।
शालिञ्चो दीपनस्तिक्त: प्लीहार्श:कफवातनुत् ॥

——

अथ मांसवर्ग: ।

मांसरस: ।

सिद्धमांसरसो हृद्य: श्रमश्वासक्षयापह: ।
प्रीणनो वातपित्तघ्न: क्षीणानामल्परेतसाम् ॥
विश्लिष्टभग्नसन्धीनां शुद्धानां शुद्धिकाङ्क्षिणाम् ।
स्मृत्योजोबलहीनानां ज्वरक्षीणक्षतोरसाम् ।
शस्यते स्वरहीनानां हृद्यायु:श्रवणार्थिनाम् ॥

——

अथ मधुवर्ग: ।

पद्ममधु ।

अरविन्दाहृत: शीतो मकरन्दोऽतिबृंहण: ।
त्रिदोषशमन: सर्वनेत्रामयनिसूदन: ॥

——

## अथ क्षारलवणवर्गः ।

### चूर्णम् ।

चूर्णोऽस्त्री चूर्णकं वातश्लेष्मभेदःप्रशान्तिकृत् ।
हन्त्यम्लपित्तं शूलञ्च ग्रहणीञ्च व्रणं क्रिमीन् ॥
चतुःकर्षमिते चूर्णे तोये पञ्चशरावके ।
क्षिप्ते चूर्णोदकं तत् स्यात् प्रहरद्वयसंस्थितम् ॥
सदुग्धं चूर्णसलिलं मधुमेहे हितं मतम् ।
अम्लपित्ते च शूले च पथ्यमप्यौषधञ्च तत् ॥

### शङ्खादिभस्म ।

शुक्तिमौक्तिकशङ्खानां शम्बूकक्षुद्रशङ्खयोः ।
नाभिशङ्खस्य च तथा भस्म चूर्णगुणं मतम् ॥

### क्षारमृत्तिका ।

पित्तदाहकरी पाण्डुजननी क्षारमृत्तिका ॥

---

## अथ रत्नोपरत्नवर्गः ।

### मुक्ता ।

मुक्ता स्त्री मौक्तिकं सौम्या शौक्तिकेयं शशिप्रभम् ।
अम्भःसारमिन्दुरत्नं लक्ष्मीर्मुक्ताफलं हिमम् ॥
भौतिकं तौतिकं तारं स्वच्छं तारा च मुक्तिका ॥
मुक्ता कषाया स्वाद्वी च बलपुष्टिप्रदायिनी ।
वृष्या नेत्रहिता राजयक्ष्मघ्नी विषनाशिनी ।
स्त्रीणां कान्तिरतिकरी धारणाद्ग्रहपापनुत् ॥

प्रवालः।

प्रवालोऽस्त्री भौमरत्न रत्नाकारो लतामणिः।
विद्रुमोऽङ्गारकमणी रत्नाङ्गाम्भोधिवल्लभौ॥
प्रवालो मधुरोऽम्लश्च कषायश्च सरो हिम.।
चक्षुष्यः कफपित्तादिदोषघ्नः कासनाशनः॥
धनोऽसौ योषितां वीर्य्यकान्तिश्रद्रतिवर्द्धनः।
पापालक्ष्मीप्रशमनो ग्रहदोषनिवर्हणः॥

——

अथ विषोपविषवर्गः।

नेपालशृङ्गी।

नेपालशृङ्गी नैपाली हन्ति सा कफजान् गदान्।
वातजान् निखिलांश्चापि सन्निपातोद्भवं ज्वरम्।
आमवातं महाघोरं हृद्रोगमपि दारुणम्॥
अस्य मूलं ग्राह्यं, मात्रा १ रक्तिका।

——

इत्यायुर्वेदविज्ञाने द्रव्यस्थानं समाप्तम्।

श्रीश्रीमन्महाराजाधिराजवर्द्धमानप्रदेशाधिपतिबाहादुरेणानु-

मोदितोऽनुज्ञातश्च

## श्रीविनोदलालसेनकविराजस्य

कलिकाताराजधान्यन्तर्गतफौजदारीबालाखानाभिधस्थानमध्यवर्त्ती

## २६ संख्यकभवनस्थितायुर्वेदौषधालयः,

तत्संक्रान्तौषधादिमूल्यनिरूपणञ्च ।



प्रायः पञ्चदशवत्सराण्यतीतान्यौषधालयोऽयं संस्थापितः । अत्राचिरत्न साध्यातिरिक्तव्ययमक्लान्तश्रममपरिमितयत्नञ्च स्वीकृत्य शास्त्रोक्तानि नानाविधौषधतैलघृतचूर्णमोदकासवारिष्टानि, सर्वविध-जारितधातुद्रव्याणि, आयुर्वेदशिक्षोपयुक्तानि विविधपुस्तकानि च

प्रस्तुतीकृत्य नियमितमूल्येन विक्रीयन्ते । सदोपस्थितेनात्र केनचिद्‌-युक्तचिकित्सकेन रोगिभ्यो रोगनिवारणोपयोगिनी व्यवस्था प्रदीयते । विदेशस्थरोगिणां पीड़िताबस्थाया परिज्ञातायामस्माभिरुपयुक्ता रोगशान्तिकरी व्यवस्था विदेशेऽपि प्रेष्यते । अधुना कृपालुभिः सहृदयजनगणैरस्मभ्य उत्साहे प्रदत्ते श्रमोऽस्माकं सफलीभविष्यति ।

प्रत्यह प्रातरत्र समागतान् पीड़ितजनान् सयत्नं परीक्ष्य विना मूल्यं तेभ्यो रोगशान्त्यर्थं व्यवस्थौषधञ्च प्रदीयते ।

प्रथम मूल्य प्रेरणादिव्ययञ्चाप्राप्यौषधादीनां विदेशप्रेरणं सर्वथा निषिद्ध, प्राप्ते त्वादेशे भ्यालिउ पेयेबल-पार्शेल-नामकेनोपायेन तानि प्रेरयितव्यानि ।

औषधपुस्तकादिक्रयार्थं नोट-मनिअर्डर-पत्रादीनि निम्नलिखितेन मन्नाम्ना प्रेरयितव्यानि ।

अस्माक नवाविष्कृतौषधव्यवहारेण प्राप्तोपकारैर्लब्धप्रतिष्ठजनगणैर्मह्यं प्रदत्तानि बहूनि प्रशंसापत्राण्यत्र बाहुल्यभयेन न मुद्रितानि । तैरलङ्कृतान्यस्माकं वङ्गहिन्दीप्रभृतिमूल्यनिरूपणपुस्तकानि प्रेरणव्यये (डाकमाशुल अर्द्ध आना) प्रदत्ते सर्वजनैः प्राप्तव्यानि ।

इंरेजीभाषया पत्रादौ लिखिते सति तत्रानभिज्ञतयास्माकं कर्मचारिणः सत्वरमभिप्रेतमर्थं साधयितुं शक्नुवन्ति । सर्वैरस्मभ्यः पत्राणि तथैव लिखितव्यानि यथा तान्यस्माकं विदितार्थानि भवन्ति ।

गुप्तोपाधिकस्य

**श्रीविनोदलालसेनकविराजस्य**

आदि आयुर्वेदौषधालय',

फौजदारीबालाखाना, कलिकाता ।

# नवाविष्कृतान्यौषधानि।

## अश्वगन्धारसायनम्।

जराव्याधिनाशकमौषधमिदमाग्नेयत्वं रक्तशोधकं, शुक्रजनकं, जीवनीशक्तिसंवर्द्धकञ्च। सेवनादस्य दीर्घकालीनपीडाजनिता वा स्वाभाविकी देहक्षीणता रक्तहीनता च, स्नायविकं शारीरिकञ्च दौर्बल्यं, शिरोघूर्णनं, दर्शनश्रवणशक्तेरल्पता, शुक्रमेहः, शुक्रतारल्यं, नारीणां प्रसवान्ते कारणान्तरवशतो वा जाता दुर्बलता कृशता चेत्यादि उपशाम्यति, भवति च शरीरं हृष्टपुष्टं बलिष्ठञ्च। बालवृद्धवनितानां सर्वावस्थास्वनायासं सेव्यमिदम्।

| | | | |
|---|---|---|---|
| क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् | ... | ... | १॥० |
| प्रेरणव्ययः ( डाकमाशुल ) | ... | ... | ।।।⁄ |

## इच्छाभेदिनी वटिका।

सेवनेनास्याः कोष्ठाश्रितवायुर्ज्वरोऽर्शोऽजीर्णं यकृत् पाण्डुः शोथो वातः शिरःपीडा विकृतरक्तता विकृतपित्तता चोपशाम्यति, निःसन्देहमारोग्यमाप्नुवन्ति च कोष्ठबद्धजनिताः सर्वाः पीडाः। यतो मलबद्ध एव सर्वरोगाणां कारणं, कोष्ठेऽविशुद्धे न कश्चिदपि रोग औषधैरुपशाम्यत्यतः सर्वरोगशान्त्यर्थं प्रथमं विरेचनमिदमवश्यं व्यवहार्य्यम्। औषधमिदं बालयुववृद्धानां सुस्थायामपि पीडितायाञ्चावस्थायां निर्विघ्नं सेव्यम्।

| | | | |
|---|---|---|---|
| क्षुद्रैकपात्रस्य (१ कौटा) मूल्यम् | ... | ... | ॥० |
| प्रेरणादिव्ययः (डाकमाशुलादि) | ... | ... | ।० |

## उदयभास्कररलवणम् ।

अस्य सेवनतो गुल्मामाष्ठीला वाताष्ठीला-प्लीहयकृत्प्रभृतीनामुदर-मध्यस्थानामाकृतियुक्तानां बहुकालस्थायिनामपि सोपद्रवाणामपि च सर्वविधरोगाणां नूनं शान्तिर्भवति ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १।०
प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ।/

## ऋषभकवटिका ।

धातुस्थविषमज्वराणां, प्लीहयकृज्जनितज्वराणां, विशेषतस्था-वैधकुद्दनाद्दनसेवनोत्पन्नसर्वविधज्वराणां महौषधमियम् ।

क्षुद्रैकपात्रस्य ( १ कौटा ) मूल्यम् ... ... १)
प्रेरणव्ययः ( डाकमाशुल ) .. ... ।०

## कर्पूरासवः ।

सेवनादस्य विसूचिकाप्रबलातिसारामाशयाग्निमान्द्याजीर्णप्रभृ-तीनां पीडानामाशूपशमो भवति । विसूचिकायाः प्रारम्भात् सेविते-ऽस्मिन् रोगोऽयं न प्रबलो मारात्मकश्च भवेत् ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... ॥०
प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ।/

## कालीयकद्रवः ।

नियमेन व्यवहारादस्य नेत्राभिष्यन्द-चक्षुर्मांसवृद्धि-क्षत-जलस्रावा-दूरदर्शनप्रभृतयः सर्वे चक्षूरोगाः सत्वरमुपशाम्यन्ति ।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १)
प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ।/

## कुङ्कुमासवः ।

आसवोऽयं मूर्च्छापस्मार योषापस्मार-चित्तविकार-शिरोघूर्णनप्रभृतीनां रोगाणामाशुनिवारणोपायः ।

कुट्रैककाचकूप्याः (१ शिशि) मूल्यम् ... ॥०

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ।⁄

## कुन्तलवृष्यतैलम् ।

बहुदिवसानि केशतत्त्वं पर्य्यालोच्य महोपकारि तैलमिदमस्माभिः प्रस्तुतीकृतम् । नियमेन व्यवहारादस्य केशहीनता केशस्याकालपक्कता चोपशाम्यति, भवति च केशो वर्द्धितः सुशोभितश्च, मस्तकघूर्णनप्रभृतयश्च शिरोरोगा आरोग्यमायान्ति, भवति च मस्तकं सुशीतलं, चक्षुर्ज्योतिश्च वर्द्धते । सुगन्धि तैलमिदमेवंविधभिन्नदेशीयतैलेभ्योऽपि विशेषफलप्रदम् ।

कुट्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १)

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ।⁄

## मुष्कवृद्धेर्महौषधम् ।

व्यवहारतोऽस्य ज्वराद्युपसर्गयुक्तायाः मुष्कवृद्धिपीडायास्तज्जनितपुरुषत्वह्रासस्य च प्रशमो भवति ।

कुट्रैकपात्रस्य ( १ कौटा ) मूल्यम् ... ... १)

प्रेरणव्ययः ( डाकमाशुल ) ... ... ।)

## क्षतान्तकतैलम् ।

तैलमिदं दुष्टक्षतनालीव्रणधूर्त्तार्शःक्षतभगन्दरपीनसमुखरोगकर्णक्षतप्रभृतीनां सर्वविधक्षतरोगाणां सत्वरनिवारणक्षमम् ।

कुट्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १)

प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ।⁄

## क्षीरोदखाद्यम्।

औषधसेवनं विनाप्यस्य भक्षणेनोदरामयाम्लपित्तशूलमूत्राशययकृत्-पीडा-प्लीहज्वर-कोष्ठबन्ध-प्रमेह-रक्तपित्त-कास-श्वास क्षयरोगकर्णरोग-मुखरोगाधिकचिन्ताध्ययनजनितमस्तिष्कबलहानि—चित्तविकार-निद्रा॰ नाश-सूतिका-प्रदर-कष्टरजः प्रभृतीनां पीडाना बालकोदरामयप्रभृति॰ पीडानाञ्च प्रशमः स्यात्, भवति च क्षुधावृद्धिः सुनिद्राहारे रुचिश्च। बालदुर्बलपीडितानामेतद्भिन्नं लघुतरं पुष्टिकरञ्च पथ्यं नाद्यापि प्रकाशितम्।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... ॥०
प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ॥⁄

---

## जम्बीरद्रावकम्।

सेवनेनास्य दीर्घकालस्थायिपीडायाः कारणान्तरजातपीड़ायाश्च, स्त्रीगर्भकालीनारुचिवमनेच्छाग्निमान्द्योदराध्मानप्रभृतीनाञ्च प्रशमः स्यात्, भवति चाहारे रुचिः क्षुधावृद्धिश्च। अधिकन्तु ग्रीष्मकाले सेवितेऽस्मिन् तत्क्षणमेव नराणां ग्रीष्मनिवारणं, शरीरञ्च सुशीतलं भवति।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... १⁄
प्रेरणादिव्ययः ( डाकमाशुलादि ) ... ... ॥⁄

---

## दद्रुहरचूर्णम्।

चूर्णेनानेन सर्वाङ्गस्थाना सर्वेषां दद्रुरोगाणां प्रशान्तिर्भवति।

क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् ... ॥०
प्रेरणव्ययः ( डाकमाशुल ) ... ... ।⁄

---

## दन्तशोधनचूर्णम् ।

अस्मिन्नियमेन व्यवहृते दन्तमूलस्य स्फीतता शिथिलता वेदना चतश्च तस्मात् पूयरक्तादिस्रावश्च प्रशाम्यति, क्रिमिदन्तकस्यारोग्यमायाति, मुखदुर्गन्धश्च दुरीभवति, दन्ताः शुभ्रवर्णाश्च भवन्ति ।

| | | |
|---|---|---|
| क्षुद्रैकपात्रस्य ( १ कौटा ) मूल्यम् | ... | ॥৵ |
| प्रेरणव्ययः (डाकमाशुल्क ) | ... ... | ।৶ |

---

## दार्व्यादिकषायः ।

व्यवहृते चास्मिन् यकृद्वृद्धिर्यकृच्छूलं यकृज्जनितज्वरश्च प्रशममाप्नोति, प्रशाम्यन्ति च मुखनेत्रादिपाण्डुवर्णत्व-कोष्ठबद्धोत्क्लासाहाराऽरुचि निद्रानाश-शारीरिकदौर्बल्य-प्रभृतयो विविधरोगाः ।

| | | |
|---|---|---|
| क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् | ... | १।৵ |
| प्रेरणादिव्ययः ( डाकमाशुलादि ) | ... ... | ॥৶ |

---

## धातुक्षय-ध्वजभङ्गयोर्महौषधम् ।

नराणामिन्द्रियपरतन्त्रतया वा यौवनस्वभावसुलभदोषवशतोऽपरिमितशुक्रक्षयाज्जातं धातुतारल्यं पुरुषत्वहीनत्वञ्च व्यवहारेणास्य सम्पूर्णं प्रशाम्यति ।

| | |
|---|---|
| मासैकव्यवहारोपयोगिनो द्विविधौषधस्य तैलस्य च मूल्यम् | ६৲ |
| प्रेरणादिव्ययः ( डाकमाशुलादि ) ... | ॥৶ |

---

## नलिनासवम् ।

सेवनेनास्य नारीणां सूतिकाजनिताग्निमान्द्योदरामयज्वरशोथाऽरुचिप्रभृतीनां रोगाणामाशु प्रशमो भवति, प्रशाम्यन्ति च सर्वविधा जीर्णग्रहणीरोगाः, शरीरञ्च हृष्टपुष्टं चित्तञ्च प्रफुल्लं भवति ।

| | | |
|---|---|---|
| क्षुद्रैककाचकूप्याः ( १ शिशि ) मूल्यम् | ... | १॥० |
| प्रेरणादिव्ययः ( डाकमाशुलादि ) | ... | ।৶ |

## पथ्यादिवटिका।

सेवनेनास्या वह्निर्वल्यन्तर्बहिर्जातानि सर्वविधान्यर्शांसि प्रशाम्यन्ति, तज्जनिततीव्रवेदनाच्छ्वाबारक्तपूयनिर्गमकोष्ठबद्धप्रभृतीनामुपद्रवाणां सर्वेषामुपशमो भवति च। अतिदीर्घकालीनमर्शोऽप्यस्य व्यवहारतो याप्यो भवति।

| | | | |
|---|---|---|---|
| एकैकपात्रस्य (१ कौटा) मूल्यम् | ... | ... | २) |
| प्रेरणव्ययः (डाकमाशुल) | ... | ... | ।० |

---

## पाशुपतचूर्णम्।

नियमेनास्य धूमे गृहीते वर्त्तमानश्वासस्य वेगस्तज्जनिता मर्मभेदिनी वेदना च तत्क्षणमेव प्रशाम्यति। श्लेष्मकासप्रभृतिरोगाक्रान्तानां रुग्णे चूर्णस्यास्य धूमे प्रदत्ते बहूपकारा भवन्ति।

| | | | |
|---|---|---|---|
| एकैककाचकूप्याः (१ शिशि) मूल्यम् | ... | ... | १) |
| प्रेरणादिव्ययः (डाकमाशुलादि) | ... | ... | ।० |

---

## प्रमेहान्तकवटिका।

सेवनेनास्याः प्रबलावकालीनक्षणस्तत्कालीनज्वाला च, मुहुर्मुहुः मूत्रावेगो रक्तसपूयधातुनिस्रवश्च प्रशाम्यति, ज्वराद्युपद्रवयुक्ताः सर्वविधा औपसर्गिकप्रमेहाश्च सत्वरमारोग्यमावान्ति च।

| | | | |
|---|---|---|---|
| एकैकपात्रस्य (१ कौटा) मूल्यम् | ... | ... | १॥० |
| प्रेरणव्ययः (डाकमाशुल) | ... | ... | ।० |

---

## बहुमूत्र-मधुमेहयोर्महौषधम्।

निम्नलिखितानां वटिकाघृततैलानां व्यवहारेण सर्वेषां बहुमूत्राणां, दौर्बल्य हस्तपदादिज्वालामस्तिष्कबलहीनतापुरुषत्वहानि-प्रभृत्युपद्रवसं-

युक्तानां सर्वविधानां मूत्राधिक्यानां प्रमेहपीडानाञ्च सम्यक् प्रशान्ति-र्भवति ।

मासैकव्यवहारोपयुक्तानां द्विविधवटिकाघृततैलानां मूल्यम् १३)
प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ३।०

---

## वातरक्त-कुष्ठरोगयोर्महौषधम् ।

हस्तपदादिषु ज्वाला गात्राभ्यन्तरे पिपीलिकादिगतेरनुभवो गात्रे विशेषतश्च गण्डादिषु चक्राकारचिह्नोत्पत्तिरित्यादिलक्षणसंयुक्ताः सर्वविधा वातरक्तकुष्ठरोगा एतदौषधव्यवहारेण सत्वरं प्रशाम्यन्ति ।

मासैकव्यवहारोपयुक्तौषधतैलानां मूल्यम् ... ८
प्रेरणादिव्यय. (डाकमाशुलादि) ... ... १॥०

---

## वासामृतम् ।

सेवनेनास्य श्लेष्मोत्कास-सर्वविधकास-वक्षोवेदना-श्वासकृच्छ्र-रात्रि-कालीनघर्म-प्रभृतीनां रोगाणां चाशु प्रशान्तिर्भवति ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... ... १)
प्रेरणादिव्ययः (डाकमाशुलादि) .. ... ।✓

---

## विडङ्गाष्टकम् ।

सेवनतोऽस्यान्त्रस्थाः सर्वविधाः क्रिमयो सम्यक् विनश्यन्ति, क्रिमिजनिताजीर्ण-मुखजलोद्गम-वमनोद्वेग ज्वरोदरामय—शूलप्रभृतीनां निवारणं भवति च ।

क्षुद्रैकपात्रस्य (१ कौटा) मूल्यम् ... ... ॥०
प्रेरणव्ययः (डाकमाशुलि) ... ... ... ।०

---

## भूनिम्बादिकषायः ।

दूषितजलवायु(म्यालेरिया)जनितज्वर-सर्वविधपुरातनज्वर-विषम-ज्वर-प्लीहघटितज्वर पर्य्यायज्वर प्रभृतीनां तत्संयुक्तप्लीहयकृदादीना-मारोग्यकारकं महौषधमिदम् ।

| | | | |
|---|---|---|---|
| क्वाथैककूप्याः (१ बोतल) मूल्यम् | ... | . | १) |
| प्रेरणादिव्यय (डाकमाशुलादि) | .. | ... | ॥৶ |

---

## उत्कृष्टः स्वर्णघटित. षड्गुणबलिजारितो मकरध्वजः स्वर्णसिन्दूरं वा ।

अनुपानविशेषेण सह सेवितेऽस्मिन् महौषधे जीर्णज्वर-हस्त-पदादिज्वाला-निद्राहीनतावायुरोगप्रमेहशुक्रतारल्यमानसिकचिन्ताध्य-यनजनितदौर्बल्यमस्तिष्कबलहीनताशिरःघूर्णनावृद्धावस्थाजातसर्वविध-रोगाणां सत्वरं प्रशमो भवति ।

| | | | | |
|---|---|---|---|---|
| सप्तमात्राया मूल्यम् | ... | ... | ... | १) |
| एकतोलकस्य मूल्यम् | ... | ... | ... | २४) |
| प्रेरणव्यय (डाकमाशुल) | | ... | ... | ।० |

---

## मधूल्यादिघृतम् ।

घृतेनानेन पारादोषजनितान्यौपदंशिकक्षतानि, अपराणि च सर्वाणि क्षतानि, नालीव्रणानि च प्रशमुपयान्ति ।

| | | | |
|---|---|---|---|
| क्षुद्रैकपात्रस्य (१ कौटा) मूल्यम् | ... | ... | ॥० |
| प्रेरणव्ययः (डाकमाशुल) | ... | ... | ।० |

---

## मालतीतैलम् ।

तैलमिदं चित्तचाञ्चल्योन्माद मूर्च्छा-स्त्रीगुल्मवायु(हिष्टिरिया)-कर्त्तव्यकर्मकरणानिच्छा-विषण्णतातिक्रोध-भयङ्कर-मनोविकाराणाम्,

अनुचितशुक्रक्षयातिमादकसेवनजनितरोगाणां, स्नायविकदौर्बल्यक्रोधा-श्रितवायु वायुजनितग्रहणी-वाताष्ठीला-श्वासप्रमुखा रोगाणाञ्च निवा-रणक्षमम्।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... ४)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।।/

---

## मुस्तकादिचूर्णम्।

सेवनादस्य शिशूनामजीर्णोदराध्मानामाशयरक्तामाशयमलता-दवप्रभृतय उदररोगा सत्वरं प्रशममायान्ति।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... ॥०

प्रेरणादिव्यय (डाकमाशुलादि) ... ।/०

---

## मृगमदरसायनम्।

प्रयोगेणास्य घर्माधिक्यप्रलापहिक्काचैतन्यलोपहिमाङ्गनाडीक्षया-दिविपज्जनककोपसर्गसंयुक्ता ज्वर-विकार-विसूचिकातिसारप्रभृतयो रोगाः सत्वरमुपशाम्यन्ति।

क्षुद्रैककाचकूप्या. (१ शिशि) मूल्यम् ... २)

प्रेरणादिव्यय. (डाकमाशुलादि) ... ... ।।/०

---

## मृगाङ्कद्रवः।

व्यवहारेणास्य राजयक्ष्मक्षयकासादिप्रबलकासरोगा ज्वरनिष्ठी-वनपार्श्ववेदनाद्युपद्रवसंयुक्ता अपि सत्वरं प्रशाम्यन्ति, भवति च शरीरं हृष्टपुष्टं बलिष्ठञ्च। महौषधमिदं शिशूनां घुंडीप्रभृतिकासरोगेषु विशिष्टफलप्रदं, कासप्रनष्टधातुविशिष्टनराणाञ्च कामप्रबलतानिवा-रकम्।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... १॥०

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।।/

## रक्तातिसारामरक्तग्रहणीरोगयोर्महौषधम् ।

महौषधमिदं ज्वरशोथारुचिप्रभृत्युपद्रवसंयुक्तानामपि सर्वविध-रक्तातिसारामरक्तग्रहणीरोगाणां निवारणक्षमम् ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... २)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।॥४

## वाताादिमर्दनम् ।

नियमेनास्मिन् मर्दिते सर्वविधवात-पृष्ठपार्श्वकटिजानुप्रभृतिजात वेदनाघातपतनजनितवेदनाफिक्वेदनादीनां सत्वरं शान्तिर्भवति ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... १)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।४

## लोमशातनचूर्णम् ।

लोमस्थाने प्रदत्तेऽस्मिन् क्लेशं विना तत्क्षणमेव लोमानि निर्मूलानि भवन्ति । ग्रीवाकपोलप्रभृतिकोमलस्थानेष्वपि निर्विघ्नं व्यवहार्य्यमिदम् ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... ॥०

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।०

## शूलसंहारचूर्णम् ।

नियमपूर्वकं सेवितेऽस्मिन् बहुदिनोत्पन्नमतियन्त्रणादायकं शूलमम्लपित्तञ्च वमिकोष्ठबन्धप्रभृत्युपद्रवसंयुक्तमपि शीघ्रमुपशाम्यति ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... ... २)

प्रेरणादिव्ययः (डाकमाशुलादि) ... ... ।४०

## सारस्वतारिष्टम् ।

सेवनेनास्य स्मृतिशक्तिवृद्धि, स्वरशुद्धि, स्पष्टभाषण, शरीरबल-वीर्य्यपुष्टिकान्तिवृद्धिश्च भवति, प्रगाढाध्ययनाधिकचिन्ताशुक्रतारल्य-प्रभृतिजनिता मस्तिष्कहीनबलता पुनः शीघ्रं स्वाभाविकं बलमाप्नोति, स्वल्पमेधासम्पन्नबालकबालिकानामधिकाध्ययनशीलच्छात्राणाञ्च बुद्धि-स्तीक्ष्णा मेधा बलवती चित्तञ्च सबलं भवति, कर्कशस्वरजनाश्च सुस्वर-माप्नुवन्ति, स्त्रीपुरुषाणामपत्योत्पादनहीनता प्रशाम्यति च ।

क्षुद्रैककाचकूप्या. (१ शिशि) मूल्यम् ... १

प्रेरणादिव्यय (डाकमाशुलादि) ... ... ॥~~/~~०

---

## सारिवादिकषायः ।

व्यवहृतेऽस्मिन् वातरक्तदोषपारददोषोपदंश-पीनस-दुष्टक्षतार्श-क्षत-भगन्दर-प्रभृतय. सर्वविधक्षतरोगाः प्रशमं यान्ति, दौर्बल्यं स्फूर्त्तिहीनता च दूरीभवति, शरीरञ्च हृष्टपुष्टं चित्तञ्च प्रफुल्लं भवति । प्रधानं बलकारकं रक्तपरिष्कारकञ्चौषधमिदम् ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् ... १॥०

प्रेरणादिव्यय. (डाकमाशुलादि) ... ... ॥~~/~~०

---

## सुधांशुद्रवः ।

व्यवहारेणास्य मुखमण्डलस्य विकृतचिह्नं व्रणञ्च विदूरीभवति, शुष्कत्वच. कोमलतया परिष्कृततया च मुखश्रियो वर्णस्य च प्रकर्षो जायते, गात्रकण्डूप्रभृतयः सर्वे चर्मरोगाश्चारोग्यमायान्ति । औषध-मिदं केवलशुद्धिज्जात् प्रस्तुतीकृत सद्गन्धयुक्तञ्च ।

क्षुद्रैककाचकूप्याः (१ शिशि) मूल्यम् .. ॥०

प्रेरणादिव्ययः (डाकमाशुलादि) .. .. ।~~/~~०

---

## सुरसुन्दरीवटिका (सर्वविधस्त्रीरोगाणां महौषधम्)।

महौषधमिदं रक्तश्वेतप्रदरबहुरजःबाधकगर्भस्रावप्रभृतीनां सर्वविधस्त्रीरोगाणामारोग्यकारणम्। कल्याणकरी वटिकेयं सर्वशरीरस्थशोणितं शोधयित्वा जरायुस्थसर्वरोगाणामारोग्यं विदधाति।

क्षुद्रैकपात्रस्य ( १ कौटा ) मूल्यम् .. २)
प्रेरणव्ययः (डाकमाशुल) ... .. ।०



## प्रसिद्धान्यौषधानि।

| नाम | | | | मूल्यम् |
|---|---|---|---|---|
| अभयालवणम् | .. | .. | ७ मात्राः | २) |
| कस्तूरीभैरवम् | .. | ... | ७ वटिकाः | २) |
| गुडपिप्पली | ... | ... | ७ मात्राः | १) |
| गुडूच्यादिलौहं | ... | ... | ७ वटिकाः | ॥० |
| चतुर्मुखम् | ... | ... | ,, | १ |
| चन्द्रोदयमकरध्वजः | ... | ... | ,, | ३) |
| चिन्तामणिचतुर्मुखं | ... | ... | ,, | २) |
| जयमङ्गलरसः | ... | ... | ,, | ३) |
| ज्वरकुञ्जरपारीन्द्ररसः | | ... | ,, | २॥० |
| ज्वराङ्कुशः | ... | .. | ,, | १॥० |
| ज्वरान्तकरसः | ... | ... | ,, | २) |
| त्रैलोक्यचिन्तामणि | | ... | ,, | ४) |
| धात्रीलौह | . | ... | ७ मात्राः | १।० |
| पूर्णचन्द्ररस | . | ... | ७ वटिकाः | २) |
| मृत्युञ्जयलौहं | .. | .. | ,, | २) |
| यकृत्प्लीहोदरहरलौह | | .. | ,, | १) |
| योगेन्द्ररसः | ... | ... | ,, | २) |

| नाम | | | | मूल्यम् |
|---|---|---|---|---|
| रसराजरस: | ... | ... | ७ वटिका: | २) |
| राजमृगाङ्क: | ... | ... | ७ मात्रा: | ४) |
| लक्ष्मीविलास | .. | .. | ७ वटिका: | १) |
| लोहितचूर्ण (लालगुंडा) | | .. | ,, | १, |
| वङ्गेश्वर | .. | ... | | २) |
| वसन्तकुसुमाकर | ... | ... | ,, | ४) |
| वसन्ततिलकरस. | ... | .. | ७ मात्रा | २) |
| वातचिन्तामणि. | .. | ... | ७ वटिका. | २) |
| विषमज्वरान्तकलौह: | ... | ... | ,, | २) |
| शृङ्गाराभ्रम् | ... | ... | ,, | ॥॰ |
| श्वासारिलौह: | ... | ... | ७ मात्रा: | १) |
| सर्वज्वरहरलौह: | ... | ... | ७ वटिका: | २) |
| सर्वाङ्गसुन्दररस: | ... | ... | ७ मात्रा: | २) |
| सूचिकाभरणम् | ... | ... | ७ वटिका: | १) |
| सोमनाथरस: | ... | ... | ,, | २) |

---

## अवलेह: ।

| | | | | |
|---|---|---|---|---|
| कुटजावलेह: | ... | ... | ७ मात्रा: | १) |
| च्यवनप्राश. | ... | ... | ,, | २) |
| दन्तीहरीतकी | ... | ... | ,, | १॥॰ |
| भार्गीगुड: | ... | ... | ,, | १॥॰ |
| वासावलेह: | ... | ... | ,, | १।॰ |

---

## खण्डः ।

| नाम | | | | मूल्यम् |
|---|---|---|---|---|
| कुष्माण्डखण्डः | ... | ... | ७ मात्राः | १) |
| वासाकुष्माण्डखण्ड | ... | ... | ,, | १॥० |
| वृहन्नारिकेलखण्डः | ... | ... | ,, | १) |

---

## चूर्णम् ।

| | | | | |
|---|---|---|---|---|
| अविपत्तिकरचूर्णम् | ... | ... | ७ मात्राः | १) |
| ज्वरभैरवचूर्णम् | ... | ... | ,, | १) |
| पुष्यानुगचूर्णम् | ... | ... | ,, | १॥० |

---

## मोदकः ।

| | | | | |
|---|---|---|---|---|
| कामेश्वरमोदकः | ... | ... | ७ मात्राः | १) |
| मदनानन्दमोदकः | ... | ... | ,, | १) |
| मुस्तकादिमोदकः | ... | ... | ,, | १) |
| सौभाग्यशुण्ठीमोदकः | ... | ... | ,, | १) |

---

## आसवारिष्टम् ।

| | | | | |
|---|---|---|---|---|
| चन्दनासवः | ... | ... | ८० तोला (१ सेर) | ८) |
| द्राक्षारिष्टम् | ... | ... | ,, | ४) |

---

## घृतम् ।

| | | | | |
|---|---|---|---|---|
| अमृतप्राशघृतम् | ... | ... | ८० तोला (१ सेर) | २४) |
| अशोकघृतम् | ... | ... | ,, | १२) |

| नाम | | | | मूल्यम् |
|---|---|---|---|---|
| क्षीरकल्याणघृतम् | .. | | ८० तोला (१सेर) | ८, |
| चैतसघृतम् | .. | .. | ,, | १२, |
| छागादिघृतम् | .. | ... | ,, | १६, |
| फलघृतम् | .. | .. | ,, | २४, |
| ब्राह्मीघृतम् | .. | ... | ,, | ८, |

## तैलम् ।

| | | | | |
|---|---|---|---|---|
| अङ्गारकतैलम् | ... | ... | ८० तोला (१सेर) | ८, |
| कन्दर्पसारतैलम् | . | . | ,, | ४०, |
| किरातादितैलम् | .. | .. | ,, | १६, |
| कुब्जप्रसारणीतैलम् | ... | ... | ,, | १२, |
| गुडूच्यादितैलम् | ... | ... | ,, | ८, |
| गोपालतैलम् | ... | ... | ,, | ४०, |
| ग्रहणीमिहिरतैलम् | ... | ... | ,, | १२, |
| चन्दनादितैलम् | ... | ... | ,, | १६, |
| त्रिशतीप्रसारणीतैलम् | | ... | ,, | १६, |
| दशमूलतैलम् | ... | ... | ,, | १६, |
| नारायणतैलम् | ... | ... | ,, | १२, |
| पुनर्नवादितैलम् | ... | ... | ,, | १२, |
| पुष्पराजप्रसारणीतैलम् | | ... | ,, | २४, |
| मरिचादितैलम् | ... | ... | ,, | ८, |
| महाराजप्रसारणीतैलम् | | ... | ,, | ६४, |
| महारुद्रगुडूचीतैलम् | ... | ... | ,, | १२, |
| माषतैलम् | ... | ... | ,, | १६, |
| मेहमिहिरतैलम् | .. | ... | ,, | १२, |
| लाक्षादितैलम् | ... | ... | ,, | ८, |

| नाम | | | मूल्यम् | |
|---|---|---|---|---|
| वासाचन्दनादितैलम् | ... | ... | ८० तोला. (१सेर) | १६, |
| विष्णुतैलम् | ... | ... | ,, | १६, |
| अणरात्वसतैलम् | .. | ... | ,, | ८, |
| शुष्कमूलकादितैलम् | ... | .. | ,, | १६, |
| षड्विन्दुतैलम् | .. | .. | ,, | १६, |
| दोलनादितैलम् | .. | . | ,, | ८, |
| सोमराजीतैलम् | .. | | ,, | १२, |
| क्षिनसागरतैलम् | ... | .. | ,, | ४०, |

## रससिन्दूरादि ।

| | | | | |
|---|---|---|---|---|
| मकरध्वज | ... | ... | १ तोलकः | १६, |
| रससिन्दूरम् | ... | ... | ,, | ४, |
| षड्गुणवलिजारितमकरध्वजः | | ... | ,, | १४, |
| षड्गुणसिद्धमकरध्वजः | | ... | ,, | ८०, |
| स्वर्णसिन्दूरम् | ... | ... | ,, | २० |

## धातुद्रव्यम् ।

| | | | | |
|---|---|---|---|---|
| जारिताभ्रम् | ... | ... | १ तोलकः | ८, |
| प्रवाल. | ... | ... | ,, | २, |
| मुक्ता | ... | ... | ,, | १६, |
| रौप्यम् | ... | ... | ,, | २, |
| लौह. | ... | ... | ,, | ८, |
| वङ्गम् | ... | ... | ,, | १, |
| स्वर्णम् | ... | ... | ,, | ३२, |

# श्रीविनोदलालसेनगुप्तकविराजकृतानि विक्रेयपुस्तकानि ।

---

## आयुर्वेदविज्ञानम् ।

आयुर्वेदविज्ञानस्य सूत्रस्थान, शारीरस्थान, द्रव्यस्थानं, निदान-चिकित्सितस्थानञ्चेति चत्वारि स्थानानि । अत्र प्रथमखण्डे स्थान-त्रय चतुर्थन्तु द्वितीयखण्डे विहृतम् । सुविस्तीर्णायुर्वेदस्यास्योऽय-अवश्यज्ञातव्यानां चिकित्सावक्रान्तसर्वविषयाणामाकरः ।

सूत्रस्थानं चरकसुश्रुतभावप्रकाशधन्वन्तरिनिर्घण्टप्रभृतिप्रसिद्धायु-र्वेदीयग्रन्थेभ्यः सङ्गृहीतम् । अत्रायुर्वेदप्रचारश्चेतिहासो लिखित, प्रदर्शितश्चौषधतैलादिप्रस्तुतीकरणोपायः, नाडीप्रभृतीनां परीक्षा निर्दिष्टा, विहृतानि च वमनविरेचनादीनि पञ्चकर्माणि, धातुद्रव्यादीना शोधनमारणप्रभृतीनि कार्य्याणि, रासायनिकयन्त्रशस्त्राणि च ।

शारीरस्थान शारीरविद्यासंक्रान्तविविधग्रन्थेभ्यः संगृहीतम् । अत्र मानवदेहस्थास्थिरज्जुपेशीधमनीशिरास्नायुमस्तिष्ककोष्ठरक्तप्रभृति-शारीरिकोपादानपुञ्जानां शारीरयन्त्रसमूहानाञ्च सस्थानं प्रकृति-क्रियादि च वर्णितम् । अत्र च केनाद्भुतनियमेन भुक्तद्रव्याणि परि-पच्य रक्तरूपेण परिणम्य च जीवानां जीवनानि रक्षन्ति, कथं रक्तं देहाभ्यन्तरे परिभ्रम्य देह रक्षति, कथं वा तस्य शोधन, कथ जीवानां दर्शनश्रवणादिज्ञानं, कथं वा योनिजरायुमेढ्रप्रभृतीनां जननेन्द्रियाणा संस्थानमद्भुतशक्तिश्च, केन प्रकारेण गर्भसञ्चार, कथ वा भ्रूणो जरायुमध्ये कदा कीदृगवस्थः कानि दिनानि गर्भे स्थित्वा भूमिष्ठो भवति, इत्यादयोऽवश्यज्ञातव्या विविधविषया विहृता. ।

न खलु भवति शवच्छेद विना केवलग्रन्थपाठेन शारीरविद्याया समीचीना व्युत्पत्ति. । शवपरिदर्शनाभावेऽपि शरीरप्रकृतिप्रदर्शकचित्र-दर्शनेन कथञ्चित् कार्य्यसिद्धिर्भवेदित्यालोच्य कतिपयानि शरीरप्रकृति-ज्ञापकानि चित्राण्यत्र स।न्नवेशितानि । तद्दर्शनेन तत्स्थानसाङ्केतिक-

पिक्षदर्शनेन च ग्रन्थस्या सर्वोपोक्तविषया बोधगम्या भवितव्या ।
ग्रन्थबाहुल्यभयेन प्रतिकृतिस्थानि सर्वविवरणानि नात्र विवृतानि ।

द्रव्यस्थानं चरकप्रभृतिबहुविधायुर्वेदीयग्रन्थेभ्यः संगृहीतम् । अत्र कतिपयातिरिक्तद्रव्याणामपि गुणा सन्निवेशिता । सर्वेषामत्रत्य-द्रव्याणा पर्य्यायगुणमाला व्यवहार्य्याणाञ्च सम्यक् विवृता ।

| | | | | |
|---|---|---|---|---|
| प्रथमखण्डस्य मूल्यम् | ... | ... | ... | ४) |
| द्वितीयखण्डस्य मूल्यम् | ... | . | ... | २) |
| प्रेरणव्यय (डाकमाशुल) | ... | ... | ... | ॥० |

---

## भैषज्यरत्नावली ।

आयुर्वेदीय सुप्रसिद्धग्रन्थोऽयम् । अत्र निदानोक्तसर्वरोगाणां चिकित्सापथ्यापथ्यौषधप्रस्तुतीकरणौषधप्रयोगविधि सम्यक् विवृत । परिवर्द्धितश्चाय चक्रदत्तरसेन्द्रचिन्तामणिशार्ङ्गधरप्रभृतिग्रन्थेभ्यः संगृहीतानां विविधतैलघृतधातुघटितौषधारिष्टासवादीनां, तन्त्रेभ्यो गृहीतानां विविधोद्धृतपाठानां, निदानोक्तातिरिक्तकतिपयरोगनिवारणक्षमाणां विविधौषधानाञ्च सन्निवेशेन ।

| | | | | |
|---|---|---|---|---|
| खण्डैकस्य मूल्यम् | ... | ... | ... | ४ |
| प्रेरणव्ययः (डाकमाशुल) | ... | ... | ... | ।० |

---

## हारीतसंहिता ।

आयुर्वेदीय सुप्रसिद्ध प्राचीनो ग्रन्थोऽयम् । अत्र रोगसमूहाना-मुत्पत्तिकारणलक्षणचिकित्सा–पथ्यापथ्यव्यवस्थाप्रभृतयो सर्वविषयाः सम्यक् विवृताः ।

| | | | | |
|---|---|---|---|---|
| खण्डैकस्य मूल्यम् | ... | ... | ... | २) |
| प्रेरणव्ययः (डाकमाशुल) | , | ... | ... | ।० |